REPRODUCTION OF EARLIE EDITION OF THE
SABDARTHACINTAMANIH

# शब्दार्थचिन्तामणिः

# SABDARTHACINTĀMANIH

प्रथम खण्ड

भाग - ब

ब्राह्मावधूत श्रीसुखानन्दनाथः

प्रिन्टवैल

जयपुर- 302 004

Published by
**PRINTWELL**
S-12 Shopping Complex
Tilak Nagar Jaipur 302 004

Distributed by
RUPA BOOKS PVT LTD
H O S-12 Shopping Complex Tilak Nagar Jaipur 302 004
B O 295-B Bharti Nagar P N Pudur Coimbatore - 641 041

ISBN 81 7044-369 5 (Set)

**SABADARTH CHINTAMANI**
First Published 1860
Reprint 1992

***Printed at***
**Efficient Offset Printers**
215, Shahzada Bagh Indl Complex,
Phase-II, Phone 533736, 533762
Delhi 110035

राजनि ॥ मयूरे ॥ अग्नौ ॥ मनसि ॥ शरीरे ॥ काले ॥ धने ॥ शब्दे ॥ प्रकाशे ॥ न । सुखे ॥ शिरसि ॥ जले ॥ कायति । कयतिवा । कैशब्दे । कयद्योसौ २ अन्येभ्योपीतिडः ॥ ककारे ॥

कंसकः । पु । कम्सखार्थेषु ॥

कंसः । पुं । उग्रसेनसुतेऽसुरविशेषे । श्रीकृष्णमातुले ॥ पु । न । तैजसद्रव्ये । स्वर्णरजतादिनिर्मिते पात्रमात्रे ॥ ताम्ररङ्गमिश्रितधातुविशेषे । कांस्ये । काँसा काँसी इतिभाषा ॥ आढकपरिमाणे माने ॥मद्यादिपानपात्रे। पानभाजने ॥ कम्यते । कमुकान्तौ।वृद्धवदिहनिकमीतिस ॥

कंसकम् । न । नयनौषधे । पुष्पकासीसे । हीराकसीप्रभेदे ॥

कंसकारः । पुं । कसेरा इतिप्रसिद्धे जातिविशेषे ॥ अस्योत्पत्तिर्यथा । वैश्यायां ब्राह्मणाज्जातोअम्बष्ठो गान्धिको वणिक् । कांसकारशङ्खकारौ ब्राह्मणात्सम्बभूवतुः ॥ इतिवृहद्धर्मपुराणम् ॥ अपिच । विश्वकर्मा च शूद्रायां वीर्याधानं चकारसः । ततोबभूवुः पुत्राश्चनवैतेशिल्पकारिणः । मालाकारः कर्मकारः शङ्खकारः कुविन्दकः । कुम्भकारः कांसकारः षडेतेशिल्पिनोनरा

॥ इतिब्रह्मवैवर्त्तपुराणम् ॥

कंसजित् । पु । वासुदेवे । श्रीकृष्णे ॥ कंसं जयति । जिजये । क्विप् । तुक् ॥

कंसवती । स्त्री । कंसस्य भगिन्याम् ॥

कंसहा । पुं । देवकीसुते ॥ कंस हन्ति । हन्० । क्विप्चेति क्विप् ॥

कंसा । स्त्री । कंसवत्याम् । वसुदेवानुजपत्न्याम् ॥

कंसाराति. । पु । } श्रीकृष्णे ॥ कंसस्य
कंसारि. । पु । } अराति. अरिर्वा ॥

कंसास्थि । न । कांस्यधातौ ॥

कंसीयम् । त्रि । कंसायहिते ॥ छः ॥

कंसोद्भवा । स्त्री । सुगन्धिमृत्तिका विशेषे । आढक्याम् । काक्ष्याम् । सौराष्ट्राम् ॥

ककन्द । पु । कनके । स्वर्णे ॥

ककुब्जलः । पु । स्त्री । चातकखगे ॥

ककुत्स्थ । पु । सूर्यवंशजे राजविशेषे । शशादतनये । इक्ष्वाकोःपौत्रे ॥ ककुदि वृषांसे तिष्ठति । स्था० । कः ॥

ककुत् । स्त्री । वृषाङ्गविशेषे ॥ श्वेतच्छत्रादौ राजचिह्ने ॥ वरे ॥ शैलशृङ्गे ॥ कं सुखं कौति । कुशब्दे । क्विप् । तुक् । पृषोदरादित्त्वात्द ॥

ककुद । पुं । न । प्रधाने । वरे । श्रेष्ठे ॥ राजचिह्ने । श्वेतच्छत्रादौ ॥ वृषाङ्गे । वृषांसस्थस्थूलमांसपिण्डे ॥ प

वंताग्रभागे ॥ कं सुखं कौति । कु० । क्विप् । तुक । पृषोदरादि ॥

ककुद्मान् । पु । वृषे । बलीवर्दे ॥ ऋषभौषधौ ॥ पर्वते ॥ ककुदस्ति अस्य । मतुप् । यवादित्वात् नवत्वम् ॥

ककुद्मती । स्त्री । कट्याम् । पोंछा इति भाषा ॥ ककुदूपस्कन्धः । स इव मांसपिण्डं ककुत् । सोऽतिशयितोऽस्याम् । मतुप । यवादित्वात् न व ॥

ककुप् । स्त्री । प्रवेण्याम् ॥ दिशि ॥ शोभायाम् ॥ चम्पकस्रजि ॥ रागिणीविशेषे ॥ अस्या लक्षणं यथा । पीतं वसाना वसनं सुकेशी वने रुदन्ती पिकनाददूना । विलोकयन्ती ककुभोऽतिभीता मूर्त्तिः प्रदिष्टा ककुभस्तथेयमिति सङ्गीतदामोदरः ॥ कं कते । ककतीत्ये । वा कुत्सकाकुभ प्रत्ययः ॥ यद्वा । कं वातं स्कुभ्नाति विस्तारयति । स्कुभइति सौत्रः । क्विप् । पृषोदरादित्वात् सलोपः ॥

ककुभः । पुं । रागविशेषे ॥ वीणाङ्गे । प्रसेवके । वीणादण्डाधःस्थितं अब्दुगाभीर्याय दारुमयं भाण्डं यच्चर्मणाच्छाद्यते तस्मिन् ॥ अर्जुनपादपे ॥ ककुभः शीतलो भग्नक्षतक्षयविषास्रजित् । मेदोमेहव्रणान् हन्ति तुवरः कफपित्तहृत् ॥ ककुभोदिश्यः सन्त्यस्य बहुविस्तरत्वात् । अर्शआद्यच् ॥ पर्वतान्तरे ॥ कञ्च कुत्सकं कुं तेभाति । भा० । अन्तर्भावितण्यर्थः । आतोनुपेतिकः ॥

ककुभा । स्त्री । दिशि ॥ केन आदित्येन जलेन वा कुत्सितानि भानि नक्षत्राण्यत्रेति टाबन्तोपीति कश्चित् । तन्न । अधिकरणवत्त्वभौमिप्रसङ्गात् ॥ केन कुत्सिता भाति । भादीप्तौ । सुपीतिकः । भिदादित्वाद्वा ॥ रागिणी विशेषे ॥

ककुभादनी । स्त्री । नलीनामगन्धद्रव्ये ॥

ककुभः । पुं । खगान्तरे ॥

कक्कोल । पुं । न । स्वनामख्यातसुगन्धिद्रव्यविशेषे । कोलके । कांकला इतिगौडभाषा । कांकोलीइति फलकपूर इति गन्धुला इतिच प्रसिद्धे ॥ कक्कोलं लघु तीक्ष्णोष्णं तिक्तं हृद्यं रुचिप्रदम् । आस्यदौर्गन्ध्यहृद्रोगकफवातामयान्ध्यहृत् ॥ ककते । कक० । सम्पदादित्वात् क्विप् । कोलति । कुलसंस्थाने । ज्वलादित्वाण्ण । ककच तत् कोलश्च ॥

कक्कोलकम् । न । कोषफले । कक्कोले । स्थूलमरिचे ॥ स्वार्थेकन् ॥

कक्खट । त्रि । कठिने ॥ कक्खति ।

कक्खह्सने । शकादिभ्योटन् ॥
कक्खटपत्रकः । पु । पाट इतिगौड प्रसिद्धे वृक्षविशेषे । पट्टे । राजमशे ॥
कक्खटी । स्त्री । वर्णलेखायाम् । कठिन्याम् । खट्याम् । सेलखडी इति भाषा ॥
कक्ष. । पु । बाहुमूले । काख इतिभाषा ॥ वीरुधि । लतायाम् ॥ तृणे ॥ शुष्कतृणे ॥ शुष्कवने ॥ पापे ॥ कच्छे ॥ अरण्ये ॥ पार्श्वे ॥ कषति । कष्यते वा । कषहिंसायाम् । वृतवदिह निकमिकषिभ्य. स' ॥
कक्षसा । स्त्री । नागरमुस्तायाम् ॥
कक्षशायः । पु । कुक्कुरे ॥
कक्षा । स्त्री । अन्तरीयवस्त्रस्य पश्चिमे अञ्चले । अधोंशुकस्य पृष्ठतो निक्षिप्ताञ्चले ॥ स्पर्धास्पदे ॥ इभरज्ज्वाम् । गजमध्यबन्धनरज्जौ ॥ काञ्च्याम् ॥ राजद्वारप्रवेशे ॥ गेहप्रकोष्ठके ॥ भित्तौ ॥ साम्ये ॥ रथ भागे ॥ उष्णिकायाम् ॥ क्षुद्ररोग विशेषे ॥ तल्लक्षणम् । बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनाम् । पित्तप्रकोपसम्भूतां कक्षामित्यभिनिर्दिशेदिति ॥ कषति कष्यतेवा । कष० । वृत्तिसिकृतेटाप् ॥
कक्षापटः । पु । कौपीने ॥ इतिहला युध ॥
कक्षावेक्षक । पु । शुद्धान्तपाले ॥ उद्यानपाले ॥ रङ्गाजीवे ॥ कवौ ॥ षिङ्गे ॥ द्वा'स्थे ॥ कक्षाया. अवेक्षक. ॥
कक्षीवान् । पुं । स्फोटायने ऋषिविशेषे ॥ कक्ष्या अस्ति अस्य । मतुप् । आसन्दीवदष्ठीवदितिनिपातनात् कक्ष्याया. सम्प्रसारणम् ॥ कक्ष्यावान् अन्यत्र ॥
कक्षोत्था । स्त्री । भद्रमुस्तायाम् ॥
कक्ष्यम् । न । एषणिकापात्रे । काँटे की कटोरी इति भाषा ॥ इतिमिताक्षरा ॥
कक्ष्या । स्त्री । बृहतिकायाम् ॥ हर्म्यादिप्रकोष्ठे । राजगृहादेर्वेष्टनावच्छिन्ने देशे । राजगृहादीनां प्रारम्भकोष्ठके ॥ सप्तकक्ष्या अतिक्रम्येति यथा ॥ सादृश्ये ॥ कक्षरज्जौ ॥ काञ्च्याम् । मेखलादामनि ॥ यथा । परिधानाद्वहि. कक्ष्या निबद्धा ह्यासुरीमतेति ॥ मध्येभबन्धने । गजमध्यबन्धनरज्जौ ॥ यथा । हेमकक्ष्यागजा इति ॥ उद्योगे ॥ यथा । परार्थबद्धकक्ष्याणां तादृशा मुद्भव. कुत. ॥ कक्षेभवा । शरीरावयवाद्यत ॥
कङ्कः । पुं । छद्मद्विजे ॥ काँक् इतिगौडभाषा प्रसिद्धे पक्षिविशेषे । लोह

पृष्ठे । कँकच्‍डा इति भाषा॥ यमे ॥ युधिष्ठिरन्वये । अजातशत्रौ ॥ कंस भ्रातरि । उग्रसेनसुते ॥ महाराज चूते ॥ कङ्कते । ककिगतौ । अच ॥

कङ्कट. । पु । कवचे । सन्नाहे ॥ कङ्कते । ककिलौल्ये । शकादिभ्योऽटन् ॥ यद्वा । कं सुखं कटति । कटि० । मू०क ॥

कङ्कटक. । पु । सन्नाहे । तनुत्रे । वर्मणि ॥ स्वार्थेकन् ॥

कङ्कणम् । न । करभूषणे । कङा इति भाषा ॥ हस्तसूत्रे । कङ्गणा इति भाषा ॥ मण्डने ॥ गुर्व्वरे ऽ॥ कंशुभंकणति । कणशब्दे । अच् । कङ्कते वा । ककिलौल्ये । बहुलमन्यत्रापीति अनुदात्तेतश्चल्युडादेरितिवा युच् । पृषोदरादित्वात्साधुत्वम् ॥ शेखरे ॥

कङ्कणी । स्त्री । क्षुद्रघण्टिकायाम् । किङ्किण्याम् । कन्याभरणविशेषे ॥ कंगणीति भाषाप्रसिद्धे स्त्रीणांहस्ताभरणे ॥ कङ्कनम् । ककिगतौ । ल्युट् । कङ्के गतौ कणति । कण शब्दे । अच । गौरादित्वान् ङीष् । शकन्ध्वादिः ॥ यद्वा । कं सुखं कणति । कण० । पच्याद्यच् ॥

कङ्कणीका । स्त्री । प्रतिसरायाम् । क्षुद्रघण्टिकायाम् ॥ कँगणी ति प्रसिद्धे स्त्रीणांकरभूषणे ॥ चङ्कणते । कण शब्दे । अस्माद्यङ्लुगन्तात् दैङ्कि ण कङ्कणचेति ईकन् । धातो कङ्कणादेशश्च ॥

कङ्कतम् । न । प्रसाधन्याम् । कङ्घी इति भाषा ॥ कङ्कते । ककि० । बाहुलकात् अतच् ॥

कङ्कतिका । स्त्री । कङ्कते । प्रसाधन्याम् ॥ कङ्कते । ककिगतौ । बाहुलकादतच् । गौरादित्वान् ङीप् । स्वार्थे कन् । केश इति ख्यातं ॥ यद्वा । कस्य शिरसोङ्कः । शकन्ध्वादिः । कङ्कं प्वतति । क्तुन ॥ बलाभेदे । नागबलायाम् ॥

कङ्कती । स्त्री । कङ्कतिकायाम् ॥

कङ्कमोट । पुं । कौंकिया इतिगौड भाषा प्रसिद्धे मत्स्यविशेषे । जल- व्याघे ॥

कङ्कमोटि । पुं । कङ्कमोटमत्स्ये ॥ कङ्क इव त्रोटिर्यस्य ॥

कङ्कपत्रः । पुं । शरविशेषे ॥ कङ्कस्य पत्राण्येव पत्राणि यस्य ॥

कङ्कमाला । स्त्री । करतालीवाद्ये ॥

कङ्कमुखः । पुं । न । सन्दंशे । सँडसी सडाँसीतिच भाषा ॥

कङ्करः । त्रि । कुत्सिते ॥ न । तक्रे ॥ इति हेमचन्द्र ॥

कङ्करोल' । पु । निकोचकवृक्षे । अङ्कोठे । टैरा इतिभाषा ॥ काँकरोल इति गौडभाषाप्रसिद्धायां लतायाम् ॥

कङ्कशत्रु । पु । पृश्निपर्ण्याम् ॥

कङ्का । स्त्री । उत्पलगन्धिके । कृष्णताम्रे । गोशीर्षचन्दने ॥ उग्रसेनस्य कन्यायाम् । वसुदेवानुजपत्न्याम् ॥

कङ्काल । पुं । शरीरास्थि । त्वङ्मांसरहिते शरीरारम्भकेऽस्थिपञ्जरे । करङ्के । अस्थिपञ्जरे ॥ कंसुखं शिरो वा कालयति । कल क्षेपे । चुरादिः । अच् ॥ यद्वा । कङ्कते । ककि गतौ । बाहुलकात् कालन ॥

कङ्कालमाली । पु । रुद्रे । विरूपाक्षे ॥ कङ्कालमाला अस्ति अस्य । व्रीह्यादित्वादिनि. ॥

कङ्गुः । स्त्री । कांगुनी इतिख्याते कङ्गुधान्ये ॥ न । कंसासुरभ्रातरि ।

कङ्कुष्ठम् । न । पर्वतीयमृत्तिकाविशेषे । कालकुष्ठे । रङ्गदायके ॥ यथा । हिमवत्पादशिखरे कङ्कुष्ठमुपजायते । तत्रैक नलिकाख्यं स्यात् दन्यद्रेणुकसंज्ञितम् ॥ पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिमम् । श्यामपीतं लघु त्यक्तसत्त्वं नेष्टं हि रेणुकम् ॥ कङ्कुष्ठ रेचनं तिक्तं कटूष्णं वर्णकारकम् । कृमिशोथोदराध्मानगुल्मानाहकफापहमिति ॥

कङ्केरु । पु । काकविशेषे । दाक्षात्यभुजि ॥

कङ्केलिः । पु । अशोकद्रुमे ॥

कङ्केल्ल । पुं । वास्तूके ॥

कङ्केल्लि । पुं । अशोकवृक्षे । वञ्जुले ॥

कङ्कुम् । न । भोगे ॥ पापभोगे ॥

कङ्गु । स्त्री । काँगनीतिप्रसिद्धे धान्यविशेषे । प्रियङ्गौ ॥ स्त्रियां कङ्गुप्रियङ्गू द्वे कृष्णरक्तसितास्तथा ॥ पीता चतुर्विधा कङ्गूस्तासां पीतावरा स्मृता ॥ कङ्गुस्तु भग्नसन्धानवातकृद्बृंहणी गुरुः । रूक्षश्लेष्महरातीव वाजिनां गुणकृद्भृशम् ॥ कम् अङ्गति । अगि गतौ । अङ्गयति वा । मृगय्वादित्वात् कुः । शकन्ध्वादिः ॥

कङ्गुनी । स्त्री । कांगनी इतिभाषाप्रसिद्धे धान्यविशेषे । पीततण्डुले ॥ चीनके । अत्यन्तसुकुमारे ॥

कङ्गुनीपत्रा । स्त्री । तृणविशेषे । पण्यान्धायाम् ॥

कङ्गू । स्त्री । धान्यभेदे । प्रियङ्गौ ॥

कचः । पुं । केशे ॥ बृहस्पतेः पुत्रे ॥ बन्धे ॥ शुष्कव्रणे ॥ कच्यते । कच बन्धने । पुंसीति घ ॥ कचत्यात्मानं वा । पचाद्यच् ॥ मेघे इतिशब्दमाला ॥

कचङ्गनम् । न । करशून्यहट्टे । निर्मुंटे । पैंठ इतिभाषा ॥

कचङ्गल । पुं । पाथोधौ । समुद्रे ॥

कचपम् । न । तृणे ॥ पत्रे ॥ शाकपत्रे ॥ कचते । कचबन्धने । उषिकुटिदलिकचिखजिभ्य कपन् ॥

कचपच । पु । केशसमूहे ॥ पाशःपक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥

कचपाश । पुं । केशसमूहे ॥

कचरिपुफला । स्त्री । शमीवृक्षे ॥

कचहस्त । पुं । केशसमूहे ॥

कचा । स्त्री । हस्तिन्याम् ॥

कचाकुः । त्रि । दुराधर्षे ॥ दुश्शीले ॥ पुं । भुजङ्गमे ॥

कचाग्रम् । न । बालाग्रे । असरेणुभ्यष्टके ॥

कचाचितः । त्रि । विकीर्णकेशे ॥

कँचाटुरः । पुं । दात्यूहे । शितिकण्ठे ॥

कचामोदम् । न । बाला इतिप्रसिद्धे बालके ॥

कचुः । स्त्री । कच्व्याम् । अरवी कचालू इतिचभाषा ॥

कचेलम् । न । पत्रीनिबन्धने ॥

कचूटम् । न । जलपिप्पल्याम् ॥

कचरः । त्रि । मलिने ॥ कुत्सितंचरतीति । पचाद्यच् । रत्नयदद्योरन्येभ्यश्च कारात् कोःकत्तत्पुरुषइतियोगविभागाद्वा कोः कत् ॥ न । तक्रे ॥



कच्चित् । अ । कामप्रवेदने ॥ साभिलाषप्रश्ने । इष्टपरिप्रश्ने ॥ हर्षे ॥ मङ्गले ॥ कदिति कुशब्दादेश । कत् चित् अनयोःसमाहारद्वन्द्वः ॥

कच्छ. । पु । अनूपे । जलप्रायदेशे ॥ नदीपर्वतादिजलाशयसमीपे । तटे ॥ तुन्नकद्रुमे ॥ नौकाङ्गे ॥ काछ इतिभाषाप्रसिद्धे परिधानाञ्चले । कच्छायाम् ॥ अथस्मृति । नाभेः पृष्ठे तथा नाभौ कक्षयोर्दक्षवामयोः ... इभिः कच्छैःपरीधत्ते योविप्रः स शुचिःस्मृत इति ॥ परिधानाद्वहिः कच्छानिबद्धाह्यासुरीभवेत् । इतिवाक्यात् ॥ पुं भूमि । देशविशेषे ॥ यथा । गर्गेश्वरात् पूर्वभागे समुद्रादुत्तरे शिवे । कच्छदेशः समाख्यातस्सर्वे ... इति ॥ कच्छति कच्छदोषौ । वाच्छुकच्छः ॥ यथा । केनकच्छाति । उक्तूदिरदोषि देवमयोः । अन्येभ्योपीति ड । कंकच्छति परिच्छिनत्ति । छोछेदने । आतोनुपसर्गेकः ॥ त्रि । जलप्रान्ते ॥ परिधानाञ्चले कच्छो जलप्राये त्रिलिङ्गकइत्यमरः ॥

कच्छकः । पुं । तुन्नके । तूणी इति प्रसिद्धे वृक्षे ॥

कच्छटिका । स्त्री । कच्छायाम् । कछोटी इति भाषा ॥ इति शब्दरत्नावली ॥

कच्छप । पु । पञ्चनखे जलजन्तुविशेषे । कमठे । कूर्मे । कच्छुवा इति भाषा ॥ अस्य मांसप्रकारो गुणाश्च । तप्ततोये परिक्षिप्त सम्यक् स्विन्नञ्च कच्छपम् । तन्मांस खर्परान्नाह्य खण्डितं स्वल्पखण्डकैः ॥ पाचितं सार्षपे तैले हिङ्गुसैन्धवसंयुते । वेसवारसमायुक्तं दाडिमेन सहाम्लिते ॥ कच्छपो बलदो वातपित्तनुत् पुंस्त्वकारक इति ॥ पुनश्च । कच्छपो बलकृच्छीघ्रवातजिच्छुक्रकारकः । स्निग्धो घ्नः प्रीणन सद्यो विपाके कटुकस्मृत इति ॥ कुबेरस्य निधिविशेषे ॥ मल्लस्य बन्धविशेषे ॥ मद्यस्य यन्त्रविशेषे ॥ कच्छेन पिबति । पा० । सुपीतियोगविभागात्क ॥

कच्छपिका । स्त्री । क्षुद्ररोगविशेषे ॥ तल्लक्षणम् । ग्रथिता पञ्च वा षड्वा दारुणा कच्छपोन्नता । कफानिलाभ्यां पिडका ज्ञेया कच्छपिका बुधैरिति ॥ प्रमेहोपेक्षयाजातदशपिडकान्तर्गतपिडकाविशेषे ॥ तल्लक्षणम् । सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैरिति ॥

कच्छपी । स्त्री । वाणीवीणायाम् ॥ क्षुद्रौ । कमठ्याम् ॥ क्षुद्ररोगविशेषे । कच्छपिकायाम् ॥ कच्छ कच्छेवा पिबति । कच्छेन पातिवा । सुपीतिकः । गापोष्टक्तु न पिबते सुराशीध्वोरितिवचनात् । गतिकारकेतिसुबुत्पत्तेः प्राक् समासः । जातेरिति ङीष् ॥

कच्छरुहा । स्त्री । दूर्वायाम् ॥ कच्छे रोहति । रुह० । इगुपधेति कः ॥

कच्छा । स्त्री । वाराह्याम् । गृष्टिभेषजे ॥ चीरिकायाम् । झिल्ली मर्झोरा इति भाषा । झिँझीपोका इति गौडभाषा ॥ परिधानापराञ्चले । काछ इति भाषा ॥ अदन्तत्वाट्टाप् ॥

कच्छाटिका । स्त्री । कच्छटिकायाम् ॥

कच्छु । स्त्री । रोगविशेषे ॥ तल्लक्षणं यथा । सूक्ष्मा बह्व्यः पिडकाः स्राववत्यः पामेत्युक्ता कण्डुमत्यः सदाहा । सैव स्फोटैस्तीव्रदाहैरुपेता ज्ञेया पाण्योः कच्छुरुग्रास्फिचोश्चेति ॥

कच्छुघ्नी । स्त्री । पटोले ॥ हपुषाप्रभेदे ॥

कच्छुर । पु । पुंश्चले ॥ त्रि । पामने । पामासहिते ॥ कच्छूरस्ति अस्य । कच्छ्वा ह्रस्वत्वञ्चेतिर ॥

कच्छुरा । स्त्री । शूकशिंब्याम् ॥ शट्याम् । गन्धपत्र्याम् ॥ दुरालभायाम् ।

॥ यवासे ॥ पुष्करल्याम् ॥ कच्छूं राति । रादाने । आत इति क । पृषोदरादित्वात् ह्रस्वः ॥

कच्छू । स्त्री । खाज इतिप्रसिद्धे पामरोगे ॥ कषति । कषहिंसायाम् । कषेश्छश्चेत्यू ॥

कच्छूमती । स्त्री । शूकशिंब्याम् ॥ त्रि । कच्छूयुक्ते ॥

कच्छोटिका । स्त्री । कच्छे । परिधानाञ्चले । कछोटी इतिभाषा ॥

कच्वी । स्त्री । अरवीं घुंइया इति प्रसिद्धे शाकविशेषे । वितण्डायाम् ॥

कजम् । न । कमले ॥ केजातम् । जनी । डः ॥

कज्जलम् । न । काजल इति प्रसिद्धे अञ्जने । लोचके ॥ पुं । मेघे ॥

कज्जलध्वजः । पुं । दीपे ॥ कज्जलं ध्वजं यस्य ॥

कज्जलरोचकः । पुं । न । ज्योत्स्नावृक्षे । दीपवृक्षे । दीवट इति भाषा ॥

कज्जला । स्त्री । मत्स्यविशेषे । कज्जल्याम् ॥

कज्जली । स्त्री । मत्स्यविशेषे ॥ मिश्रितरसगन्धके ॥ यथा । शुद्धं सूतं तथागन्धं खल्वे तावद्विमर्द्दयेत् । सूतं न दृश्यते यावत् किन्तु कज्जलवद्भवेत् ॥ यथा कज्जलिका ख्याता हंसवी वी

र्यवर्त्तिनी । नानानुपानयोगेन सर्वव्याधिविनाशिनीति ॥

कञ्चटम् । न । जलतण्डुलीये । लाङ्गल्याम् । काँचडादाम इतिगौडप्रसिद्धे जलजशाकविशेषे ॥ पानीयतण्डुलीयो यस्तत्कञ्चटमुदाहृतम् । कञ्चटं तिक्तकं रक्तपित्तानिलहरं लघु ॥ चंवराई शाकस्य विशेषे ॥ इति भावप्रकाश. ॥

कञ्चडः । पु । कञ्चटप्रभेदे । चक्रमर्दे । अम्बुपे ॥

कञ्चारः । पुं । सूर्य्ये ॥

कञ्चिका । स्त्री । वंशशाखायाम् । कुञ्चिकायाम् । कमची इतिभाषा ॥ क्षुद्रस्फोटे ॥

कञ्चुकः । पुं । वारवाणे । भटादेश्चोलकाकृतिसन्नाहे ॥ लोहवर्मणि ॥ कञ्चते । कचिदीप्ति बन्धनयोः । बाहुलकादुकन् ॥ कवचे ॥ निर्मोके । अहिनिर्व्वयिन्याम् । सर्पत्वचि । काँचली इतिभाषा ॥ चोलके । कूर्पासे । अङ्गिकायाम् । अङ्गिया काँचुली चोली इतिचभाषा ॥ वस्त्रे ॥ वस्त्रोपगृहीताङ्गस्थितवस्त्रे ॥

कञ्चुकालुः । पुं । सर्पे ॥

कञ्चुकी । पुं । अन्तःपुराध्यक्षे । सौविदल्ले । स्थापत्ये । राज्ञांस्त्र्यगारेष

क्षीरस्याधिकृते ॥ पिङ्गे ॥ अङ्घ्रौ । सर्पे ॥ जीङ्गकद्रुमे ॥ यवे ॥ चणके ॥ आबद्धकवचे ॥ कञ्चुकस्त्वोलकोऽस्त्रस्य । अतइनिः ॥ न स्यात् कर्मणि कञ्चुकीति स्मृतिः ॥

कञ्चुकी । स्त्री । ओषधिप्रभेदे ॥ क्षीरीशवृक्षे ॥

कञ्चुलिका । स्त्री । कञ्चुके । स्त्रीणामङ्गरक्षिण्याम् ॥

कञ्ज. । पु । केशे ॥ विरिञ्चौ । चतुरानने ॥ न । पीयूषे ॥ पद्मे ॥ कम् जले जातम् । जनी° । डः ॥

कञ्जकः । पुं । मयना इति प्रसिद्धेपक्षिविशेषे ॥ इतिशब्दचन्द्रिका ॥

कञ्जज । पु । ब्रह्मणि । विश्वसृजि ॥

कञ्जन. । पुं । कन्दर्पे । कामे ॥ मयना इति प्रसिद्धे पक्षिणि ॥

कञ्जयोनि. । पु । शालूके ॥ कञ्जस्य पद्मस्य योनिरुत्पत्तिस्थानम् ॥

कञ्जलः । पुं । मयनाइ प्रसिद्धे पक्षिणि ॥

कञ्जारः । पुं । जठरे ॥ सूर्ये ॥ विरिञ्चौ ॥ वारणे ॥ मुनौ ॥ कञ्जति । कञ्जिः सौत्रः । कञ्जिमृजिभ्यांचिदिष्यारन् ।

कञ्जिका । स्त्री । ब्राह्मणयष्टिकाहृये । वह्मनेटी इतिभाषा ॥

कटः । पु । श्रोणौ ॥ कटिपार्श्वे ॥ किलिञ्जे । वीरणनडादिमये तृणासते । चटाई माँदरी, इतिभाषा ॥ अतिशये ॥ समये ॥ गजगण्डे ॥ तृणे ॥ शवे ॥ शवरथे ॥ ओषधौ ॥ श्मशाने ॥ त्रि । क्रियाकारे । कटति कट्यतेवा कटे वर्षावरणयोः । पचाद्यच् । पुंसीतिघ. ॥

कटंवरा । स्त्री । कटुरोहिण्याम् । कटुकीतिख्यातायाम् ॥ कटवृणोति । वृञ्ज° । संज्ञायां भृतॄ इति खच् । अरुर्द्विषदितिमुम् ॥

कटकः । पु । न । अद्रेर्नितम्बे । मेखलाख्ये पर्वतमध्यभागे ॥ वलये । वाहुभूषणे ॥ दन्तिनांदन्तमण्डले ॥ चक्रे ॥ सामुद्रलवणे ॥ राजधान्याम् ॥ नगर्याम् ॥ सेनायाम् ॥ कटति कट्यते वा कटे° । कृञ्शिखिसंज्ञयोः । कृञादिभ्यः संज्ञायां वुञिति वुन् वा ॥ सानौ ॥

कटकी । पु । नगे । पर्वते ॥ सेनाध्यक्षे ॥ कटकोऽस्यास्ति । इनि. ॥

कटकोल. । पुं । पतद्ग्रहे । निष्ठीवनपात्रे । इति त्रिकाण्डशेषः ॥

कटकृत् । त्रि । तृणासनकर्त्तरि ॥

कटखादकः । पु । काचकलशे ॥ काके ॥ जम्बुके ॥ त्रि । खादके । भक्षके ॥

कटङ्कटः । पु । अग्नौ ॥

कटङ्कटेरी । स्त्री । दारुहरिद्रायाम् ॥ हरिद्रायाम् ॥

कटप्रू । पुं । महादेवे ॥ विद्याधरे ॥ अक्षदेवने ॥ कामरूपिणि ॥ राक्षसे ॥ कीटे ॥ कटं प्रवते तच्छील । प्रुङ्गतौ । क्विप्चिप्रच्छीति क्विपदीर्घौ ॥

कटप्रोथः । पुं । स्फिचि । कट्याम् ॥

कटभङ्ग.। पुं । सस्यानां हस्तच्छेदे ॥ नृपात्यये । राजविनाशे ॥

कटभी । स्त्री । ज्योतिष्मत्याम् ॥ वृक्षभेदे । स्वादुपुष्पे । कटभीतु प्रमेहार्शोनाडीव्रणविषकृमीन् । हन्त्युष्णा कफकुष्ठघ्नीकटुः स्याच्चकीर्त्तिता ॥ तत्फलं तद्गुणं ज्ञेयं विशेषात्कफशुक्रकृत् । श्वेतात्वेतद्गुणसंयुक्ता ॥ कटवञ्चाति । अन्येभ्योपीतिडः । गौरादि' ॥ कोँटाश्रिरीष इतिगौडभाषाप्रसिद्धे वृक्षविशेषे ॥ अपराजितायाम् ॥

कटमालिनी । स्त्री । मदिरायाम् ॥

कटम्ब । पुं । वाद्यभेदे ॥ बाणे ॥ कटति । कटे० । कृकदिकडिकटिभ्योम्बच् ॥

कटम्भरः । पुं । श्योनाकवृक्षे ॥ कटभीवृक्षे ॥

कटम्भरा । स्त्री । प्रसारण्याम् । गन्धभादालिया इति गौडभाषा ॥ रोहिण्याम् । कटकी इतिभाषा ॥ हस्तिन्याम् । हथिनी इतिभाषा ॥ कलम्बिकायाम् ॥ गोलायाम् ॥ वर्षाभ्वि ॥ मूर्वायाम् ॥ कटं बिभर्त्ति । डुभृञ् धा० । संज्ञायांभृतृवृजिधारिसहितपिदम इति खच् । मुम् ॥

कटव्रणः । पु । भीमसेने ॥

कटशर्करा । स्त्री । गाङ्गेष्ठीलतायाम् । नाटा इतिगौडभाषा ॥

कटाक्ष. । पुं । अपाङ्गदृष्टौ ॥ कटौ अतिशयितौ अक्षिणीयत्र । बहुव्रीहौसक्थ्यक्ष्णोरितिषच् ॥ कटं गण्डं गच्छति वा । अक्षूव्याप्तौ । कर्मण्यण् ॥ भक्षेषु तिर्यङ्निपाताकृपाङ्गदृष्टि. कटाक्ष' ॥

कटायनम् । न । वीरणे ॥

कटारः । पुं । नागरे । कामिनि ॥

कटाह । पुं । कूर्मकर्परे । कमठपृष्ठे ॥ द्वीपप्रभेदे ॥ तैलादि' पाकपात्रे ॥ जायमानविषाणाग्रमहिषीशावके । महिषीशिशौ ॥ खर्परे ॥ नरके ॥

कटि । स्त्री । श्रोण्याम् ॥ कट्यते । कटे आवरणे । सर्वधातुभ्यइन् ॥

कटिचम् । न । रसनायाम् । काञ्च्याम् । करधनी कौँधनी तगडी इति भाषा ॥ कटिवस्त्रे ॥ कटिवर्मणि ॥

कटी । पु । इभे । गजे ॥ त्रि । कटवति ॥

कटिप्रोथ' । पु । स्फिचि । चूतड इति भाषाप्रसिद्धे कटिदेशस्थमांसपिण्डे ॥ प्रोथति । प्रोथृपर्याप्तौ । पुसीति घ । कट्याः प्रोथो मांसपिण्ड' ॥

कटिरोहक' । पु । हस्तिपश्चाद्भागारोहके ॥

कटिल्लक' । पुं । कारवेल्ले ॥ कटति । कटे॰ । वाहुलकादिल्ल । स्वार्थेकन् ॥

कटिशीर्षक. । पु । कटिदेशे ॥

कटिशूल । पु । कटिदेशस्थे शूलरोगे॥ अस्यौषधं यथा । रजनीकदलीक्षारलेप सिध्मविनाशन । कुष्ठस्य भागमेकन्तु पथ्याभागद्वयं तथा ॥ उष्णोदकेन सम्पीत्वाकटिशूलविनाशनमिति ॥

कटिशृङ्खला । स्त्री । चिंतिकायाम् । कटिधार्यक्षुद्रघण्टिकायाम् ॥

कटिसूत्रम् । न । चन्द्रहार गोट् इति गौडभाषाप्रसिद्धे कट्यलङ्कारविशेषे॥

कटी । स्त्री । पिप्पल्याम् ॥ श्रोणिदेशे ॥ कट्यते । कटे॰ । सर्वधातुभ्यइन् । कृदिकारादिति कटाच्छ्रोणिवचन इति गौरादिषुपाठाद्वा ङीष् ॥

कटीतल । पुं । न्युब्जखङ्गे । बाँका खाँडा इति भाषा । खुखुँडी इति खुखड़ी इतिचनेपालभाषा ॥

कटीर । पुं । जघने ॥ कन्दरे ॥ न । कटौ ॥ कटति कट्यते वा कटीगतौ कटे॰ वा । कृशृपृकटिपटिशौटिभ्य-ईरन् ॥

कटीरक । पु । नितम्बे ॥ कटीरएव । स्वार्थेक. ॥

कटु । पुं । रसविशेषे । चर्परा इति भाषा । झाल इति गौड भाषा ॥ कटू रूच. स्तन्यमेद श्लेष्मकण्डूविषापह' । वातपित्तकृदाग्नेय' शोषी पाचनरोचकृत् ॥ चम्पकवृक्षे ॥-चीनकर्पूरे ॥ पटोले ॥ कट्वीलतायाम् ॥ स्त्री । कटुकायाम् । कटुरोहिण्याम् ॥ प्रियङ्गुवृक्षे ॥ राजिकायाम् ॥ न । अकार्य्ये ॥ दूषणे ॥ त्रि । कटुरसयुक्ते ॥ सुगन्धौ ॥ तीक्ष्णे ॥ मत्सरे ॥ अप्रिये॥ कटत्यावृणोति तीक्ष्णतया मुखम् । कटे॰ । कटिवटिभ्यांचेत्यु' । वस्तुतस्तु शृस्वृस्निहित्रपीत्यच चकारादु । कटिवटिभ्यामिति सूत्रस्योज्ज्वलदत्तादिष्वदर्शनात् । स्त्रिया वोतोगुणोति ङीषि कट्वी कटु र्वा ॥ कटति । मृ॰ उर्वा ॥

कटुकः । पुं । पटोले ॥ सुगन्धितृणे ॥ अर्कवृक्षे ॥ कुटजवृक्षे ॥ राजसर्षपे ॥ न । व्योषे । त्रिकटुनि ॥ स्वार्थेकः ॥

कटुकन्द । पु । शिग्रुवृक्षे ॥ आर्द्रके । शृङ्गवेरे॥ लशुने ॥ कटु: कन्दोऽस्य॥

कटुकफलम् । न । कक्कोले ॥

कटुकस्नेह । पु । सर्षपे ॥

कटुका । स्त्री । क्षुद्रचञ्चुक्षुपे ॥ कटुरोहिण्याम् । कटम्भरायाम् । कुटुकी इतिभाषा ॥ कटुका कटुका पाके तिक्ता रूक्षा हिमा लघु । भेदिनी दीपनी हृद्या कफपित्तज्वरापहा । प्रमेहश्वासकासास्रदाहकुष्ठकृमिप्रणुत् ॥ ताम्बूल्याम् ॥ राजिकायाम् ॥ तिक्तालाबुके ॥

कटुकी । स्त्री । कटुकायाम् । मत्स्यपित्ताम् । शतपर्वायाम् ॥ कुटकी इति भाषा ॥

कटुकीट । पुं । मशके ॥

कटुक्वाण । पुं । टिट्टिभे ॥

कटुग्रन्थि । न । पिप्पलीमूले ॥ शुण्ठ्याम् ॥

कटुचातुर्जातकम् । न । एलात्वक्पत्रकमरिचात्मकचतुष्के ॥ इतिराजनिर्घण्ट: ॥

कटुच्छद । पुं । तगरवृक्षे । टगर इति गौडभाषा ॥

कटुतिक्तक । पुं । भूनिम्बे ॥ शणवृक्षे ॥

कटुतिक्तिका । स्त्री । कटुतुम्ब्याम् ॥

कटुतिन्दुक: । पुं । कुपीलौ । कुचला इतिभाषा ॥

कटुतुण्डी । स्त्री । लताप्रभेदे । तिक्ततुण्ड्याम् । कटुतराइ इति गौड भाषा ॥

कटुतुम्बी । स्त्री । इक्ष्वाकौ । तिक्तालाबाम् ॥ कटुतुम्बी हिमा हृद्या पित्तकासविषापहा । तिक्ता कटु विपाके च वातपित्तज्वरान्तकृत् ॥ कटुश्चासौ तुम्बी च ॥

कटुत्रयम् । न । त्रिकटुनि ॥ कटूनां त्रयम् ॥

कटुदला । स्त्री । कर्कट्याम् । ककडी इतिभाषा ॥

कटुनिष्पाव । पु । नद्दीनिष्पावधान्ये ॥

कटुपत्र । पुं । पर्पटे ॥ सितार्जके ॥

कटुपत्रिका । स्त्री । कारीवृक्षे ॥

कटुफल । पु । पटोले ॥ इतिराजनिर्घण्ट: ॥

कटुफला । स्त्री । श्रीवल्लीवृक्षे ॥

कटुभङ्ग: । पुं । }
कटुभद्रम् । न । } शुण्ठ्याम् ॥

कटुमञ्जरिका । स्त्री । अपामार्गे ॥

कटुमोदम् । न । जवादिनामसुगन्धिद्रव्ये ॥

कटुरव । पुं । मण्डूके ॥

कटुरोहिणी । स्त्री । कटुकायाम् । मत्स्याकरोहिण्याम् ॥ [illegible]

ष्या ॥ कटुश्चासौ रोहिणीच ॥

कटुवार्त्ताकी । स्त्री । श्वेतकण्टकार्या-म् ॥

कटुबीजा । स्त्री । पिप्पल्याम् ॥

कटुशृङ्गालम् । न । गौरसुवर्णशाके ॥

कटुस्नेह । पु । सर्षपे ॥ गौरसर्षपे ॥

कटूत्कटम् । न । आर्द्रके ॥

कटूत्कटकम् । न । शुण्ठ्याम् ॥

कटोरम् । न । कटोरा इति प्रसिद्धे पात्रे ॥ यथोक्तं मेरुतन्त्रे ५ प्रकाशे । सूत्कर्षटे सयुतकाचकूप्या दत्वामुखं लोहपलोहवह्नेः । निष्कासितो धूमरसस्तु तस्य सौगन्धिके काचकटोरकेय इत्यादि ॥ जैमिन्याश्वमेधिके पर्वणि ९ ऽध्यायेपिच । रत्नाञ्च देवकीदत्त पात्रे काञ्चननिर्मिते । कटोराख्या चतु' षष्टि. प.त्रस्तोभयत. स्थिता इति ॥कटति । कटे° । ओलच् । रलयोरैक्यम् ॥

कटोरकम् । न । कटोरा इतिप्रसिद्ध पात्रभेदे ॥ स्वार्थेक

कटोरा । स्त्री । स्वनामख्यातपात्रे । इति ब्रह्मवैवर्त्तपुराणम् ॥

कटोलः । पु । कटुरसे ॥ चण्डाले ॥ कटति । कटे° । कपिगडिगण्डिकटिपटिभ्य ओलच् ॥

कटोलकः । पु । कटोलार्थे ॥ स्वार्थे



क ॥

कटोलवीणा । स्त्री । केन्दुडा इति गौडभाषाप्रसिद्धे यन्त्रे । चण्डालवल्लक्याम् ॥ कटोलस्य चण्डालस्य वीणा ॥

कट्टार । पु । कटिशस्त्रे । कटार इतिभाषा॥

कट्फल । पु । कायफल इति प्रसिद्धे वृक्षे । श्रीपर्णिकायाम् । कुमुदिकायाम् ॥ कट्फल स्तुवरस्तिक्त कटुर्वातकफज्वरान् । हन्ति श्वास प्रमेहार्श कासकण्ठामयारुची. ॥ कटति । कटे° । क्विप । कट्फलमस्य ॥

कट्फला । स्त्री । गम्भार्य्याम् ॥ इन्द्रवारुण्याम् ॥ काकमाच्याम् ॥ देवदाल्याम् ॥ वार्त्ताक्याम् ॥ मृगेर्व्वारौ ॥

कट्वङ्ग । पु । सूर्यवंशजे दिलीपन्नपतौ ॥ श्योनाकद्रुमे । सोनापाठा इति भाषाप्रसिद्धे ॥ कटूनि अङ्गान्यस्य ॥

कट्वरम् । न । दधिसरे ॥ व्यञ्जने ॥ तक्रे ॥ दध्न ससारकस्यान्न तक्रंकट्वरमुच्यते ॥ कटति । कटे° । छित्वरछत्वर धीवर पीवरमीवरची वरतीवरनीवरगह्वरकट्वरसंयद्वराइतिष्वरजन्त साधु ॥

कट्वी । स्त्री । कटुकायाम् ॥ लताविशेषे । कटुकवल्ल्याम् । काष्ठवल्लिकायाम् ॥ सुकाष्ठायाम् ॥ बोतोगुणवच्च-

नादिति ङीप् ॥

कठ । पु । मुनिविशेषे ॥ कठशाखाध्ययनकर्त्तरि ॥ कठशाखाभिन्ने ॥ ऋचांप्रभेदे ॥ स्वरे ॥ यजुश्शाखाविशेषे ॥ कठेन प्रोक्तमधीते । वैशम्पायनान्तेवासित्वात् जातस्यणिने' कठचरकाल्लुगिति लुक् ॥

कठमर्द' । पुं । शिवे ॥

कठर' । पुं । कठिने ॥

कठा । स्त्री । करिण्याम् ।

कठाकु । पुं । पक्षिणि ॥ कठति । कठकृच्छ्रजीवने । कठिकुषिभ्यां काकुः ॥

कठाक्क । पुं । दात्यूहखगे ॥

कठिञ्जर: । पुं । तुलस्याम् । पर्य्यासे ॥ कृष्णबर्बरायाम् ॥ कठिनं जरयति । जृष् वयोहानौ । ण्यन्त. । कर्मण्यण् । पृषोदरादि ॥

कठिन' । त्रि । क्रूरे । निष्ठुरे । कठोरे ॥ स्तब्धे ॥ न । स्थाल्याम् ॥ वैद्यशास्त्रप्रसिद्धेषु यवान्यजाजीचिकटुभूनिम्बादिद्रव्येषु ॥ कठति । कठ० । वकुलमन्दीर्नप्रीति इनच् ॥

कठिनपृष्ठक. । पुं । कमठे । कूर्मे ॥

कठिना । स्त्री । गुडशर्करायाम् ॥

काठनिका । स्त्री । कठिन्याम् ॥

कठिनी । स्त्री । वर्णलेखिकायाम् । पाकशुक्लायाम् खैलखडी इतिभाषा ॥ गुप्तिगङ्गगङ्गानारम्भे न पतति कठिनी संसभ्रमाद्यस्य । तेनाम्नायदि सुतिनी वद वन्ध्या कीदृशी नाम ॥

कठिल्ल । पु । कारवेल्ले ॥ कठति । कठशोके । बाहुलकादिल्ल ॥

कठिल्लक । पु । कारवेल्ले ॥ तुलस्याम् ॥ पुनर्नवायाम् ॥ स्वार्थेकन् ॥

कठी । स्त्री । कठेन प्रोक्तमधीयानार्थी म् ब्राह्मण्याम् ॥ शाखाध्येतृवाचित्वेन जातित्वात ङीप ॥

कठेर. । पुं । कृच्छ्रजीविनि । दरिद्रे ॥ कठति । कठ० । पतिकठिकुठीभ्येरक ॥

कठेरु. । पु । चामरवाते । मन्थरौ ॥

कठोर । त्रि । कठिने ॥ कठति । कठ० । कठिचकिभ्यामोरन् ॥ पूर्णे ॥ कठोरताराधिपलाञ्छनच्छवि । इति माघः

कड. । पु । मूर्खे ॥ कडति । कडमदे । पचाद्यच् ॥

कडकम् । न । सामुद्रे । त्रिकूटे । करकच इति गौडभाषाप्रसिद्धे सामुद्रलवणे ॥

कडङ्कर । पुं । माषमुद्गादिकाण्डे । बुसे ॥ कडङ्करोति । कृ० । कडङ्करदक्षिणा दिति निपातनात खच् ॥

कडङ्करीय । त्रि । } कडङ्करार्हे गवि ॥
कडङ्कर्य्य । त्रि । }

कडङ्कर मर्हति । कडङ्करदक्षिणा च्छेति छ. यतच॥

कडङ्गः । पुं । सुराविशेषे ॥

कडङ्गर' । पु । बुसे ॥ गृणाति गिरति वा । गृशब्दे निगरणे वा । अच् । कडस्य गर । कडङ्गरेतिनिर्देशान्मुम्॥ यद्वा । कडति । कड॰। क्विप्। कड्च तत् अङ्गञ्च । कडङ्गं राति । रा॰। क. ॥

कडत्रम् । न । पात्रविशेषे ॥

कडम्बः । पु । शाकनाडिकायाम् । कलम्बे । डाँठ डंठल् इतिचभाषा ॥ कोणे । प्रान्तभागे ॥ कडति । कड॰ । कृकदिकडीत्यम्बच् । केन लम्बते वा लवि॰। अच् । डलयोरैक्यम् ॥ अग्रभागे ॥

कडम्बकः । पुं । कलम्बे ॥ स्वार्थेकन् ॥

कडम्बी । स्त्री। कलम्बीशाके ॥

कडारः । पु । पिङ्गलवर्णे ॥ त्रि । पिङ्गलवर्णवति ॥ कडारस्तृणवह्निवदित्यन्ये इतिभरत.॥ दासे ॥ गडति। गड सेचने । गडे' कडचेत्यारन् ॥

कणः । पु । अतिसूक्ष्मे। लेशे॥ धान्यांशे । चूर्णतण्डुले ॥ सूक्ष्मस्तण्डुलावयव' कणइति व्याख्यातार. ॥ वनजीरके ॥ कणति । कण निमीलने । पचाद्यच् ॥

कणगुग्गुलु. । पु । गुग्गुलुप्रभेदे ।वंशपीते । स्वर्णकणे । गन्धराजे ॥

कणजीर. । पु । श्वेतजीरके ॥

कणजीरकम् । न । क्षुद्रजीरके । हृद्यगन्धिनि ॥

कणभ. । पु । कीटविशेषे ॥

कणभक्षक । पु । भारिटखगे । श्यामचटके । शैशिरे ॥

कणलाभ. । पु । आवर्त्ते । जलभ्रमे ॥

कणा । स्त्री । जीरके ॥ कुम्भीरमक्षिकायाम् ॥ पिप्पल्याम् ॥ श्वेतजीरके ॥ अल्पे ॥ टाप् ॥

कणाटीन. । पु ।
कणाटीर. । पु ।
कणाटीरक । पु ।
} खञ्जनपक्षिणि॥

कणाद । पु । वैशेषिकदर्शनकर्त्तरि मुनिविशेषे । काश्यपे ॥

कणिकः । पुं । कणायाम् ॥ शत्रौ ॥ नीराजनाविधौ ॥ सूजीइतिभाषाप्रसिद्धे शुष्कगोधूमचूर्णे ॥

कणिका । स्त्री । अत्यन्तसूक्ष्मवस्तुनि ॥ अग्निमन्थे । अरणीतिख्याते ॥ कणति । कणगतौ । पचाद्यच् । स्वार्थेकन् । इत्वम् ॥ यद्वा । कणति । कणशब्दे । क्वुन् ॥ कणा. सन्त्यस्यवा । अतइनिठनाविति ठन् ॥

कणितम् । न । पीडितानां शब्दे । आ

पिकथके रूपाधिवङ्गाव्य इतिचिन्तामणि. ॥ कथयति । कथवाक्यप्रबन्धे । बहुलमन्यत्रापीति कुन् ॥

कथङ्कथिक । त्रि । प्रश्नकर्त्तरि । प्रष्टरि ॥

कथङ्कथिकता । स्त्री । पृच्छायाम् ॥ इति हेमचन्द्र ॥

कथङ्कारम् । अ । केन प्रकारेण कृत्त्वेत्यर्थे । कथमित्यर्थे ॥ अनर्थकादेव करोतेः कथम्पूर्वाणमुल् ॥

कथञ्चन । अ । केनाप्यंशेनेत्यर्थे ॥

कथञ्चित् । अ । अतिप्रयत्नेनेत्यर्थे ॥

कथनम् । न । कथायाम् । कहना इति भाषा ॥ इतिहलायुध ॥

कथम् । अ । हर्षे ॥ गर्हायाम् ॥ प्रकारार्थे ॥ सम्भ्रमे ॥ प्रश्ने ॥ सम्भावनायाम् ॥ केन प्रकारेण । किमर्थमिति यम् ॥

कथमपि । अ । यत्नगौरवे ॥ बाढमित्यर्थे ॥ कथमादितथाप्यसंयलगौरव भेदयोः ॥

कथम्भूत । त्रि । किम्प्रकारे ॥ क प्रकारं किंवा प्रकार मापन्न. । द्वितीयान्तादपिथमुः ॥

कथा । स्त्री । प्रबन्धकल्पनायाम् ॥ प्रबन्धकल्पनां स्तोकसत्यां प्रज्ञा. कथां विदुः । परम्पराश्रया या स्यात् सा मता ख्यायिका क्वचिदिति कोषाश्चर्या चार्य. ॥ पक्षप्रतिपक्षोपन्यासेन-विचारणायाम् ॥ नैयायिकमतेऽपि नानावक्तृकपूर्वपक्षसिद्धान्तवान् वाक्यसन्दर्भ कथा । तद्भेदास्त्रय । वादो जल्पो वितण्डाचेति ॥ कथा का दम्बर्यादिस्वरूपा सैवगद्यपद्यमयी चम्पूरितिग्रन्थान्तरे ॥ कथयति । कथवाक्यप्रबन्धे । चिन्तिपूजिकथिकुम्बिचर्चश्चेत्यङ् । टाप् ॥

कथाप्रसङ्ग. । त्रि । वातूले ॥ वार्त्तायाम् । गोष्ठीवचने ॥ विषवैद्ये ॥

कथाप्राण. । त्रि । कथके । कथोपजीविनि । नाटकवक्तरि ॥ कथायां प्राणा यस्य ॥

कथितः । त्रि । उक्ते । कहा इतिभाषा ॥ कथ० । क्तः ॥

कद. । पुं । मेघे ॥ कं जलं ददाति । तुदाभ् । कः ॥

कदकः । पुं । उल्लोचे । विताने ॥

कदध्वा । पुं । कापथे । निन्द्यमार्गे ॥ कुत्सितोऽध्वा । कुगतीतिसमास. । कोः कत् तत् पुरुषेऽचीति कदादेश ॥

कदनम् । न । मर्दे । युद्धे ॥ पापे ॥ बाधायाम् ॥ मारणे ॥

कदन्नम् । न । कुत्सितान्ने ॥

कदम्बः । पु । नीपे । प्रियके ॥ कदम्बो मधुर शीत. कषायो लवणो गुरु । सरो विष्टम्भकृद्रूक्ष कफस्तन्यानिलप्रद ॥ अन्यच्च । नीपो महाकदम्ब स्याद्धाराकदम्बकस्त्वपि । द्वितीयोऽल्पप्रसरश्च हलिपुष्प कदम्बकः स्थलभेदः । तथारलेपि । हारिद्र स्तुरजोवल । धूलीकदम्बको धाराकदम्ब षट्पदप्रिय ॥ हलिपुष्प केशराढ्यः प्रावृषेण्य कदम्बक' । नीपोमहा कदम्बोपि तथा वहुफलो मत: । इत्यमरटीकायां भरत" ॥ सर्षपे ॥ देवताडकतृणे ॥ न । निकुरम्बे । सङ्घे । समूहे ॥ कदति । कद वैक्लव्ये धातु । कुकदिकडिकटिभ्योम्बच् ॥

कदम्बक. । पु । हरिद्रौ ॥ कदम्बार्थे पु ॥ स्वार्थेकन ॥ यद्वा । कदति क्रन्दयति वा । कद हिंसायाम् । कदि आह्वाने रोदने च । कुकदीत्यम्बच् । अनित्यत्वान्नुम् । स्वार्थेक. ॥ न । निकुरम्बे । समूहे ॥

कदम्बगोलकन्याय. । पुं । कदम्बगोलकस्य सर्वावयवेषु युगपदेव पुष्पाविर्भावात्तद्रूपे दृष्टान्तविशेषे ॥

कदम्बपुष्पा । स्त्री । मुण्डितिकायाम् । मुण्डी इतिभाषा ॥

कदम्बपुष्पी । स्त्री । महाश्रावणिकायाम् । मुण्डायाम् ॥

कदम्बी । स्त्री देवदाल्याम् ॥

कदर । पु । सोमवल्के श्वेतखादिरे ॥ कदरो विशदो वर्ण्यो मुखरोगकफास्रजित ॥ क्रकचे । करपत्रे । करवत करौत आरा इतिच भाषा ॥ कडाजामुडा इति गौडभाषाप्रसिद्धे व्याधिभेदे ॥ तल्लक्षणम् । शर्करोन्मथिते पादे क्षते वा कण्टकादिभि. । ग्रन्थि कीलवदुत्पन्नो जायते कदरस्तु स ॥ इति ॥ सङ्ग्रहे ॥ इत्यादि । दृ विदारणे । पचाद्यच । कस्य जलस्य दर ॥

कदर्थित. । त्रि । विडम्बिते । दूषिते ॥ कुत्सितोऽर्थ. कदर्थ । सो ऽस्य जात । कदर्थः कृत: कदर्थित: ॥

कदर्य्य । त्रि । क्षुद्रे । कृपणे । सतिविभवे अदातरि ॥ यथा । आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन् । यो लोभात् सञ्चिनोत्यर्थान् स कदर्य इतिस्मृत. ॥ कुत्सितो ऽर्थः स्वामी ॥ कुगतीतिसमास. । कोः कत तत्पुरुषे ॥

कदल: । पुं । रम्भावृक्षे ॥ पृश्निपर्ण्याम् ॥ कन्दते कन्द्यते वा । कदि आह्वाने रोदने च । वृषादित्वात् कलच् ॥

कदलक: । पुं । कदलार्थे ॥स्वार्थेक:॥

कदला । स्त्री । पृश्निपर्णाम्॥ डिम्बिकायाम्॥ शाल्मलीवृक्षे ॥ अजादेरा कृतिगणत्वाट्टाप् ॥

कदली । स्त्री । वारणबुसायाम्। रम्भायाम्॥ यथा । माणिक्यमर्त्त्यामृत चम्पकाद्या भेदा. कदल्या बहवोपि सन्ति। उक्ता गुणास्ते प्यधिकाभवन्ति निर्दोषता स्याल्लघुताचतेषाम् ॥ गुणान् पथ्य मोचाफले ॥ पताकायाम् ॥ करिवैजयन्त्याम् ॥ मृगविशेषे ॥ के दलति । दलविशरणे । अच् । ङीष् ॥ कन्दते कन्द्यते वा कदिआ° । इ षादित्वात साधु । गौरादि' ॥

कदलीकन्द. । पुं । रम्भामूले । केराकन्द केलाकन्द इतिच भाषा॥ शीतल: कदलीकन्दो बल्य केश्यो ऽम्लपित्तजित्। वह्निकृद्दाहहारीच मधुरो रुचिकारक' ॥ कन्द' कदल्या दलितो नितान्तं संस्वेदितो त्रिङ्गुघृतेन राढ्. । उद्धूलित. सैन्धवरेणुनाथ मरीचसम्पर्कितएवरुच्य ॥

कदलीकुसुमम् । न । रम्भापुष्पे॥ कदल्या कुसुमं स्निग्धं मधुरं तुवरंगुरु । वातपित्तहरं शीतं रक्तपित्तक्षयप्रणुत् ॥



कदलीदण्ड. । पु । थोड इति गौडभाषाप्रसिद्धेमोचामध्यस्थदण्डे॥ कृत्त' स्विन्न. सलिलविधृत कृत्ततन्तु प्रभिन्न. कम्बुभृत्याजलविरचित. चारजम्बीरपुष्टा. । मध्ये मध्ये तनुशकलितेनार्द्रकेणातिपूर्ण. स्वादुस्तूर्णं भवतिसुतरांगर्भदण्ड कदल्या ॥ योनिदोषहरोदण्ड कदल्या रुक् हरंजयेत् । रक्तपित्तहर. शीत सुरुच्योग्निप्रवर्द्धन ॥

कदा । अ । कस्मिन्काले । कब इति भाषा॥ सर्वैकान्यकियत्तद: काले-दा ॥

कदाकार । त्रि । कुत्सितावयवे ॥ कुत्सित आकारोऽस्य । को कदादेश' ॥

कदाख्यम् । न । कुष्ठौषधौ ॥ त्रि । कुत्सितनामनि॥ कुत्सिता आख्यायस्य। को' कत् तत्पुरुषेचीतिकदादेश: ॥

कदाचन । अ । कस्मिन्काले । किसी समयमे इतिभाषा ॥

कदाचार.। त्रि । कुव्यवहारे ॥ कुत्सित आचारोयस्य। को कत्आदेश ॥

कदाचित् । अ । जातु । कस्मिंश्चित्काले प्रस्तावे॥कदाचिच्च अनयो समाहार' ॥

कदुष्णम् । न । कोष्णे ॥ ईषदुष्णम् । कवञ्चोष्णे इतिपक्षेकदादेश ॥ त्रि । तद्वति ॥

कद्रथ । पु । कुत्सितरथे ॥

कद्रु । पुं । पिङ्गलवर्णे ॥ त्रि । तद्वति । स्वर्णपिङ्गे । कन्दति । कदि आह्वाने । मृगय्वादित्वात् साधु. ॥

कद्रुपुत्र. । पु । नागे ॥ कद्र्वाः पुत्र. ॥

कद्रू । स्त्री । नागमातरि ॥ सञ्ज्ञायामिन्यूङ् ॥

कद्वद. । त्रि । गर्ह्यवादिनि । दुर्वाचि ॥ कुत्सितंवदति । वदे' पचाद्यच् । रथवदयोश्चेति को. कत् । कुत्सित स्य वदोवा ॥

कनकम् । न । स्वर्णे । हेम्नि ॥ पु । किंशुकवृक्षे ॥ नागकेशरवृक्षे ॥ कृष्णाधत्तूरे ॥ धुस्तूरे ॥ काञ्चनालवृक्षे ॥ काली(ये) । कृष्णचन्दने ॥ चम्पकवृक्षे ॥ कासमर्द्दवृक्षे ॥ कणगुग्गुलुवृक्षे ॥ लम्बच्छे । । कनति । कनीदीप्तौ । कृञादिभ्योवुन् ॥ साञ्जाङ्गमे ॥

कनकक्षार । पुं । टङ्कणे ।सुहागा इति भाषा ॥

कनकदण्ड. । पु । राजशृङ्गे । राजच्छत्रे ॥ कनकस्यदण्डोऽस्मिन् ॥

कनकदण्डकम् । न । राजशृङ्गे । राजच्छत्र ॥ स्वार्थेकन् ॥

कनकपल । पु । सुवर्णादिपरिमाणाक्ष षोडशमापके । पलपरिमाणे । कुडविस्ते ॥ इतिहारावली ॥

कनकप्रभा । स्त्री । महाज्योतिष्मत्याम् ॥

कनकप्रसवा । स्त्री । स्वर्णकेतक्याम् ॥

कनकरम्भा । स्त्री । सुवर्णकदल्याम् ॥

कनकरस । पु । हरिताले ॥

कनकलोद्भव । पु । राले ॥

कनकाचल । पु । सुमेरुपर्वते ॥ इ(त्य)नविशेषे ॥ कनकमय अचल' ॥

कनकाध्यक्ष. । पु । भौरिके । सुवर्णाधिकृते ॥ कनकस्य अध्यक्षः ॥

कनकारक । पु । कोविदारवृक्षे ॥

कनकालुका । स्त्री । भृङ्गारे । सौवर्णकलशे ॥ कनकस्य आलु' । सञ्ज्ञायां कन ॥

कनकाह्वम् । न । नागकेशरपुष्पे ॥

कनकाह्वय' । पु । धत्तूरे ॥ कनकमाह्वयोऽस्य । भुक्तेऽस्मिन् कनकवर्णपुष्पोद्दर्शनात् ॥ नागकेशरे ॥

कनखल । पुं । उशादेश्या स्थानेतीर्थविशेषे ॥ उशाकनखलेसूसे तिपुराणम् ॥

कनन । त्रि । काणे । एकदृष्टि ॥ इति हेमचन्द्र' ॥

कनिका । स्त्री । समितायाम् ॥

कनिष्ठ. । त्रि । अतियूनि ॥ अल्पवये ॥

सुश्रुते तु । कण्टकारी सरा तिक्ता कटुका दीपनी लघु । रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान् ॥ निहन्ति पीनस पार्श्वपीडाकृमिहृद्रामयान्। तयो फलं कटुरस पाकेच कटुकं भवेत् ॥ शुक्रस्य रेचन भेदि तिक्तं पित्ताग्निकृल्लघु । हन्यात् कफमरुत्कण्डूकासमेदकृमिज्वरान् ॥ कण्टकारीकृत क्वाथ सकृष्ण सर्वकासहा ॥ तद्वत् प्रोक्ता सिता क्षुद्राविशेषाद्गर्भकारिणी ॥ श लम्बाम् ॥ कण्टकान ऋयर्त्ति । ऋगतौ । कर्मण्यण । ङीप ॥

कण्टकारीफलम् । न । कण्टकार्या फले ॥ कण्टकारीफल तिक्तं कटुकं दीपन लघु । रूक्षोष्णं श्वासकासघ्न ज्वरानिलकफापहम् ॥ शाकप्रकारस्तु । तोयाम्लस्विन्नवृहतीफल मार्द्रकञ्च दण्डाहतं चिरविपाचित माज्यकेन । चूर्णेन सैन्धवभवेन विमिश्रितञ्च वह्निं प्रबोधयति कासनिवारणञ्चेति ॥

कण्टकालुक । पु । यवासे । यासे ॥

कण्टकाशन । पु । उष्ट्रे । कण्टकानि-अशन मस्य ॥

कण्टकाष्ठील । पुं । मत्स्यविशेषे । कुलिशे ॥

कण्टकित । त्रि । पुलकिते ॥

कण्टकी । पु । मत्स्ये ॥ खदिरवृक्षे ॥ विकङ्कते ॥ मदनवृक्षे ॥ गोक्षुरे ॥ वंशे ॥ वदरवृक्षे ॥ कण्टका. सन्त्यस्मिन् । इनि' ॥

कण्टकिनी । स्त्री । वार्त्ताक्याम् ॥ शोणाभिण्ट्याम् ॥ मधुखर्जूर्याम् ॥

कण्टकिफल । पुं । कटहल इतिप्रसिद्धे वृक्षविशेषे । पनसे ॥ कण्टका.सन्त्यस्य । अत इनिठना वितीनि' । कण्टकि फलमस्य ॥ समष्ठिलावृक्षे ॥

कण्टकिल' । पुं । बेडुवाँश इति गौड भाषाप्रसिद्धे वंशविशेषे ॥

कण्टकिलता । स्त्री । त्रपुष्याम् । खीरा इति भाषा । कण्टकिनीचासौ लताच ॥

कण्टकी । स्त्री । वार्त्ताकीविशेषे । कंटीलाबैगन् इति भाषा ॥

कण्टकुरण्ट. । पु । झिण्ट्याम् ॥

कण्टतनु. । स्त्री । वृहत्याम् ॥

कण्टदला । स्त्री । केतक्याम् ॥

कण्टपत्र । पु । विकङ्कतवृक्षे ॥

कण्टपत्रफला । स्त्री । ब्रह्मदण्ड्याम् ॥

कण्टपाद. । पु । विकङ्कतवृक्षे ॥

कण्टफल । पु । क्षुद्रगोक्षुरे ॥ पनसे ॥ धुस्तूरे ॥ लताकरञ्जे ॥

कण्टफला । स्त्री । देवदालीलतायाम् ॥

कण्ठल । पु । बावले । बबूलइति भाषा ॥ इतिशब्दचन्द्रिका ॥

कण्ठवल्ली । स्त्री । आवल्लीवृत्त ॥

कण्ठवृन्त । पु । तेज फलवृक्षे ॥

कण्टाफल । पु । कण्टकिफले । कटहल इति भाषा ॥ विशेषात पनस म ञ्ज गुल्मशिरोमन्दवह्निभि ॥

कण्टार्गला । स्त्री । नीलझिण्ट्याम् ॥

कण्टालु । पु । वंशे ॥ वृहत्याम् ॥ वार्त्ताक्याम् ॥ वर्बूरे ॥

कण्टाह्वयम् । न । पद्मकन्दे ॥

कण्टी । पु । कषाये ॥ अपामार्गे ॥ खदिरे ॥ गोक्षुरे ॥

कण्ठः । पुं । मदनद्रुमे ॥ होमकुण्डा दहिरङ्गुलिपरिमितेस्थाने ॥ यथा । ग्वातादाद्योऽङ्गुल. कण्ठ सर्वकुण्डेष्व यंविधिरिति ॥ त्रि । गले । ग्रीवाग्रभागे ॥ अत्र विशुद्धनामषोडशदल पद्म मस्ति ॥ सन्निधाने । निकटे ॥ ध्वनौ ॥ कणति । कणशब्दे कणो ठ. ॥ यद्वा । कण्ठते । कठिशोके । अच् ॥

कण्ठकूणिका । स्त्री । वीणायाम् ॥

कण्ठतालिका । स्त्री । अश्वग्रीवावेष्टकरज्ज्वाद्दौ ॥ इति शब्दमाला ॥

कण्ठनीडक. । पु । चिल्लपक्षिणि । चील इति भाषा ॥ इतित्रिकाण्डशेष ॥

कण्ठनीलक । पु । उल्कायाम् । मसाल इतिभाषा ॥ इतिशब्दमाला ॥

कण्ठपाशक । पु । हस्तिकण्ठवेष्टनरज्जौ ॥

कण्ठभूषा । स्त्री । ग्रैवेयके । कण्ठाभरणे । गलसकरी इतिचभाषा ॥ भूष्यतेऽनया । भूष अलङ्कारे । गुरोश्चहल्लः । कण्ठस्यभूषा ॥

कण्ठमणि । पु । ग्रैवेयकमणौ । काकले ॥ कण्ठस्य मणि. ॥

कण्ठशुद्धि. । स्त्री । गलस्य कफाद्यलिप्तत्वे ॥

कण्ठसूत्रम् । न । स्तनालिङ्गने ॥ यथा । यत कुर्वते वक्षसि वल्लभस्य स्तनाभिघात निबिडोपगूढ्या । परिश्रमार्थं शनकैर्विदग्धास्तत्कण्ठसूत्र प्रवदन्तिसन्त इति ॥

कण्ठाग्नि । पु । पक्षिणि ॥ कण्ठे अग्निरस्य ॥ इति त्रिकाण्डशेष ॥

कण्ठाल. । पु । शरणे ॥ युद्धे ॥ गोणाप्रभेदे । खुर्जी इतिभाषा ॥ क्रमेलके ॥ नौकायां.खनित्रे ॥

कण्ठाला । स्त्री । जालगोणिकायाम् ॥

कण्ठिका । स्त्री । कण्ठाभरणे । एकयष्टीकण्ठी इति भाषा ॥ इतिहेमचन्द्रः ॥

कण्ठी । स्त्री । गले ॥ अश्वकण्ठवेष्टनर

त्वचर्म्मादौ ॥

कण्ठीरव । पुं । सिंहे ॥ मत्तमातङ्गे ॥ पारावते ॥

कण्ठीरवी । स्त्री । वासकवृक्षे ॥

कण्ठेकाल । पु । महादेवे ॥ कण्ठेकालोस्य । हलदन्तादित्यलुक् ॥

कण्ठ्य । त्रि । कण्ठभवे शब्दादौ ॥ कण्ठहिते ॥ उभयत्र शरीरावयवत्वात् यत् ॥

कण्डनम् । न । निस्तुषीकृतौ । उदूखलादिना तण्डुलादे र्निर्मलीकरणे । कूडना इतिभाषा ॥

कण्डनी । स्त्री । उलूखले ॥ मुषले ॥

कण्डरा । स्त्री । महास्नायौ । महानाड्याम् ॥

कण्डिका । स्त्री । वेदैकदेशे ॥

कण्डु । स्त्री । कण्डूयायाम् । गात्रविघर्षणे ॥ कण्डते । कडिमदे । मृगय्वादित्वात् कुप्रत्यय ॥

कण्डुर । पुं । कारवेल्ललतायाम् ॥ कुन्दरतृणे ॥

कण्डुरा । स्त्री । आत्मगुप्तायाम् । शूकशिंब्याम् ॥ अन्यत्र पर्य्याम् ॥ काण्डूराति । रादाने । आतोनुपेतिकः । पृषोदरादित्वात् ह्रस्वः ॥

कण्डू । स्त्री । खाज इतिप्रसिद्धे रोगे । खर्ज्ज्वाम् । कण्डूयायाम् ॥ कण्डूयनम् । कण्डूञ् गात्रविघर्षणे । सम्पदादित्वात् क्विप् ॥

कण्डूकरी । स्त्री । शूकशिंब्याम् ॥

कण्डूघ्न । पु । आरग्वधे ॥ गौर सर्षपे ॥

कण्डूति । स्त्री । कण्ड्वाम् । खाज इति भाषा ॥ कण्डूयते. क्तिच् ॥

कण्डूयनम् । न । कण्ड्वाम् ॥

कण्डूयमान. । त्रि । कण्डूयितरि । कषमाणे ॥

कण्डूया । स्त्री । कण्डूयने । खर्ज्ज्वाम् ॥ कण्डूयनम् । कण्डूञ्० । कण्ड्वादिभ्योयक् । अप्रत्ययात् ॥

कण्डूयिता । त्रि । कण्डूयमाने ॥

कण्डूरा । स्त्री । प्रावृषायण्याम् । मर्कव्याम् ॥ कण्डूंराति । रा० । आत इति कः ॥

कण्डूल: । पुं । शूरणे ॥ त्रि । कण्डूयुक्ते ॥

कण्डोल । पु । उष्ट्रे ॥ गोणीप्रभेदे ॥ पिटे । वंशादिनिर्मिते धान्यादिस्थापनभाण्डे ॥ कण्डते । कडिमदे । बाहुलकादोलच् ॥ यद्वा । कडिग- डिगण्डीतिरूपे कण्डे, प्राठादोलच ॥

कण्डोलक: । पु । कण्डोले ॥

कण्डोलवीणा । स्त्री । केंदृका इति

॥ नेत्रगण्डयोर्ल० । नेत्रे यस्याः केकरे पिङ्गलेवा स्यादु शीला श्यावलोलेचणाच । कूपौयस्या गण्डयोश्च स्मितेषु निस्सन्दिग्ध बन्धकीं तांविदन्ति ॥ १९ ॥ अन्यदप्याह । प्रविलम्बिनिदेथर ललाटे श्वशुरंहन्त्युदरे स्फिजौ पतिञ्च । अतिलोमचयान्वितोत्तरौष्ठी नशुभाभर्तुरतीवयाचदीर्घा ॥ २० ॥ स्तनकर्णदन्त० । स्तनौ सरोमौ मलिनोल्वणौ चकर्णौदन्तौ विषमौचकर्णौ । स्थूलाः कराला विषमाश्चदन्ताः क्लेशाय चौर्य्यायच कृष्णमांसा ॥ २१ ॥ हस्त० । क्रव्यादरूपैर्वृककाककङ्क. सरीसृपोलूक समानचिह्नैः । शुष्कैः सिरालैर्विषमैश्चहस्तैर्भवन्ति नार्यः सुखवित्तहीनाः ॥ २२ ॥ अन्यदप्याह । यातूत्तरोष्ठेन समुन्नतेन रूक्षाग्रकेशीकलहप्रियासा । प्रायो विरूपासु भवन्तिदोषायत्रा कृतिस्तत्रगुणावसन्ति ॥२३ ॥ अधुना शरीरस्येवविभागमाह । पादौसगुल्फौ प्रथमं प्रदिष्टं जङ्घे द्वितीयं तु सजानुचक्रे । मेढ्रोरुमुष्कञ्चततस्तृतीयं नाभिंकटिंचैवचतुर्थमाहु. ॥ २४ ॥ उदरंकथयन्तिपञ्चमं हृदयंषष्ठमथस्तनान्वितम् । अथसप्तममांसजत्रुणी कथयन्त्यष्टममोष्ठकन्धरे ॥ २५ ॥ नवमन्नयनेचसभ्रुणी सललाट दशमंशिरस्तथा । अशुभेष्वशुभंदशाफलं चरणाद्येषु शुभेषु शोभनम् ॥ २६ ॥ इतिवाराह्या कन्यालक्षणा नामाध्यायः । ६७ ॥ * ॥ दशकुमार्यीम् । सहायाम् ॥ स्थूलैलायाम् ॥ वाराहीकन्दे ॥ वन्ध्याकर्कोटक्याम् ॥ घृतकुमार्यौ ॥ जन्मकालीनचन्द्राश्रितैतद्राशिफलम् । युवतिगे शशिनि प्रमदाजनप्रवरकेलिविलासकुतूहली. । विमलशीलयुतोजननोत्सवे सुविधिनाविधिना सहितः पुमान् ॥ कन्याव्ययोङ्गनो मर्थो नानाशास्त्रविशारद. । सौभाग्यगुणसम्पन्नः सुन्दरः सुरतप्रियः ॥ चतुरन्यगाढन्तिभेदे । श्रुणोचेत् कन्या । भास्वत्कन्या चैकाधन्या । यस्याः कूले कृष्णोऽखेलत ॥ कनति । कनदीप्तौ । अघ्न्यादि' । कन्यायाः कनीनचेतिनिर्देशात्यसिप्रथम इतिनलोप ॥ दक्षिणापथेसमीपेदुर्गादेव्याम् ॥

कन्याकुब्जः । पु । कान्यकुब्जदेशे ॥ इतिहेमचन्द्र ॥

कन्याटः । पुं । वाससद्मनि ॥ इतित्रिकाण्डशेष. ॥

कन्याधिप । पुं । बुधग्रहे ॥

कन्यापति । पुं । जामातरि ॥

कन्यापाल । पुं । कनैत इतिहिमगिरिप्रसिद्धे शूद्रजातिविशेषे । पालवशिजि ॥

कन्याराम । पुं । बुद्धभेदे ॥

कन्युषम् । न । हस्तपुच्छे । हथेली अँगौछा इति भाषा ॥

कप । पुं । वरुणे ॥

कपट । पुं । न । व्याजे । दम्भे । छद्मनि ॥ के मूर्द्धनि पटइव आच्छादक ॥ यद्वा । पटति । पट० । अच् । कस्य इन्द्रस्यापि पटो व्यापक ॥

कपटधारी । त्रि । छलाढ्ये ॥

कपटिक । त्रि । कपटविशिष्टे । कपटिनि ॥ अस्त्यर्थे ठन् ॥

कपटी । त्रि । अयथार्थव्यवहारवति । दम्भविशिष्टे ॥ कपटोऽस्ति अस्याश्मि, न्वा । इनि ॥

कपटिनी । स्त्री । गौडभाषया चीडा नामनि गन्धद्रव्ये ॥

कपटेश्वरी । स्त्री । श्वेतकण्टकार्याम् ॥

कपर्द्द । पुं । शिवस्यजटाजूटे ॥ वराटके ॥ पर्वपूरणे । सम्पदादित्वात् भावे क्विप् । रास्लोप । केन सुखेन जलेन वा परं पूर्त्तिं ददाति । सुपीति योगविभागात्कः ॥ कस्य जलस्य परा पूरणेन दापयतीति वा । दैप् शोधने । आत इति क ॥

कपर्दिका । स्त्री । वराटिकायाम् ॥

कपर्द्दक । पुं । हरजटाजूटे ॥ चराचरे । वराटके ॥ अस्या प्रभेदा । सुवर्णवर्णा सिंही १ । धूम्रवर्णा व्याघ्री २ । पीतपृष्ठासितोदरा मृगी ३ । श्वेतवर्णा हंसी ४ । नातिदीर्घिका विद्रुमा ५ ॥ इतिराजनिर्घण्ट ॥

कपर्द्दी । पुं । शिवे । ईशे ॥ कपर्द्दोजटाजूटोऽस्यास्ति । इनि ॥

कपाटम् । त्रि । अररे । कवाटे । किंवाड इतिभाषा ॥ क वातम् शिरोवा पाटयति प्रविशते । पटगतौ । कर्मण्यण् ॥ अर्द्धर्चादि ॥

कपाटिका । स्त्री । क्षुद्रकपाटे । किवाँडी इतिभाषा ॥ कपाटएव । स्वार्थे क । टाप् ॥

कपाटी । स्त्री । कपाटे ॥ अल्पत्वात् ङीप् ॥

कपाल । पुं । न । शिरोस्थिनि । कर्परे ॥ घटादि शकले । खपरा इति भाषा ॥ व्रजे । समूहे ॥ यतीनां स्नायकर्परादिभिक्षापात्रे ॥ यथा । कपालं वृक्षमूलानि कुचेलमसहायता । समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणमिति ॥ कुष्ठरोगविशेषे ॥ शस्त्र

यथा यथा । कृष्णाद्यकपालाभं यद्रूक्षं परुषं तनु । कपालं तोदबहुलं तत् कुष्ठं विषमस्मृतमिति ॥ कपालयति । कर्मण्यण् ॥ यद्वा । कम्पते । कपिचलने । तस्मिन्निविशिविडिम्बिकुजिकपिपलिपञ्चिभ्य कालन् । कपीतिनिर्देशाल्लोपः । आगमशास्त्रानित्यत्वा वा ॥

कपालमालिका । स्त्री । तर्क्वाम् । तर्कौ । तक्षुआ इतिभाषा ॥ इतिशिकाण्डशेषः ॥

कपालभृत् । पु । शिवे ॥ कपालं ब्रह्मकपालं च बिभर्त्ति । डुभृञ्० । क्विप् ॥

कपालमाली । पुं । भूतेशे । शिवे ॥ कपालानां मालाऽस्यास्ति ऽस्य । व्रीह्यादित्वादिनिः ॥

कपालिका । स्त्री । भग्नमृन्मयभाजनशकले ॥ दन्तरोगविशेषे ॥ तल्लक्षणं यथा । कपालेष्विव दीर्यन्ते दन्तानां सैव शर्करा । कपालिकेति पठिता सदा दन्तविनाशिनीतिमाधवः ॥

कपाली । पु । महादेवे । ब्रह्मकपालशालिनि ॥ कपालोऽस्ति अस्य । अतइनिः ॥ स्वनाम्नाख्याते जाति वि० ॥ स तु ब्राह्मणकन्यायां तीवराज्जात इति पराशरपद्धतिः ॥

कपालिनी । स्त्री । दुर्गायाम् ॥ इन्नन्तात् ङीप् ॥

कपि । पु । सिल्हके ॥ शाखामृगे । वानरे ॥ एकैकस्योपकाराय प्राणान् दास्यामि ते कपे । इति हनूमन्तं प्रति श्रीरामवाक्यम् ॥ मधुसूदने ॥ रक्तचन्दने ॥ कम्पते । कपिचलने । कुण्डकम्प्योर्नलोपश्चेतिइप्रत्ययः ॥ वराहे ॥ कादुदकात् भूमिं पातिरक्षतिकपिर्वराहः । पातेर्डौ कुडकात् किप्रत्ययः ॥

कपिकच्छु । स्त्री । मर्कट्याम् । शूकशिम्ब्याम् । कौंच किवाँच इतिभाषा ॥ कपिकच्छुर्भृशंवृष्या मधुराबृंहणी गुरुः । तिक्ता वातहरी बल्या कफपित्तास्रनाशिनी ॥ तद्बीजं वातशमनं स्मृतं वाजीकरं परम् ॥ कपीनां कच्छुः कण्डूहेतुत्वात् ॥

कपिकच्छुफलम् । न । शूकशिम्ब्याः फले ॥ कोमलं रोमसहितं स्विन्नमाज्ये विपाचितम् । सोपस्करं सशाकीकं सिन्धुजेन समन्वितम् ॥ कपिकच्छुफलं पथ्यं मधुरं बृंहणं गुरु । स्निग्धं शीतानिलहरं दुष्टग्रथविनाशनम् ॥

कपिकच्छुफलोपमा । स्त्री । जतुकालतायाम् ॥

तदन्यजे । अनुजे । पश्चाज्जाते ॥ अनयोरेषा मतिशयेन युवा अल्पो वा । अजादीगुणवचनादेवे तीष्ठन । युवाल्पयो कनन्यतरस्यामिति कनादेश ॥

कनिष्ठकम् । न । तृणकविशेषे ॥

कनिष्ठा । स्त्री । दुर्बलाङ्गुलौ ॥ पश्चाज्जातायाम् । अनुजायाम् ॥ कनिष्ठस्य भार्यायाम् ॥ कनिष्ठस्य स्त्री । पुंयोगलक्षणा ङीषं वाधित्वा अजादित्वा ट्टाप् ॥ नायिकाभेदे ॥

कनी । स्त्री । दुहितरि । कन्यायाम् ॥

कनीनिका । स्त्री । अक्षितारके ॥ कनिष्ठाङ्गुलौ ॥ कनति । कनीदीप्तौ । वाहुलका दीन । स्वार्थेकन । टाप् । इत्वम् ॥

कनीयान । त्रि । कनिष्ठार्थे ॥ अयमनयोरतिशयेन युवा अल्पोवा । द्विवचनविभज्योपपदेतरवीयसुनौ ।अजादीगुणवचनादेवेति ईयसुन । युवाल्पयोरिति कन,देश ।

कनीयसम् । न । ताम्रे ॥

कन्तु । त्रि । सुखविशिष्टे । सुखिनि ॥ क सुखम् अस्ति अस्य ॥ क शंभ्यां बभयुस्तितुतयस इति तु ॥काम देवे ॥ कुसूले ॥ कामयते । कमु कान्तौ । अर्तिहृषिकम्यमीति तु प्रत्ययो धातोस्तु गागमश्च ॥ कमिमनीतितुर्वा ॥ हृदये ॥

कन्था । स्त्री । मन्मथभित्तौ । काँथ इतिभाषा ॥ प्रावरणान्तरे । स्यूतजीर्णपटनिर्मिताच्छादनवस्त्रे । कथरी गुदरी इतिच भाषा॥ यथा । भिक्षा प्राणस्य रक्षार्थं कन्था शीतनिवारणी । अचला केशवे भक्ति र्विभवैःकिं प्रयोजनमिति ॥ कम्यते। कमु० । वाहुलकात् थन । टाप ॥

कन्थारी । स्त्री । कन्थरी दुर्धर्षा तीक्ष्णकण्टका तीक्ष्णगन्धा दुष्प्रवेशा इत्यादिपर्यायवति वृक्षे ॥

कन्द । पु । न । सूरणे ॥ ग्राम्य कन्दस्तु दोषल ॥ सस्यमूले ॥ सलगम इति प्रसिद्धे मूलविशेषे । गृञ्जने ॥ पु । मेघे ॥ योनिरोगविशेषे । तस्य निदानलक्षणे यथा ।दिवास्वापा दतिक्रोधा द्व्यायामा दतिमैथुनात । क्षताच्च नखदन्ताद्यैर्वाताद्या कुपिता यदा । पूयशोणितसङ्काशं लकुचाकृतिसन्निभम् । उत्पद्यते यदा योनौ नाम्ना कन्दस्तु योनिज, इति ॥सचतुर्विध ।लक्षणभेदात । यथा । रूक्षविवर्णं स्फुटितं वातिकं तं विनिर्दिशेत् । दाहरागज्वरयुतं विद्यात पित्तात्मकन्तुतम् ॥ नीलपुष्पप्र

तीकार्श्यं कण्डूमन्तं कफात्मकम् स वैलिङ्गसमायुक्तं सन्निपातात्मकं विदु ॥ सन्निपातात्मकोऽसाध्य शेषा. कृच्छ्रप्रसाधना इति ॥ कुन्दति कन्दयति कन्द्यते वा । कदि आह्वाने रोदनेच । अच् घञ्वा ॥

कन्दगुडूची । स्त्री । गुडूचीविशेषे । कन्दामृतायाम् । पिण्डालुनि । सुष मी इति काश्यादिदेशप्रसिद्धे कन्दे ॥

कन्दटम् । न । शुक्लोत्पले । कोंमी- इति भाषा ॥

कन्दफला । स्त्री । सुरकारवेल्याम् ॥

कन्दमूलम् । न । मूलके ॥

कन्दर. । पु । अङ्कुशे ॥ पु । स्त्री । गुहायाम् ॥ न । आर्द्रके । शृङ्गवेरे ॥ केन जलेन दीर्यते । दृविदारणे । खदोरप ॥

कन्दरा । स्त्री । दर्याम् । कृत्रिमाकृत्रिमेगह्वाकारे गिरिविवरे ॥ कन्दरा टाप् ॥

कन्दराकर' । पुं । शिलोच्चये । पर्वते ॥ कन्दराणामाकरः ॥

कन्दराल. । पुं । गर्दभाण्डवृक्षे ॥ कन्दरांलाति । ला आदाने । आत इति क. ॥ प्लक्षद्रुमे ॥ कर्पराले । आखोटवृक्षे ॥ कन्दरा भजति । अलंभूषया दे । कर्मण्यण् ॥ कन्दराऽस्यास्ति या। सिध्मादिभ्यश्च ॥

कन्दरालक । पु । कन्दराले ॥

कन्दरी । स्त्री । गुहायाम् ॥

कन्दरोद्भवा । स्त्री । क्षुद्रपाषाणभेदिनि वृक्ष ॥

कन्दर्प । पु । कामदेवे ॥ पुरुषोत्पत्त्यर्थों य कामाना मध्ये काम.सच भगवतो विभूति ॥ कमिस्त्वय्ययं कुत्सायाम् । कुत्सितोदर्पोऽस्य अस्माद्वा ॥ यद्वा ॥ कसुखं तत्र तेन वा दृप्यति । दृपहर्षमोचनयो । पचाद्यच् ॥ अथवा । केब्रह्मणिदृप्तवान् क ब्रह्माणं दर्पितवान वा । पृषोदरादि ॥ ध्रुवकप्रभेदे ॥ यथा । यत्रो विंशतिवर्णाङ्घ्रिर्ध्रुव. कन्दर्पसंज्ञकः । वीरे वा करुणे वा स्यात् खण्डताले विधीयते इति सङ्गीतदामोदर ॥

कन्दर्पकूप' । पु । भगे । योनौ ॥

कन्दर्पजीव । पु । कामवृद्धिनामवृक्षे ॥

कन्दर्पमुषल । पु । मेढ्रे । शिश्ने ॥ इ तित्रिकाण्डशेष ॥

कन्दर्पशृङ्खल । पु । शृङ्गारबन्धविशेषे ॥ तल्लक्षणम् । नारी पादद्वयं स्थाप्य कान्तस्योरुद्वयोपरि । कटिमान्दोलयेद्यत्र बन्धः कन्दर्पशृङ्खल इति॥

कन्दलम् । न । कलापे॥ उपरागे ॥ नवाङ्कुरे ॥ कलध्वनौ॥ अपवादे ॥ पुं।

कनके ॥ युद्धे ॥ कपाले ॥ भूमिकन्दस्या पुष्पे ॥

कन्दलता । स्त्री । मालाकन्दे ॥

कन्दली । स्त्री । मृगविशेषे ॥ गुल्मप्रभेदे ॥ पताकायाम् ॥ पद्मबीजे ॥ कन्देसस्यमूले लीयते । लीङ् श्लेषणे । अन्येष्वपीतिड ॥ यद्वा । कन्दते । कदि० । वृषा०कलच् । गौ०ङीष् ॥ भूमिकन्दल्याम् ॥

कन्दलीकुसुमम् । न । शिलीन्ध्रे ॥

कन्दवर्द्धनः । पुं । शूरणे ॥

कन्दवल्ली । स्त्री । वन्ध्याकर्कोटक्याम् ॥

कन्दवहुला । स्त्री । त्रिपर्णिकायाम् ॥

कन्दशूरण. । पुं । ओले । शूरणे ॥

कन्दसंज्ञम् । न । योन्यर्शसि । योनिरक्तरोगविशेषे ॥ तस्यनिदानादि कन्दे द्रष्टव्यम् ॥

कन्दसारम् । न । नन्दनवने ॥

कन्दाढ्य । पुं । धरणीकन्दे ॥

कन्दार्ह । पु । शूरणे ॥

कन्दालु । पु । कासालौ ॥ धरणीकन्दे ॥ त्रिपर्णिकायाम् ॥

कन्दी । पुं । शूरणे ॥

कन्दिरी । स्त्री । लज्जालुवृक्षे ॥

कन्दुः । पुं । स्त्री । कडाही इति भाषाप्रसिद्धे भर्ज्जनपात्रे । स्वेदन्याम् ॥ स्कन्दति । स्कन्दिर्गतिशोषणयोः । स्कन्देः सलोपश्चेत्यु. ॥

कन्दुक । पु । गेन्दुके । गेंद इति भाषा ॥ कन्द्यते । कदि० । बाहुलकादु. । कंसुखं ददाति द्यते यति यच्छति वा मित० डु । स्वार्थेकन् ॥ कंशिरो दुनोति द्रवति वा । टुदु उपतापे द्रुगतौ वा । प्राग्वत् ॥

कन्दुपक्वम् । न । जलोपसेकं विना केवलपात्रे यदग्निनापक्वं भृष्टतण्डुलादि तस्मिन् ॥ यथा । कन्दुपक्वानि तैलेन पायसं दधिसक्तवः । द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपीति तिथ्यातितत्त्वे कूर्मपुराणम् ॥

कन्दोटः । पु । शुक्लोत्पले ॥ न । नीलोत्पले ॥

कन्दोतः । पुं । कुमुदे । त्रिशाखसे ॥

कन्ध । पु । मेघे । वारिदे ॥

कन्धरः । पु । वारिवाहे ॥ भारिपक्षे ॥ कम्जलस्य धरः ॥

कन्धरा । स्त्री । ग्रीवायाम् ॥ कंशिरो धारयति । संज्ञाया भृत्वृजीति खच् । खच्चिह्रस्व. ॥ यद्वा । धरति । धृञ० । पचाद्यच् । कंशिरसोधरा ॥

कन्धि । स्त्री । ग्रीवायाम् ॥ पु । समुद्रे ॥

कन्नम् ॥ न । पातके ॥ मूर्च्छायाम् ॥

कन्यका । स्त्री । दशवर्षीयाङ्कुमार्यां

कपिकन्दुकम् । न । शिरोस्थिनि ॥
कपिका । स्त्री । नीलसिन्दुवारवृक्षे ॥
कपिकेतनः । पुं । अर्जुनाख्यपाण्डवे ॥ कपि. केतन चिह्नमस्य ॥
कपिकोलि. । पु । कोलिविशेषे ॥
कपिचूडा । स्त्री । आम्रातकवृक्षे ॥
कपिचूत. । पुं । आम्रातके । आम्डा इतिभाषा ॥
कपिज. । पुं । तुरुष्के । सिल्हके । शिलारस इति गौडभाषा । नागौरी गूद इति भाषा ॥
कपिजाङ्गिका । स्त्री । तैलपिपीलिकायाम् ॥
कपिञ्जल. । पुं । तित्तिरौ ॥ कपिञ्जल इतिप्राज्ञैः कथितो गौरतित्तिर ॥ कपिञ्जल इतिख्यातो लोके कपिश तित्तिर इतिच ॥ चातकखगे ॥ तैलपायिनि ॥
कपितैलम् । न । तुरुष्कनामगन्धद्रव्ये । सिल्हके । नागौरीगूदइतिभाषा ॥
कपित्थ । पु । कैथ इति प्रसिद्धे वृक्षे । वृक्षफले ॥ कपित्थोथदधित्थस्तु ग्राही फलसुगन्धक. । अक्षमन्दोदधि फल श्चिरभाक्षी कपिप्रियः ॥ कपित्थमामं सङ्ग्राहि कषायं लघु लेखनम् । पक्कं गुरु तृषाहिक्काशमनंवातपित्तजित् ॥ स्वाद्वम्लं तुवर कण्ठशोधनं ग्राहि दुर्जरम् ॥ अपिच । कपित्थमाम कण्ठघ्नं विशदग्राहि वातलम् । मधुराम्लकषायत्वात्सौगन्ध्याच्च रुचिप्रदम् ॥ कपयस्तिष्ठन्त्यत्र । कपिरिवतिष्ठतिवा । सुपिस्थ इतिक. । पृ० ॥
कपित्थत्वक । पुं । एलवालुके ॥
कपित्थपर्णी । स्त्री । कपित्थानीति गौडभाषाप्रसिद्धे वृक्षविशेषे । विरजायाम् । चित्रपर्ण्याम् ॥
कपित्थास्य । पु । वानरविशेषे । गोलाङ्गूले । दधिशोणे । नगाटने ॥
कपिध्वज । पुं । हनुमता महावीरेण ध्वजरूपतयाऽनुग्रहीते अर्जुने ॥ कपिर्हनूमान् ध्वजे अस्य ॥
कपिनामा । पु । सिल्हके ॥ कपिर्नामास्य ॥
कपिपिप्पली । स्त्री । रक्तापामार्गे । वशिरे ॥ सूर्यावर्त्तवृक्षे ॥
कपिप्रभा । स्त्री । कपिकच्छ्वाम् ॥
कपिप्रभु । पु । रघुनाथे । श्रीरामे ॥ कपीनां सुग्रीवादीनां प्रभु. ॥ कपिराजे ॥
कपिप्रियः । पुं । आम्रातके ॥ कपित्थे ॥ कपीनां प्रियः ॥
कपिप्रिया । स्त्री । चिञ्चायाम् । तिन्तिडीकायाम् ॥ कपीनां प्रिया ॥
कपिरथ. । पु । श्रीरामे ॥ अर्जुने ॥

श्यावे । कृष्णपीतमिश्रितवर्णे ॥ त्रि । तद्वर्णयुक्ते ॥ कपिवर्णो विशेषोऽस्यास्ति । लोमादित्वात् श ॥ विरक्तसन्ध्याकपिशमिन्त्यत्र कपिशं ताम्रमिति मल्लिनाथ. ॥

कपिशा । स्त्री । माधव्याम् । माधुरीसुरायाम् ॥ नदीविशेषे ॥ टाप् ॥

कपिशाञ्जन । पु । शिवे ॥

कपिशापुत्र. । पु । पिशाचे ॥

कपिशी । स्त्री । माधव्यामदिरायाम् ॥

कपिशीका । स्त्री । मदिरायाम् ॥ इति चिकाण्डशेष. ॥

कपिशीर्षम् । न । कपशीर्षे । प्राकाराग्रे ॥

कपिशीर्षकम् । न । हिङ्गुले ॥ खोडकशीर्षके । प्राकाराग्रे ।

कंपिष्ठल. । पुं । ऋषिविशेषे ॥ कपिष्ठलोगोत्र इतिनिपातनात् षत्वम् ॥

कपीज्य । पु । क्षीरिकावृक्षे ॥

कपीतः । पु । श्वेतकुञ्जावृक्षे ॥

कपीतन. । पु । गर्दभाण्डे ॥ शिरीषवृक्षे ॥ आम्रातके ॥ अश्वत्थे ॥ पूगवृक्षे ॥ मालूरवृक्षे । बिल्वे ॥ तनोति । तनुविस्तारे । पचाद्यच । कपीनाम् कपेर्वर्णस्य वा तन. । अन्येषामपीतिदीर्घ. ॥ यद्वा । या. लक्ष्म्या. तनः ईतनः । कपीना क्वपे वा ईतनः ॥

कपीन्द्र । पु । हनूमति ॥ सुग्रीवे ॥ राघवे ॥ वराहमूर्त्तौ ॥ कपिश्चासाविन्द्रश्च । कपीनामिन्द्रो वा ॥

कपीश । पु । हनुमति ॥ कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ कपीनामीश ॥

कपीष्ट. । पुं । राजादनवृक्षे ॥ कपित्थे ॥

कपूय । त्रि । कुत्सिते ॥ कुत्सितं पूयते । पूयी विसरणे । पचाद्यच् । पृषोदरादि. ॥

कपूयचरण. । त्रि । दुष्कृतिनि । कुत्सितकर्मणि ॥ कपूयं निन्दितं चरणं कर्मास्य ॥

कपोत । पु । पारावते । कलरवे ॥ कपोतको गुरु स्निग्धो रक्तपित्तानिलापहः । सङ्ग्राही शुक्रलः शीतः सुस्वादुरुचिकारक. ॥ घुघुती इति प्रसिद्धे चित्रकण्ठविहङ्गमे । धूसरे । धूम्रलोचने ॥ कस्य वायो पोत इव । कोवायु पोतो नैारिवास्य वा ॥ यद्वा । कवते । कद्रुवर्णे । कबेरोतच् पश्च ॥ पश्चिमाचे ॥

कपोतकम् । न । सैावीराञ्जने ॥

कपोतचरणा । स्त्री । नलीनामगन्धवस्तुनि ॥

कपोतपालिका । स्त्री । स्तम्भाग्रप्रसारिते दारुविशेषे ॥ सैाधादिप्रान्तकाष्ठा

द्दिरचिते पञ्चिस्थाने । विटङ्के ॥ पालयति । पालरक्षणे । ण्वुल । कपोतानां पालिका ॥ कपोतान् पालयति वा । कर्मण्यण् । संज्ञायां कन् इति कन ॥

कपोतपाली । स्त्री । विटङ्के ॥ कपोतान् पालयति । कर्मण्यण् । ङीप् ॥

कपोतवङ्का । स्त्री । ब्राह्मीवृक्षे ॥

कपोतवर्णी । स्त्री । सूक्ष्मैलायाम् ॥

कपोतवाणा । स्त्री । नलीनामगन्धद्रव्ये ॥

कपोतसारम् । न । स्रोतोऽञ्जने ॥

कपोताङ्घ्रिः । पु । कपोतपादे ॥ स्त्री । नख्याम् । गन्धद्रव्यविशेषे ॥ कपोताङ्घ्रिरिव ॥

कपोताभः । पुं । कपोतवर्णे ॥

कपोतारिः । पु । श्येनपक्षिणि ॥ कपोतानाम् अरिः ॥

कपोलः । पुं । गण्डे । गल्ले । चक्षुःश्रोत्रयोर्मध्ये तिर्यक्सन्धिभागे । गाल इति भाषा ॥ कम्पते । कपिचलने । कपिगण्डिगण्डीत्योलच् । कपीतिनिर्देशात् नलोपः ॥ कं सुखं पोलति वा । पुल महत्त्वे । कर्मण्यण् ॥

कप्याख्यः । पुं । सिह्लके ॥

कप्यासः । पुं । वानरगुदे । कपिपृष्ठान्ते ॥

कफः । पुं । शरीरस्थधातुविशेषे । श्लेष्मणि । सौम्यधातौ ॥ कफस्य कोपः कुसुमागमे भवति । अस्य प्रकोपहेतुः । गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः । तुहिनपतनकाले श्लेष्मणः सम्प्रकोपः प्रभवति दिवसादौ भुक्तमात्रवसन्ते ॥ अपिच । गुरुपटुमधुराम्लस्निग्धमापैस्तिलैश्च द्रवदधिदिननिद्राशीतनित्यचेष्टाभिः । प्रथमदिवसभागे रात्रिभागे पिचाद्ये भवति हि कफकोपो भुक्तमात्रे वसन्ते इति ॥ त्रिधाविभक्तस्य दिवसस्य प्रथमे भागे एव रात्रेश्चाद्ये भागे ॥ फाल्गुनचैत्रमासे च जन्तुपीडाकरो मतः । सर्वशास्त्रविचारकैः श्लेष्मा राजप्रकीर्तितः ॥ केन जलेन फलति । फलनिष्पत्तौ । अन्येष्वपीति डः ॥ यद्वा । केशिरसि कफति वा पूर्ववत् डः ॥

कफकूर्चिका । स्त्री । लालायाम् । स्त्रग्गाकायाम् । आस्यासवे । लाल थुक इत्यादि भाषा ॥

कफघ्नी । स्त्री । क्षुपाप्रभेदे ॥

कफणिः । पुं । स्त्री । कफोणौ ॥ केन सुखेन फणति स्फुरति वा । फण गतौ स्फुरणे चलने वा । इन् । पृषोदरादि ॥

कफणी । स्त्री । कफोणी ॥ कूर्परिका

…दिति पञ्चेङीष ॥

कफप्रकृतिक । त्रि । कफस्वभावे ॥ त ल्लक्षणं यथा। गम्भीरबुद्धिः स्थूलाङ्ग स्निग्धकेशो महाबलः ।स्वप्नेजलाश यालोकी श्लेष्मप्रकृतिकोनर इति ॥

कफवर्द्धन.। पु। पिण्डीतगरवृक्षे॥ त्रि। श्लेष्मवृद्धिकारके ॥

कफविरोधि । न । मरिचे ॥

कफात । पु । कफनाशके ॥ कफमत्ति । अद्° । क्विप् ॥

कफान्तक । पु । बर्बुरवृक्षे ॥ इतिराज निर्घण्ट ॥

कफारि । पुं । शुण्ठ्याम् ॥

कफी । पु । गजे । हस्तिनि ॥ त्रि । श्ले ष्मले । श्लेष्मणे । श्लेष्मयुक्ते ॥ कफो ऽस्यास्ति । इन्द्रोपतापेतीनि ॥

कफेलू. । पु । श्लेष्मातके ॥ कफंलाति । ला आदाने । कन्दूहन्भूजम्बूकफेलू कर्कन्धूदिधिषूरिति कूप्रत्ययो नि पातनादेत्वम् ॥

कफोणि । पु । कूर्परे । भुजमध्यग्रन्थौ । कोहणी इति भाषा ॥ कं सुखं स्फो रयति । स्फुरस्फुरणे सञ्चलनेच । ण्यन्तः । अचः ॥ पृ° । यद्वा । केन सुखेन फणति स्फुरतिवा। फण° । स्फुर° । इन् । पृ° ॥

कफोणी । स्त्री । कूर्परे ॥

कफोतक्लेश. । पु । कफस्य वमनायोप स्थितौ ॥

कबन्ध । पु । उदरे ॥ धूमकेतौ ॥ रा हौ ॥ रक्षोविशेषे ॥ न । जले । उ दके ॥ पुं । न । क्रियायुक्तशिरःशू- न्यकलेवरे ॥ कबन्धोऽस्त्रीक्रियायुक्त मपमूर्द्धकलेवरम् ॥ यथा । मनुष्या णा सपक्षेषुच्तेषु हृतमूर्द्धसु । त दावेशात्कवन्ध स्यादेकोऽमूर्द्धाक्रि याम्वित.॥अपिच। नागानामयुतं तु रङ्गनियुतं सार्द्धरथानाशतं पत्तीनां दशकोटयोनिपतिता एक कबन्धो रणे । तादृक्कोटिकबन्धनर्त्तनविधौ खेलत्पुनःखेशिरःत्सेघाकोटिनिपात नेरघुपते कोदण्डघण्टारवः ।इति प्राचीना ॥ कं सुखं बध्नाति। बन्धब न्धने। कर्मण्यण॥कंबध्यतेछिद्यतेऽस्म स्मात् । अच्॥ केनवायुना बध्यतेवा । कोवायुरेवबन्ध आश्रयोयस्यवा॥

कबन्धी । पु । ऋषिविशेषे ॥

कपित्थ । पु । कपित्थवृक्षे ॥ कपयः ति ष्ठन्त्यत्र ष्ठा° । सुपिस्थ इतिकः ।पृ°॥

कविल । पुं । कपिलवर्णे ॥ त्रि । कपि लवर्णोक्ते ॥

कभम् । न । रोहिणीनक्षत्रे ॥

कम् । अ । पादपूरणे ॥ जले ॥ मस्त के॥ सुखे ॥ मङ्गले ॥ निन्दायाम् ॥

कम्यते । कमु० । णिङभावे णिच ॥

कमठ । पु । कच्छपे ॥ दैत्यविशेषे ॥ मुनिभाजने ॥ शल्लक्याम् ॥ भगवतोऽवतारविशेषे ॥ न । मुमानोजपानविशेषे । वक्तो वत्का लोटा इति भाषाप्रसिद्धं ॥ काम्यते । कमु० । कमेरठ ॥ के जले मठतिवा । मठमदनिवासयोः । पचाद्यच ॥

कमठी । स्त्री । कच्छप्याम् । दृत्याम् ॥ स्वल्पकूर्मजातौ ॥ शल्लक्याम् ॥ पुंयोगादिति जातेरितिवा ङीष् ॥

कमण्डलुः । पुं । न । करके । कुण्ड्याम् । सन्न्यासिनां जलकाष्ठादिमयेपात्रे ॥ अलाबु दारुपात्रञ्च मृन्मयं वैदलं तथा । एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥ पुं । प्लक्षपादपे ॥ चतुष्पाज्जातिविशेषे ॥ कस्य प्रजापतेर्जलस्य वा मण्डःसारः । सं लाति । ला० । मितद्र्वादित्वात् डुः ॥ यद्वा । मण्डनम् । मण्डिभूषायाम् ॥ । घञ् । कस्य मण्डं भूषां लाति । डुः ॥

कमनः । पुं । कामे ॥ अशोकवृक्षे ॥ ब्रह्मणि ॥ त्रि । कामुके ॥ कामयते क मु० । कर्त्तरि ल्युट् ॥ अभिरूपे । कमनीये । मनोहरे ॥ मगुदासस्त्वेतिन्मेदिनुष ॥

कमनच्छद । पु । कङ्कपक्षिणि ॥

कमनी । स्त्री । कामयित्र्याम् । ङीप ॥

कमनीय । त्रि । कामनायोग्ये । वल्गुनि । मनोहरे । रुचिरे । कान्ते । शोभने ॥ कमेरनीयर् ॥

कमर । त्रि । कामसेविते । कामिनि ॥ कामयते । कमु० । अर्त्तिकमिभ्रमीत्यरच् ॥

कमल । पु । मृगविशेषे । सारङ्गे ॥ न । जले । ताम्रे ॥ क्लोमनि ॥ भेषजे ॥ सारसपक्षिणि । जलजे । पद्मे ॥ अस्यगुणाः । कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् । तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ॥ विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् । रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् ॥ धवलं कमलं शीतं मधुरं कफपित्तजित् । तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकमिति ॥ षण्मात्रस्य सप्तम ऽऽ प्रभेदे ॥ कामयते काम्यते वा । कमु० । णिङभावे वृषादिकलच ॥ कमलम् अलति । अलभूषणादौ । मु० कोवा ॥ ध्रुवकप्रभेदे ॥ यथा । उक्तोमयसाले न लघुमध्ये स्फुरेद्गुरु । सतदया वरे युक्त. कमलोऽयं मधानको इति ॥

कमलखण्डम् । न । कमलानांसमूहे । कमलादिभ्यःषण्डः ॥

कमलच्छद । पु । पद्मदले । पद्मपत्रे॥

कमलज । पुं । अजयोनौ । धातरि॥ कमले जात. । जनी । ड ॥

कमला । स्त्री । लक्ष्म्याम् । श्रियि ॥ कमलालयस्थायां देव्याम्॥ वरस्त्रियाम्॥कालकट्टादिपत्तने कमलानींबू इति ख्याते फलविशेषे। यथा । रम्भाफलं तिन्तिडीक कमलानागरङ्गकम् । फलान्येतानि भोज्यानि पथ्योऽन्यानि विवर्जयेदिति तन्त्रसारे पुरश्चरणप्रकरणम् ॥ काम्यते । कमु° । वृषा°दित्वात् कलच् ॥ कमलम् अस्ति अस्याः । अर्शआद्यच्‌वा ॥ छन्दोविशेषे । यथा । द्विगुणनगणसहित:सगण इह हि विहित. । फणिपतिमतिविमला भवति प्रभवति कमलेति ॥ सवैयान्तर्गता कमला यथा । वसुभि.प्रमिता. सगणा विहिता पुनरेकमितो हि हितो गुरुरन्ते। यदि सल्लवयो विलसन्मतयोऽभिधया कमलेति तदा कलयन्ते। विदधत्यनघा रमणीयतया रसनापरिखेलितया कृतुकन्ते । यशवन्तनरेशविशोभियशोधिकशोभितसाविदधातुमुदन्ते इति ॥

कमलालय । पु । सिद्धस्थानविशेषे ॥ यथा । कमलालये महास्थाने कमलाख्यो महेश्वर । कमलाम्महेशानी सकलार्थप्रदायिनीत्यागमोक्ति ॥

कमलालया। स्त्री । लक्ष्म्याम् ॥ कमलमालयो यस्या ॥

कमलासन । पु । धातरि॥ कमलमासनमस्य ॥ न । आसनविशेषे ॥

कमलासनस्थ । पु। पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थे भगवन्नाभिकमलासनस्थे विधातरि ॥

कमलिनी । स्त्री । पद्मिन्याम् ॥ पद्मखण्डे । पद्माकरे ॥ कमलानि सन्त्यत्र । पुष्करादिभ्यो देशे इति इनि: ॥

कमलोत्तरम् । न। कुसुम्भपुष्पे ॥ कमलादुत्तरम् ॥

कमा । स्त्री । शोभायाम् ॥ इति शब्द-निर्घण्ट' ॥

कमिता । त्रि । कामुके ॥ कमेर्णिङ् भावे तृच् ॥

कम्प. । पु । गात्रादिचलने । वेपथौ । वेपने ॥ कम्पनम् । कपि किञ्चिच्चलने । भावे घञ् ॥

कम्पन । पु । शिशिरर्तौ ॥

कम्पनम् । त्रि । कम्प्रे । लोले । चञ्चले ॥ न । कम्पे ॥ कम्पनशील. । कपि° चलनशब्दार्थादिति युच् ॥

कम्पलक्ष्मा । पु वायौ ॥

कम्पाक । पु । वायौ ॥

कम्पितम् । न । कम्पने । वेपने । कम्पे

॥ त्रि । कम्पयुक्ते ॥ कम्प्यतेस्म । क
र्मणि । क्त ॥

कम्पिल्ल । पु । काम्पिल्लके । रक्ताङ्गे ।
कंवीला कामला इतिच भाषा प्रसिद्धे
द्रव्ये ॥ देशविशेषे ॥

कम्पिल्लक । पुं । काम्पिल्ले ॥

कम्प्र । त्रि । कम्पयुक्ते । अतिचञ्चले
॥ कम्पनशीले । नमिकम्पीतिर' ॥

कम्बर । पु । चित्रवर्णे । कर्बुरवर्णे ॥
त्रि । चित्रवर्णवति ॥

कम्बल: । पुं । नागराजे ॥ सास्नायाम्
॥ प्रावारे ॥ कृमौ ॥ वैकक्ष्ये ॥ स्व
नामख्याते मेषादिलोमरचिते व-
स्त्रासनादौ । रल्लके ॥ मृगविशेषे ॥
न । जले । सलिले ॥ कम्प्यते । क
म्पु° । कमेर्बुक्चेतिकल: ॥ कंकुत्सित
शिरोऽम्बु वा वलते । वलसंवरणे
सञ्चरणेच । अच् ॥ कम्बति कम्ब्य
ते वा । कम्बगतौ । वृषादित्वात्
कलच् ॥

कम्बली । पुं । वृषे ॥ त्रि । कम्बलवति
॥ कम्बलोऽस्तिअस्य । इनि. ॥

कम्बलिवाह्यकम् । न । गन्त्र्याम् ॥ वृ
षवाह्ये शकटे ॥ कम्बल: सास्ना । सा
ऽस्त्येषाम् । इनि: । कम्बलिभिर्वृषै
र्वाह्यते । वह° ण्यत् । स्वार्थेकम् ॥

कम्बलीया । स्त्री । कर्षायाम् ॥ कम्ब

कम्बोज

लायहिता । अस्वाम्यास्वायत । त
स्मैहितमिति छ' ॥

कम्बल्यम् । न । ऊर्णापलशते ॥ कम्ब
लाच्चसञ्ज्ञायामिति प्राक्क्रीतीयेष्व
र्थेषु यत ॥

कम्बि: । स्त्री । दर्व्याकायाम् । दर्व्याम्
॥ वंशांशे ॥ कम्यते । कमु° । बाहु
लकात विन ॥

कम्बु: । पु । न । शङ्खे ॥ पु । शम्बूके ॥
वलये ॥ हस्तिनि । गजे ॥ कर्चूरे ॥
ग्रीवायाम् ॥ नलके । पोङ्गा इति
भाषा ॥ काम्यते । कमु° । कम्वाद्य
श्चेतिनिपातित' ॥ कम्बति । कम्ब
गतौ । मृगय्वादित्वात् ॥

कम्बुक: । पु । कम्बुशब्दार्थे ॥

कम्बुकाष्ठी । स्त्री । कम्बुग्रीवायाम् ॥

कम्बुकाष्ठा । स्त्री । अश्वगन्धायाम् ॥

कम्बुग्रीवा । स्त्री । शङ्खाकृतिस्त्रिरेखाढ्य
ग्रीवायाम् ॥ कम्बु शङ्ख इवग्री
वातिस्रो रेखा यस्या ॥

कम्बुपुष्पी । स्त्री । शङ्खपुष्प्याम् ॥

कम्बुमालिनी । स्त्री । शङ्खपुष्प्याम् ॥

कम्बू: । पुं । वलये ॥ शङ्खे ॥ त्रि । प
रद्रव्यापहारिणि ॥ कम्बूद्गमूजम्बू
कम्बूश्चयुज्ज्वलदत्तोक्तपाठात् साधु:॥

कम्बोज: । पु । हस्तिविशेषे ॥ शङ्खवि
शेष ॥ देशविशेषे ॥ सयशा । पञ्चन

इत्यारभ्यन्ते च्छाद्यमितपूर्वत'। कम्बोजदेशो देवेशि वाजिराशिपरायणः ॥ इतितन्त्रशास्त्रम् ॥

कम्रातायी । पु। मक्कुंचिल्ले ॥

कम्मारी । स्त्री । गम्भार्य्याम् ॥ कं जलं बिभर्त्ति । डुभृञ्० । कर्मण्यण । ङीप् ॥

कम्भु । न । उशीरे ॥ इतिराजनिर्घण्ट' ॥

कम्रः । त्रि । कामुके। मैथुनेच्छाविशिष्टे ॥ कमनीये ॥ कामयते । कमु० । नमिकम्पीतिरः ॥

करः । पुं । वर्षोपले ॥ रश्मौ ॥ पाणौ ॥ प्रत्याये। भागधेये। कर्षकादि द्वारा प्रत्येकस्थावरजङ्गमाद्दादेयेरा जग्राह्यभागे॥ शुण्डायाम् ॥ हस्तनक्षत्रे ॥ चतुष्कलेशेषगुरौ ॥ ऽ संज्ञायाम् ॥ कीर्य्यते । कृविक्षेपे। ऋदोरप् ॥ करोति वा। अच् ॥ कर्म्मोपपदे सति कर्त्तृवाचकोयंशब्दः। यथा । आनन्दकर' ॥

करकः । पु। करकवृक्षे ॥ पक्षिविशेषे ॥ दाडिमवृक्षे॥ करे ॥ वर्षायाम्॥ पलाशवृक्षे ॥ कोविदारवृक्षे ॥ बकुलवृक्षे ॥ करीरवृक्षे ॥ नारिकेलास्थनि। माला इतिगौड भाषा। नरेलीकपाली इतिचभाषा॥पुं। न। करके ॥ कमण्डलौ ॥ पुं। स्त्री। वर्षोपले ॥ कृणोति । कृञ् हिंसायाम्। करोति दोषाभावं वा। कृ आदिभ्यः संज्ञायांवुन् ॥

करकङ्कणन्याय । पु। कङ्कणशब्देनैव करभूषणविशेषबोधसम्भवेऽपि करशब्दपूर्वक कङ्कणशब्द. करसम्बन्ध कङ्कणबोधार्थक इत्यर्थपरे दृष्टान्ते॥

करकच । पु। योगविशेषे ॥ यथा। शनिभार्गवजीवज्ञकुजसोमार्कवासरे । षष्ठ्यादितिथय सप्तक्रमात् करकचा स्मृता इति ॥

करकच्छपिका। स्त्री । कूर्ममुद्रायाम्॥

करकण्टक.। पुं । नखे ॥

करका । स्त्री । वर्षोपले । मेघोपले। ओलाइतिभाषा ॥ कृणोतेर्वुन्स्त्रा झपि क्षिपकादित्वात् प्रत्ययस्थादितीत्त्वंन ॥

करकाजलम् । न । दिव्यपानीयप्रभेदे ॥ दिव्यवाय्वग्निसयोगात्संहता'खात्पतन्तियाः । पाषाणखण्डवच्चापस्ता कारक्योऽमृतोपमाः ॥ करकाजजलरूक्षं विशदं गुरुचस्थिरम् । दारुणं शीतलं सान्द्रं पित्तहृत् कफवायुकृत्॥

करकाम्भा.। पु। नारिकेलवृक्षे ॥

करग्रह.। पु। विवाहे ॥ करग्रहणे ॥

करग्रहारम्भ । पुं । नववधूसम्बन्धिन. करस्याग्रमग्राह्य प्रथमादाने । पु गृह्याद्यतिप्रसिद्धे ॥ तद्दिननिर्णयो यथा । तीक्ष्णोग्रमश्रैतरभेषु सम्ले श्रीर्षोदये भानुदिने शुभाह्ने । कुर्या दनुक्तानि समीक्षितानि करग्रहार म्भमपिप्रयाभ्यइति ॥

करग्राह: । पुं । पाणिग्राहे ॥ करंगृह्णा ति । ग्रह० । अण् ॥

करघर्षण. । पुं । दधिमन्थनदण्डे । त माटे ॥ न । हस्तघर्षणे ॥

करघर्षी । पुं । क्षुद्रमन्थानदण्डे । छो टीरवी इतिभाषा ॥

करङ्कः । पुं । मस्तके ॥ अनस्थनारिके लफलास्थनि । नारियलकाखोपड़ तिभाषा । मोखानारियलइतिच ॥ शरीरास्थि ॥ इक्षुविशेषे ॥

करङ्कशालि । पु । करङ्काभिधेक्षौ ॥

करच्छद । पुं । शाखोटवृक्षे । सिहोड़ा इतिभाषा ॥

करच्छदा । स्त्री । सिन्दूरपुष्पगाम् ॥

करज । पुं ।नखे ॥ करञ्जवृक्षे ॥ न । व्याघ्रनखाख्यगन्धद्रव्ये । करजं नखं स ह्रिव ॥ करेयाजन्यसे । जनी० । अ न्यत्रापीतिडः ॥ कं सुखं जलंवा रञ्ज यति । रञ्जरागे । कर्मण्यण् । रञ्ज रयैतिनिर्देशाद्बकारस्यपिनलोपः । संज्ञापर्वकत्वान्नवृद्धिः ॥

करञ्जोडि । पु । हस्तजोडीवृक्षे । हा थाजोड़ीइतिभाषा ॥ हस्तिराजनिर्घ ण्ट. ॥

करञ्ज. । पु । वृक्षविशेषे । करंजुवा इतिभाषाप्रसिद्धे ॥ सषड्विध. । तत्र गौड़भाषायाकरञ्जकपर्याया. । चिरबिल्वोनक्तमाल करजश्चकरञ्ज के ॥ नाटाकरञ्जकपर्याया. । प्रकीर्य. पूतिकरञ्ज'पूतिक कलिकारक: ॥गौ डभाषयाकाँटाकरञ्ज गाँठियाकरञ्ज इतिप्रसिद्धस्य । पञ्चान्यः ॥ माँकडा करञ्जस्य । मर्कटी ॥ विषकरञ्जस्य । अङ्गारवल्लरी ॥ इति ॥ अथकरञ्ज स्य पर्यायाश्च । करमर्दविनेशुद्राक राख्य'करमर्दक: । इति ॥ कं सुखंज लंवा रञ्जयति । रञ्जःकर्मण्यण्॥

करञ्जक: । पुं । करञ्जे ॥ स्वार्थेकन ॥ करञ्ज:कटुकस्तीक्ष्णो वीर्योष्णोऽनि लदोषहृत । कुष्ठोदावर्तगुल्मार्शो व्रणकृमिकफापहः ॥ तत्पर्णकफवा तार्शःकृमिशोथहरम्परम् । भेदनं कटुकम्पाकेवीर्योष्णं पित्तलं लघु ॥ तत्फलं कफवातघ्नं मेहार्शःकृमिकुष्ठ जित् । इतपूर्वकरञ्जोपिकरञ्जसह शोगुणैः ॥ भूङ्गराली ॥

करञ्जफल: । पुं । कपित्थवृक्षे ॥

करञ्जी । स्त्री । उदकीर्य्यें । महाकरञ्जे ॥ करञ्जी स्तम्भिनी तिक्ता तुवरा कटुपाकिनी । वीर्योष्णा वमिवातार्शःकृमिकुष्ठप्रमेहजित ॥

करट. । पुं । गजगण्डे ॥ कुसुम्भवृक्षे ॥ निन्द्यजीवने ॥ एकादशाहादिश्राद्धे ॥ दुर्दुरूटे ॥ वायसे ॥ वाद्यविशेषे ॥ करोति शकुनम् । शकादिभ्यो ऽटन् ॥ केति रटतिवा । रटशब्दे । पचाद्यच् ॥

करटक: । पुं । करटार्थे ॥ स्वार्थेकन् ॥

करटा । स्त्री । दुःखदोह्यायाङ्गवि ॥ अजाद्यतष्टाविति अदन्त लक्षणष्टाप् ॥

करटी । पुं । हस्तिनि ॥

करटिनी । स्त्री । हस्तिन्याम् ॥

करटुः । पु । कर्करेटौ । करकटियाइतिगौडभाषाप्रसिद्धपक्षिवि० ॥

करणम् । न । हेतौ । साधकतमे । क्रियासिद्धौ प्रकृष्टोपकारके ॥ यद्व्यापारानन्तर मव्यवधानेन फलोत्पत्तिस्तस्मिन्नित्यर्थः । तेनदात्रेण धान्यं लुनातीत्यत्र हस्तादे करणत्वेपि दात्रस्यैव करणत्वम् । तथाचोक्तम् । कारणाव्यवधानेपि क्रियानिष्पत्तिकारणम् । यद्विवक्षितं तेषु करणत्व प्रकीर्त्तितमिति ॥ साधने ॥ कर्मणि ॥ तिथ्यर्द्धपरिमितेषु ववाद्येकादशसु ॥ यथा । ववाख्यवालवकौलवतैतिलगरवणिजविष्टयः सप्त । जगदुरथैतिचराणि तिथिखण्डात्मकानि करणानि ॥ अचराण्युत्तरशकलाच्चामास्याश्चतुर्द्दशीतस्या । शकुनिचतुष्पदनागकिंस्तुघ्नानि भवन्ति करणानि ॥ सितादे.करणंश्चैकोयाततिथ्यर्द्धसंक्षय. । सप्तभक्तोवशेषेणमितस्याद्ववतोगतम् ॥ चराणि विष्टिं करणान्यृतेचसा भवन्ति सौम्याखिलकर्मसिद्धये । तथैवधीराणिचपितृकर्मणो विष्टिर्विघातादिविधौवराभवेदिति ॥ हस्तलेपे ॥ नृत्यप्रभेदे ॥ नृत्यविषयकाष्टोत्तरशतकरणविशेषेषु ॥ यथा । करणानान्तुसर्वेषां सामान्य लक्षणन्त्विदम् । प्रायोवामकरोवक्षः स्थितोन्यः पुरतोनुगः ॥ पादाभ्याङ्करणंश्चय तदिहाष्टोत्तरंशतम् । निकुञ्चितंपार्श्वक्रान्तमतिक्रान्तंविवर्त्तकम् ॥ विद्युद्भ्रान्तं गजक्रीडं क्रान्तञ्च गरुडप्लुतमित्यादिसङ्गीतदामोदर ॥ गीतप्रभेदे ॥ क्रियाप्रभेदे ॥ ब्रतबन्धे ॥ कायस्थसंहतौ ॥ कृतादौ ॥ क्षेत्रे ॥ गात्रे । काये ॥ संवेशने ॥ कायस्थे ॥ इन्द्रिये ॥ वर्णानांस्पष्टतादौ ॥ योगिनामासनादौ ॥ न्याय

मते व्यापारवदसाधारणकारणं करणम् । समवाय्यसमवायिनिमित्तकारणमध्ये यदसाधारणकारणं तदेव करणमिति ॥ साङ्ख्यमते इन्द्रियेषु ॥ यथा । करणं त्रयोदशविधम् । इन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणम् । त्रयोदशविधे करणेऽवान्तरविभागं करोति । अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् । साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥ अस्यार्थः । अन्तःकरणं त्रिविधम् । बुद्धिरहङ्कारो मन इति । शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम् ॥ दशधा बाह्यमिन्द्रियम् त्रयस्यान्तःकरणस्य विषयाख्यम् । विषयमाख्यातीति विषयाख्यम् । सङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति । तत्र बुद्धीन्द्रियाण्यालोचनेन कर्म्मेन्द्रियाणि यथास्वं व्यापारेण । बाह्याभ्यन्तरयोः करणयोर्विशेषमाह । साम्प्रतकालमित्यादि । साम्प्रतकालं वर्त्तमानकालं बाह्येन्द्रियम् । वर्त्तमानसमीपमनागतमपि वर्त्तमानम् । अतीतानागतवर्त्तमानविषयाभवति । त्रिकालमाभ्यन्तरं करणम् । तद्यथा । पूरभेदादभूद्वृष्टिः अस्ति धूमादग्निरिह नगनिकुञ्जे असत्युपघाते पिपीलिकाण्डसञ्चरणाद्वृष्टिर्भविता वृष्टिरिति तदनुरूपाः सङ्कल्पाभिमानाध्यवसाया भवन्तीति ॥ श्रोत्रादिपञ्चज्ञानेन्द्रियाणि वागादिपञ्चकर्म्मेन्द्रियाणि मनो बुद्धिश्चेति द्वादशसङ्ख्याके ॥ करणवर्गे मनोबुद्धिश्चेति वृत्तिविशेषौ वृत्तिमात्रमहङ्कारः कर्त्तैव । चिदाभासस्तु सर्व्वेषामविशिष्टः । अनात्मा भौतिकः कल्पितश्च ॥ इतिकर्त्तव्यताके साधने ॥ धात्वर्थे ॥ पुं । वैश्याच्छूद्रायां जाते । अयं लिखनवृत्तिः कायस्थ इति ख्यातः । इति भरतः ॥ धनधान्याध्यक्षतायां राजसेवायां च । त्रिजातेः परिचर्य्यायां दुर्गान्तःपुररक्षणम् ॥ एषा पारशवस्योक्ता तादृशस्य करणस्य च । प्रोक्ता उग्रमता इति उभयत्र सुखप्रदा ॥ शाक्यात् क्षत्रियात् सवर्णायामुत्पन्ने झल्लमल्लादिसंज्ञके ॥ यथा । झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च । नटश्च करणश्चैव खसो द्रविड एव चेति मनौ १०अध्याय. ॥ बवादौ ॥ किरति कीर्य्यतेऽनेन वा । कॄ । बहुलमन्यत्रापीति युच् । कृत्यल्युटो बहुलमिति ल्युट् ॥ करणकार्य्यम् । न । इन्द्रियाणाङ्कार्य्ये ॥ जा·

हरणादिक्रियाणां सकर्मकत्वात् किं कर्म कतिविधञ्चेत्यतआह॥ कार्यञ्चतस्य दशधा हार्यं धार्यं प्रकाश्यञ्च। तस्य त्रयोदशविधस्य करणस्य दशधाकार्यम्। आहार्यम् धार्यम् प्रकाश्यञ्च। आहार्यं व्याप्यम् कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा ज्ञानेन्द्रियाणां शब्दस्पर्शरूपरसगन्धमया यथास्वं व्याप्याः। ते च दिव्यादिव्यतया दशधा। एवंधार्यमपि अन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरम् तच्च पार्थिवादि पाञ्चभौतिकम् शब्दादीनां पञ्चानां समूहः पृथिवीति। तेच दिव्यादिव्यतया दशधेति धार्यमपि दशधा। एवं बुद्धीन्द्रियाणां प्रकाश्यं दशधेति शब्दादीनांपञ्चानां दिव्यादिव्यभेदात्। करणानाङ् कार्यम्॥

करणत्राणम्। न। मस्तके॥

करणव्यापार.। पु। करणानां व्यापारे॥ कारकविशेषः करणम्। नच व्यापारावेशविना कारकत्वमिति व्यापारमाह। तदाहरणधारण प्रकाशकरम्। तत्रकर्मेन्द्रियाणि वागादीनि आहरन्ति स्वस्वविषयं यथा स्वमुपाददते स्वव्यापारेण व्या-प्नुवन्तीतियावत्। बुद्ध्यहङ्कारमनांसितु स्वहस्त्या प्राणादिलक्षणया धारयन्ति। बुद्धीन्द्रियाणितु प्रकाशयन्ति॥

करणाधिप। पु। जीवे। कुषोकेशे॥ श्रोत्रादिचतुर्दशेन्द्रियाणामधिपा यथा। श्रोत्रस्य दिक्। त्वचोवातः। चक्षुष सूर्य्यः। रसनाया प्रचेता। घ्राणस्याश्विनौ॥ वाचो वह्निः। हस्तस्य इन्द्रः। पादस्य विष्णुः। पायो मित्रः। उपस्थस्य प्रजापतिः॥ मनसश्चन्द्रः। बुद्धेश्चतुर्मुखः। अहङ्कारस्य शङ्करः। चित्तस्याच्युत इति॥

करणाधिपाधिप.। पु। जीवस्येश्वरे॥ करणाधिपस्य अधिप॥

करणी। स्त्री। वैश्याच्छूद्रायामुत्पन्नायाम्॥ ख्युडन्ताम् ङीप्॥

करणीय। त्रि। कर्त्तव्ये। कार्ये॥ कृञोऽनीयर्॥

करण्डः। पु। मधुकोषे॥ असौ। खड्गे॥ कारण्डवे खगे॥ द्वालके॥ वंशादिरचिते भाण्डविशेषे। करण्डी करण्डी इतिचभाषा प्रसिद्धे पुष्पादिधारणार्थे भाण्डे॥ समुद्गे। सम्पुटे॥ करोति। कृञ्॰। अण्डन्कृष्ट्भृटणड्स्यण्डन्॥

करण्डा। स्त्री। कालखण्डे। यकृति॥

म्येय' ॥

करभः । पु । मणिबन्धा द्दाकनिष्ठं करस्य बहिर्भागे ॥ करिशावके ॥ उष्ट्रपुत्रे। बोताइतिभाषा ॥ उष्ट्रे ॥ नखनाम गन्धद्रव्ये ॥ कृणाति किरत्यनेन की र्य्यतेवा । कृविक्षेपे कृञ्हिंसायांवा । कृश्रृशलिकलिगर्दिभ्योऽभच्॥ करे भातिवा । भादीसौ । मृतिकः ॥

करभकाण्डिका । स्त्री । उष्ट्रकाण्डीवृक्षे ॥

करभञ्जिका । स्त्री । उदकीर्य्ये । करञ्ज्याम् ॥

करभप्रिया । स्त्री । क्षुद्रदुरालभायाम्॥

करभवल्लभ. । पुं । कपित्थवृक्षे ॥ पीलुवृक्षे ॥

करभाद्नी । स्त्री । क्षुद्रदुरालभायाम्॥

करभी । पुं । हस्तिनि ॥

करभी । स्त्री । उष्ट्रयोषायाम् । माम्याम्॥

करभीर. । पु । सिंहे ॥ इतिशब्दरत्नावली ॥

करभूषणम् । न । कङ्कणे॥ करंभूषयति । करो भूष्यतेऽनेनवा । भूषअलङ्कारे । ल्युट्॥ हस्ताभरणमात्रे॥

करभोरू. । स्त्री । उत्तमस्त्रीविशेषणे ॥ करभइव ऊरूयस्या.सा । ऊरूत्तरपदादौपम्यइत्यूङ् ॥

करमट्ट. । पुं । गुवाकवृक्षे । तस्यसारे॥

करमरी । पुं । बंदुगाइतिप्रसिद्धे । बन्दिनि ॥ इतित्रिकाण्डशेषः ॥

करमर्द. । पु । करमर्दके । करौंदाइतिभाषा ॥ करंमृद्नाति । मृद्क्षोदे । कर्मण्यण्॥अथदीर्घफलाभ्यान्तु करमर्द्दद्वयं मतम् । करमर्द्दद्वयं त्वाम्लंगुरूष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम् । तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् ॥

करमर्दक. । पु । कृष्णपाकफले । करौंदाइतिभाषा । सुषेणे । अविग्ने॥ करमर्द्दएव । स्वार्थेकन् ॥

करमर्द्दिका । स्त्री । वनकरमर्द्दके ॥ करमर्द्दाल्लघुफला सा ज्ञेया करमर्द्दिका ॥

करमर्द्दी । पुं । करञ्जवृक्षे ॥

करमर्द्दी । स्त्री । करमर्द्दकवृक्षे ॥

करमाल. । पुं । खतमाले । धूमे ॥ इतिहेमचन्द्र. ॥

करमाला । स्त्री । करपर्वरूपमालायाम् ॥

करमुक्तम् । न । बरछी भाला इतिभाषाप्रसिद्धे अस्त्रविशेषे ॥

करम्ब । त्रि । आमिश्रे । मिश्रिते ॥ करोति । डुकृञ्० । कृकदिकडीभ्य अम्बच ॥

करम्बित । त्रि । सम्पृक्ते । मिश्रिते ॥

करम्भ । पु । दधिमिश्रितसक्तुषु ॥ के न जलेन रभ्यते मिश्रीक्रियते । केन वायुना वा रभ्यते । रभिरनेकार्थ । अकर्त्तरि चेति घञ् । रभेरश लिटोरिति नुम् ॥

करम्भकम् । न । कर्कसारे । करम्भे ॥

करम्भा । स्त्री । प्रियङ्गौ ॥ शतावर्य्याम् ॥

करव । पु । नखे ॥ करे रौति । रु शब्दे । पुगुपधेति कः ॥

करहि । स्त्री । करताख्याम् ॥ करस म्यद्दि ॥ करस्य अहि ।

करवालः । पुं । कृपाणे ॥ करं वलति । करेण वलति वा । वल प्राणने । कर्मण्यण् । ज्वलादिभ्यो णो वा । यद्वा । वल संवरणे । वलनेष्टने । घञ् । करो वालोऽस्य करेण वल्यते वा । कर्मणि घञ् ॥

करवालिका । स्त्री । ईल्याम् । करपालिकायाम् ॥ करं वलते । वल हिंसादानयोः । अच् । करेण वाल्यते वा । णिजन्तादच् । कन् ॥

करवी । स्त्री । हिङ्गुपत्रे ॥

करवीर । पुं । कृपाणे । खड्गे ॥ दैत्य विशेषे ॥ ब्रह्मावर्त्ते दृषद्वतीनदीतीरे चन्द्रशेखरराजपुरे ॥ श्मशाने ॥ विषप्रभेदे । करवीरमूले ॥ कनेर इतिप्रसिद्धे वृक्षे । प्रतिहासे । अश्वमारके ॥ करवीरद्वय तिक्तं कषायं कटुकञ्च तत् । व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ॥ वीर्य्योष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥ रक्तश्वेतप्रभेदेन करवीरद्वयं मतम् ॥ करं वीरयति । वीर विक्रान्तौ । कर्मण्यण् ॥ न । अश्वपुष्पे ॥ करवीरस्य विकारो वा पुष्पम् । पुष्पमूलेषु बहुलमित्यणो लुक् ॥

करवीरक । पु । अर्जुनवृक्षे ॥ करवीरार्थे ॥

करवीरकन्दसंज्ञः । पुं । तैलकन्दे ॥

करवीरभूषा । स्त्री । आढक्याम् । अरहर इतिभाषा ॥

करवीरी । स्त्री । अदितौ । देवमातरि ॥ सद्गव्याम् । श्रेष्ठगव्याम् ॥ पुत्रवत्याम् ॥

करशाखा । स्त्री । अङ्गुलौ ॥ करस्य शाखेव ।

करशीकरः । पुं । वमथौ । हस्तिशुण्डानिर्गतजलकणे ॥ करस्य शीकरः ॥

करशूक । पुं । नखे ॥ इतित्रिकाण्डशेषः ॥

करसूत्रम् । न । विवाहादौ मङ्गलार्थं मूर्वादिमये हस्तसूत्रे ॥ आगादौ च विवन्धकरणतोपचारात् ॥

करहाट । पुं । पद्मादिमूले । शिफाकन्दे ॥ मदनद्रुमे ॥ मत्स्यपिण्डीतरौ ॥ देशविशेषे ॥ करहाटयति । घटदीरौ । ण्यन्त । कर्मण्यण् ॥

करहाटकः । पु । मदनपादपे । मयनफल इति भाषा ॥ स्वार्थेकन् ॥ न । इस्तसम्बन्धिस्वर्णे ॥

कराटः । त्रि । विकटे । भयानके ॥

करामर्दः । पुं । करमर्दे ॥

करामुकः । पु । अविशे । सुषेणे ॥

करामलकः । पु । करमर्दे ॥

करायिका । स्त्री । कूटपूर्य्याम् । करांकी इति गुर्जरत्रा इतिच भाषा ॥

करारोटः । पुं । अङ्गुरीयके ॥

करालः । पुं । गर्जनतैल इति गौडभाषाप्रसिद्धे सर्जरसयुक्ततैले । भूमतैले ॥ भल्लाततैले ॥ राक्षसविशेषे ॥ दन्तरोगविशेषे । यथा । शनैः शनैः प्रकुरुते वायुर्दन्तसमाश्रितः । करालान् विकृतान् दन्तान् करालोन स सिध्यति ॥ न । कृष्णकुठेरके । श्यामतुलसी इतिभाषा ॥ वेसवारभेदे ॥ यथा । तप्तस्नेहे पचेत् पूर्वं वेसवारकसंज्ञकम् । पाकप्रापितबोरर्ध्यं कराल इदकं मतमिति ॥ त्रि । दन्तुरे ॥ तुङ्गे । उच्चे ॥ विकृते । भीषणे ॥ करोत्यलातिक । ला० । आतश्चोपसर्गे इति सुपोति योगविभागाद्वा कः ॥ यद्वा । अलभूषणादौ । कर्मण्यण् ॥

करालकः । पु । करालार्थे ॥

करालत्रिपुटा । स्त्री । कांचिकायाम् । लङ्काधान्ये ॥

कराला । स्त्री । शारिवायाम् ॥

करालास्य । त्रि । दन्तुरवदने ॥ करालं दन्तुरमास्यं यस्य ॥

करालिक । पु । वृक्षे ॥ इति हेमचन्द्रः ॥

करालित । त्रि । भीषिते । पीडिते ॥

करालो । स्त्री । वह्नेः सप्तजिह्वान्तर्गतजिह्वाविशेषे ॥ देवीविशेषे ॥ बह्वादिभ्यश्चेति पाक्षिको ङीष ॥

करास्फोटः । पु । आस्फोटिते । वक्षस्यवाहो द्वितीयहस्तेनताडने ॥

करिकः । पुं । अरिमेदवृक्षे । विट्खदिरे ॥

करिकणावल्ली । स्त्री । चविकावृक्षे ॥

करिका । स्त्री । नखव्रणे ॥ करिका नखरेखिकेति वैजयन्ती ॥

करिकुसुम्भः । पुं । नागकेशरचूर्णके ॥

करिगर्जितम् । न । वृंहिते । हस्तिगर्जने ॥

करिणी । स्त्री । देवताभेदे ॥ धेनुकायाम् । हस्तिन्याम् ॥ इन्नन्तान्नान्तलक्षणो ङीप् ॥

करिद्दारकः । पु । सिंहे ॥

करी । पु । हस्तिनि ॥ करः शुण्डा अस्ति अस्य । इनि ॥ लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् इयंहि श्रीर्यत्करिण इतिश्रुत्युक्तेः ॥

करिनासिका । स्त्री । यन्त्रविशेषे ॥

करिपथम् । न । सार्वशब्दे ॥

करिपिप्पली । स्त्री । गजपिप्पल्याम् । चविकाफले ॥ करीषपिप्पली इत्यप्यात् ॥

करिपोत । पु । करिशावके ॥

करिबन्ध. । पु । प्रारब्धौ । गजबन्धन स्तम्भे ॥ इतिहारावली ॥

करिमाचल । पु । सिंहे ॥

करिमुखः । पुं । गणेशे । विनायके ॥ करिणोमुख मिवमुख मस्य ॥

करिरतम् । न । रतबन्धान्तरे॥ भूगत स्तनभुजाश्रमका मुखतां स्वयम धोमुखीं स्त्रियम् । क्रामति स्वकर कृष्टमेहने वल्लभे करिरतंत दुच्यते ॥ करिपदमिति पाठान्तरम् ॥

करिशावकः । पु । कलभे । हस्तिशिशौ ॥ करिणः शावक ॥

करिष्ठः । त्रि । अतिशयेन कर्तरि ॥ अतिशायने इष्ठन् । तुरिष्ठेमेयस्सु ॥

करिस्कन्धः । पुं । करीणां समूहे ॥ न रकरितुरगाणांस्कन्धम् ॥ शब्दार्थे ॥

करीर. । पु । घटे ॥ क्रकरे । ग्रन्थिले । करील इतिभाषाप्रसिद्धे वृक्षे ॥ करीर कटुकस्तिक्त स्वेद्युष्णोभेदनः स्मृत । दुर्नामकफवातामगरशोथव्रण प्रणुत् ॥ पु । न । वंशाङ्कुरे ॥ कृणाति किरति कीर्यते वा । कॄहिंसाया म् कॄविक्षेपेवा । कॄशॄपॄकटीति ईरन् ॥ करिणमीरयति वा । ईर० । कर्मण्यण् ॥

करीरफलम् । न । कारीरे । टींटइति ख्याते ॥

करीरा । स्त्री । हस्तिदन्तमूले ॥ चीरिकायाम् । झिल्याम् । झींगुरइ तिभाषा । वनझींगर मींदराइति ख्याते कीटे ॥ अजादित्वाट्टाप् ॥

करीरिका । स्त्री ।⎫ हस्तिनान्दन्तमूले ॥
करीरी । स्त्री । ⎭ चीरिकायाम् ॥

करीषः । पुं । न । शुष्कगोमये । ऋण्ये । छाँणा करसी इतिभाषा ॥ कीर्यते । कॄविक्षेपे । कॄतॄभ्यामीषन् ॥

करीषङ्कषा । स्त्री । वात्यायाम् ॥ करीष कषति । कषहिंसायाम् । सर्वकूलाभ्रकरीषेषुकषइतिकषेःखच् । मुमागमः ॥

करीषाग्निः । पुं । छागणे । गोमयाग्नौ ॥

करघः । पुं । करघा-कर्घा इतिभाषा॥

सिद्धे वृक्षविशेषे ॥ शृङ्गाराद्यष्टरसा
न्तर्गततृतीये रसे ॥ इष्टनाशादनि
ष्टाप्तेः करुणाख्यो रसो भवेत् ॥ बुद्ध
भेदे ॥ सर्वभूताभयदातरि परमहंस
परिब्राजके ॥ त्रि । दीने ॥ सदये ।
दुःखितेषु दया करुणा तद्वति ॥ अ
र्श आद्यच ॥ करोति मनः । डुकृ
ञ् । कृवृदारिभ्य उनन् ॥

करुणमल्ली । स्त्री । नवमल्लिकायाम् ॥

करुणविप्रलम्भ । पु । पूर्वरागादिचतु
र्भेदविप्रलम्भशृङ्गारमध्ये विप्रलम्भ
विशेषे ॥

करुणा । स्त्री । कृपायाम् । दयायाम् ।
परदुःखहानीच्छायाम् ॥ दुःखिते
षु कथन्नु नामैषां दुःखनिवृत्तिः स्या
दिति कृपामेव भावये न्नोपेक्षा न
वाहर्षम् ॥ करणम् । कृवृदारिभ्य उ
नन् । टाप् ॥

करुणापर । त्रि । दयालौ । सूरते ॥

करुणामय । त्रि । कृपाप्राचुर्यवति ॥

करुणी । स्त्री । ग्रीष्मपुष्प्याम् । रक्तपुष्
प्याम् । ककरखिरुणी इतिकोकण
भाषा ॥

करूष । पुं । देशविशेषे ॥

करेटः । पुं । नखे ॥

करेटव्या । स्त्री । धनच्छूपक्षिणि ॥

करेटु । पुं । स्त्री । कर्करेटौ । करकटि
या इतिगौडभाषाप्रसिद्धे विहगे ॥
के जले वायौ वा रेटति । रेटुभाष
णे । मृ० कु ॥

करेणु । पु । इभे । मतङ्गजे । गजे ॥ क
र्णिकारवृक्षे ॥ स्त्री । हस्तिन्याम् ॥
करोति । कृञ्भ्यामेणु ॥ केरेणुर
स्येति वा ॥

करेणुभू । पुं । पालकाप्यमुनौ ॥

करेणुसुत पु । मुनिविशेषे ॥ इभभाव
के । कलभे ॥ करेणोः सुत ॥

करेन्दुक । पु । भूतृणे ॥

करेबर । पु । तुरुष्के । सिल्हके ॥

करोटः । पु । न । शिरोस्थनि ॥ कवा
युरोटते । रुट० । अच ॥

करोटि । स्त्री । शिरोस्थि ॥ कवायु
रोटते । रुटदीप्तौ प्रतिघाते च । के
नरुध्यते वा । इन् ॥ रोटयति वा ।
रुटिष्चुरादिः । अच इ ॥

करोटिका । स्त्री । शिरोस्थि । कपाले
॥ करोटिरेव । स्वार्थे कन् ॥

करोटी । स्त्री । करोटौ ॥ ङीष ॥

कर्क । पु । कर्केतने ॥ वह्नौ ॥ शुक्ला
श्वे ॥ दर्पणे ॥ घटे ॥ चतुर्थराशौ
॥ कर्कटवृक्षे ॥ कुलीरे ॥ करोति
कृणोति क्रियते वा । कृदाधाराचि
कलिभ्यः कः ॥

कर्कचिर्भिटी । स्त्री । चिर्भिटायाम् ।

कर्कटीभेदे ॥

कर्कट । पु । वृक्षविशेषे । क्षुद्रामलक सदृशे । कर्कफले ॥ पक्षिवि० । ककरेटौ ॥ जलजन्तुविशेषे । कुलीरे । काँकड़ा इतिभाषा ॥ मेषादिराश्यन्तर्गतचतुर्थराशौ ॥ जन्मकालीनचन्द्राश्रितैतद्राशिफलम् । अनुतकाला मलनिर्मलवृत्तय, सुकृशगन्धजला शयकेलय । किल नरास्तु कुलीरगते विधौ वसुमत सुमतोऽर्थिलब्धय ॥ कर्कलग्ने समुत्पन्नो भोगी सर्वजनप्रिय । मिष्टान्नपानभोगी च जायते स्वजनप्रिय. ॥ वालुङ्क्याम् ॥ शाल्मलीफले ॥ स्त्रीयाकरणे ॥ कृणाति । कृहिं० । अन्योन्योपीतिविच । कट ति । कटे० । पचाद्यच् । कर् चासौ कटश्च । अजरादित्वात् फ. ॥ कर्क इति सौत्रोधातुः । शकादित्वाटकम्षा ॥ कर्कं श्वेतवर्णं टलति । टलगतौ । डो वा ॥

कर्कटक । पुं । वृक्षविशेषे ॥ कुलीरे ॥ कर्कटएव । स्वार्थे कन् ॥

कर्कटशृङ्गिका । स्त्री । } अजशृङ्ग्याम् ॥ महाघोषायाम् । क्षुद्रोरशृङ्ग्याम् । काँकड़ासींगी इतिख्यातायाम् ॥
कर्कटशृङ्गी । स्त्री । }

कर्कटाख्या । स्त्री । कर्कटशृङ्ग्याम् ॥

कर्कटाधिप । पु । चन्द्रे ॥

कर्कटाङ्क । पु । बिल्ववृक्षे ॥

कर्कटाङ्घ्रा । स्त्री । कर्कटशृङ्ग्याम् ॥

कर्कटि । स्त्री । वालुङ्क्याम् । इर्वारौ ॥ शाल्मलीफले ॥ करोति कर्कटति । कटे० । सर्वधातुभ्य इन् । शकन्ध्वादिषु पररूपं वाच्यम् ॥

कर्कटिनी । स्त्री । दारुहरिद्रायाम् ॥

कर्कटी । स्त्री । इर्वारौ । वालुङ्क्याम् । ककड़ी इतिभाषा ॥ कर्कटी शीतला रूक्षा ग्राहिणी मधुरा गुरुः । रुच्या पित्तहरा सामा पक्का मन्दाग्निपित्तकृत ॥ अस्या पाकप्रकारस्तु । त्यक्तबीजरहिता प्रौढा गुलिकाकारखण्डिता । तलिता सुघृते नूनं कर्कटीवाप्यसेचिता ॥ विपाचरुवसवर्द्धंकृतदुग्धसाद्रं विभावितंवत्सन्निपाक्रोभ्याम् । कृतैलमासचक्रदुग्धा संततम् प्रतिचयारोचमसातनोति ॥ शाल्मलीफले ॥ देवदालीलतायाम् ॥ कर्कटशृङ्गीवृक्षे ॥ घोटिकावृक्षे ॥ करकटति । कटे० । इन् । पक्षेङीष् । शकन्ध्वादिः ॥

कर्कटु: । पु । करेटुपक्षिणि ॥

कर्कन्धू । पुं । स्त्री । कोलिपादपे । बदरीवृक्षे ॥ बदरीफले । बेर इति भाषा । कर्कन्धू क्षुद्रबदरं कथितम्

पूर्व्वसूरिभिः। अम्लं स्यात् चुद्रबदरं कषायं मधुरं मनाक्॥ स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम्। शुष्कं भेद्यग्निकृत् सर्व्वं लघु तृष्णाक्लमास्र जित्॥ दैत्यान्तरे॥ कर्कं कर्कं दधाति। डुधाञ॰। अन्दूदृन्भूजम्बिति निपातितः कू प्रत्ययान्तः। कर्कं दधाति वा। निपातनान्नुम्॥

कर्क्करः। पुं। दर्पणे। मुकुरे॥ न। चूर्णाञ्जनकक्षुद्रपाषाणखण्डे। चूर्णखण्डे। कङ्कर काँकर इतिच भाषा॥ भङ्गुरे॥ त्रि। कठिने। दृढे॥ कर्कनम् । कर्कशासे। घञ्। कर्कं राति। रा॰। आतोनुपेति क॥

कर्क्कराङ्ग। पुं। कालकण्ठविहङ्गमे। खञ्जने॥

कर्क्कराटु। पुं। कटाक्षे॥ इतिकश्चित् जटाधरः॥

कर्क्कराटुकः। पुं। कर्करेटुपक्षिणि॥

कर्क्कराल्युकः। पुं। अन्धकूपे॥

कर्क्करालः। पुं। चूर्णकुन्तले॥

कर्क्करिका। स्त्री। घर्षे। नेत्रवर्ज्याम्॥

कर्क्करी। स्त्री। गलन्तिकायाम्। सनालजलपात्रे। झारी इति भाषा॥ कठिनायाम्॥ कन्दोर्द्धतपक्वनिष्कासनसाधने। झनी झारा इति च भाषा॥ गौरादित्वान् ङीष्॥

कर्क्करीका। स्त्री। गलन्तिकायाम्। कर्कर्याम्॥ फर्फरीकादित्वात् साधु॥

कर्क्करेटम्। न। अर्द्धचन्द्रे। अङ्गुलितोरणे। गलेहस्ताधाने॥

कर्क्करेटुः। पुं। करेटैा। करकटिया इति गौडभाषा प्रसिद्धे खगे॥ कर्कं तिरेटति। रेटृभाषणे। मृगय्वादि॥

कर्क्कश। पुं। काम्पिल्लवृक्षे॥ कासमर्दे॥ इक्षौ॥ खड्गे॥ त्रि। साहसिके॥ क्रूरे॥ दृढे॥ असहणे। खरस्पर्शे। दुस्पर्शे॥ निर्दये॥ कृणोति। कृञ् हिंसायाम्। अन्येभ्योपीतिविच्। कशति। कशशब्दे। पचाद्यच्। कर् चासौ कशश्च॥ यद्वा। करेकशति। कशे पचाद्यच्। अन्तर्भावितण्यर्थो वा॥ शकन्ध्वादि। कर्कान्मत्वर्थे लोमादित्वात् शोवा॥

कर्क्कशच्छद। पुं। शाखोटवृक्षे॥ पटोले॥

कर्क्कशच्छदा। स्त्री। कोशातक्याम्। तोरञी इतिभाषा॥ दग्धरुहायाम्॥

कर्क्कशदल। पुं। पटोले॥

कर्क्कशदला। स्त्री। दग्धारुहे॥

कर्क्कशवाक्यम्। न। निष्ठुरवचने। परुषवाचि॥

कर्क्कशा । स्त्री । वृश्चिकालीवृक्षे ॥ मू-
रायाम् ॥

कर्क्कसारम् । न । करम्भे । दधिसक्तुषु ॥

कर्क्कारु । पु । कुष्माण्डे ॥ स्त्री । कुष्मा-
ण्ड्याम् ॥ कर्क्कारुश्शीर्षिणी शीता र-
क्तपित्तहरा गुरु । पक्वा तिक्ताग्नि-
जननी सक्षारा कफवातनुत् ॥ कर्क्क-
शुक्लवर्णम् ऋच्छति । अगतौ । बा-
हुलकादुण् ॥

कर्क्कारुक । पु । कालिङ्गवृक्षे ॥

कर्क्कारु । स्त्री । कुष्माण्ड्याम् ॥

कर्क्किः । पुं । कर्कटराशौ ॥

कर्क्की । पु । कर्कटे ॥

कर्क्केतन. । पुं । न । रत्नविशेषे ॥ अस्यो-
त्पत्त्यादिकम् गरुडपुराणे ७५ अध्याये ।
सूत उवाच । वायुर्नखान् दैत्यप-
ते र्गृहीत्वा चिक्षेप सम्यग्यवनेषु हृ-
ष्ट' । तत प्रसूतं पवनोपपन्नं कर्क्केतनं
पूज्यतमं पृथिव्याम् ॥ वर्णेन तद्रुधि-
रसोममधुप्रकाश माताम्रपीतदह-
नोज्ज्वलितं विभाति । नीलं पुनः श-
कुसितं परुषं विभिन्नं व्याध्यादिदो-
षकरणेन मतद् विभाति ॥ स्निग्धा
विशुद्धाः समरागिणश्च आपीतवर्णा
गुरवो विचित्राः । त्रासव्रणव्याधि वि-
वर्जिताश्च कर्क्केतनास्ते परमाः पवि-
त्राः ॥ पत्रेण काञ्चनमयेन तु वेष्टयि-
त्वा हस्ते गले ऽथधृतमेतदति प्र-
काशम् । रोगप्रणाशनकरं कलिना-
शनञ्च आयुष्करं कुलकरञ्च सुखप्र-
दञ्च ॥ एवंविधं बहुगुणं मणिं माव-
हन्ति कर्क्केतनं शुभमलङ्कृतये नरा ये
। ते पूजिता बहुधना बहुबान्धवाश्च
नित्योज्ज्वला प्रमुदिता अपि ते भ-
वन्ति ॥ एकेऽपनह्यविकृताकृतनील-
भास. प्रम्लानरागकलिता कलुषा
विरूपाः । तेजोतिदीप्तिकुलपुष्टिवि-
हीनवर्णा. कर्क्केतनस्य सदृशं वपुर-
द्वहन्ति ॥ कर्क्केतनं यदि परीक्षित-
वर्णरूपं प्रत्ययभास्वरदिवाकरसु-
प्रकाशम् । तस्योत्तमस्य मणिशा-
स्त्रविदामभिज्ञा तुल्यन्तु मूल्यमुदि-
तं तुलितस्य कार्य्यमिति ॥

कर्क्कोट' । पु । नागराजविशेषे ॥

कर्क्कोटक । पुं । विल्ववृक्षे ॥ स्त्री ॥
काँकरोल इति गौडभाषा प्रसिद्धे फ-
ललताविशेषे । किलासघ्ने । तिक्त-
पत्रे ॥ काद्रवेये । कर्क्कोटो नाम
सर्पोयो दृष्टीविषउच्यते । तस्य स-
र्पस्य सर्पस्त्वंतस्मै सर्पनमोस्तु ते । इ-
तिश्रुति प्रसिद्धे नागराजे ॥ अपिच
। कर्क्कोटकस्य नागस्य दमयन्त्यानल-
स्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं
कलिनाशनमिति ॥

कर्कोटकी । स्त्री । पीतघोषायाम् । महाजाल्याम् । खखसा इति ख्याते फले ॥ कर्कोटकीफलं कुष्ठहृल्लासारुचिनाशनम् । श्वासकासज्वरान् हन्ति कटुपाकञ्च दीपनम् ॥ ईषद्विभिन्नमरिचे परिपूर्णगर्भं तैलेन रन्धितसुसैन्धवपातयोगम् । वाह्लीकयुक्तपयसा विहिताभिषेकं कर्कोटकीफलमिदं रुचिकृत्तकृष्णम् ॥

कर्कोटिका । स्त्री । ककोडा इतिभाषा प्रसिद्धे । कर्कोटके । कूष्माण्ड्याम् ॥

कर्कोटी । स्त्री । कर्कोटिकायाम् ॥

कर्चरिका । स्त्री । कचौरीतिश्रुते पिष्टकप्रभेदे ॥ इतिपाकराजेश्वरः ॥

कर्चरी । स्त्री । कचरीतिश्रुतेफले ॥ चीराम्लकृतसंस्कारा शुष्का स्नेहविपाचिता । अरोचकादिरोगाणां कर्चरी कष्टकर्त्तरी ॥ कर्चरी रुचिकृद्बल्या सुस्वादुरतिलेखनी । उष्णा पित्तकरी प्रोक्ताकफ कृत सारिका स्मृता ॥

कर्चूर । पु । कचूर इतिभाषा प्रसिद्धे गन्धसारे । द्राविडे ॥ कर्चूरो दीपनो रुच्य, कटुक स्तिक्त एवच । सुगन्धि कटुपाक, स्यात् कुष्ठार्शो व्रणकासनुत् ॥ उष्णो लघुर्हरेच्छ्वासगुल्मवातकफ क्रिमीन् ॥ मध्याम् ॥
न । स्वर्णे ॥ कर्चति । कर्चव्यथने । खर्जूरादित्वादूर । पृ० ॥

कर्चूरक । पुं । द्राविडके । कचूर इति भाषा ॥ स्वार्थे कन् ॥

कर्ण । पुं । पृथायाज्येष्ठसुते । वसुषेणे । चम्पापतौ ॥ सुवर्णालिहृत्वे ॥ श्रवणेन्द्रिये । श्रोत्रे ॥ गुरुयुगले ऽऽ ॥ अरित्रे ॥ कीर्यते शब्दग्रहणाय क्षिप्यते यद्वा कीर्यते शब्दो ऽस्मिन् किरतिशरीरे सुखं वा । कृविक्षेपे । कृवृङ्सीतिनन् । वाहुलकात्गुण ॥ यद्वा । कर्णयति । कर्णभेदने । अदन्त । अच ॥ यद्वा । करोति शब्दतानम् । डुकृञ् ० । कृवृइत्यादिना नन् ॥

कर्णकण्डु । पुं । कर्णरोगविशेषे ॥ तस्यनिदानं यथा । मारुत कफसंयुक्त कर्णकण्डुं करोतिचेति ॥

कर्णकीटी । स्त्री । कर्णजलौकायाम् । शतपद्याम् । कानसलाई इतिभाषा ॥

कर्णक्ष्वेड. । पुं । कर्णरोगविशेषे ॥ वायु पित्तादिभिर्युक्तो वेणुघोषसमं स्वनम् । करोतिकर्णयो, क्ष्वेडकर्णक्ष्वेड, सउच्यते ॥ इति माधव ॥

कर्णगूथम् । न । कर्णमले ॥ कर्णस्यगूथम् ॥

कर्णगूथक. । पु । कर्णरोगविशेषे ॥ पित्तोष्मशोषित श्लेष्मा जायते कर्णगूथकइत्यस्य निदानम् ॥

कर्णचाप । पु । कान्तपृष्ठाख्येधनुषि ॥ कर्णस्य राधेयस्य चाप ॥

कर्णजलौकः । पु । शतपद्याम् । गोजर कानखजूरा इतिभाषा ॥

कर्णजलौका । स्त्री । शतपद्याम् । चित्राङ्ग्याम् । कानसलाई इतिभाषा ॥

कर्णजाहम् । न । कर्णस्यमूले ॥ तस्य पाकमूलइत्यादिना जाहच प्र० ॥

कर्णजित् । पु । अर्जुने । गुडाकेशे ॥ कर्णं जयति । जि० । सत्सूद्विषेत्यादिनाक्विप् । तुक् ॥

कर्णदर्पण. । पुं । ताडङ्कनामनि कर्णभूषणे । कानतडङ्का इतिभाषा ॥

कर्णदुन्दुभि. । स्त्री । शतपद्याम् ॥

कर्णधार । पु । नाविके । काण्डारि इतिगौडभाषा । मल्लाह माँभी इति भाषा ॥ कर्णमरित्रम् धरति । धृञ् ० । कर्मण्यण् ॥

कर्णपाली । स्त्री । कर्णभूषणे । कानवाला वाली इत्यादिभाषा प्रसिद्धे ॥ कर्णपालिप्रदेशयोः ॥

कर्णपिशाची । स्त्री । देवीविशेषे ॥

कर्णपूः । स्त्री । कर्णपुरे । चम्पायाम् ॥

कर्णपुरम् । न । चम्पानगर्याम् । मालिन्याम् ॥

कर्णपुष्प । पु । मोरटलतायाम् ॥

कर्णपूर. । पु । शिरीषवृक्षे ॥ नीलोत्पले ॥ अवतंसे । कर्णाभरणे ॥ अशोकवृक्षे ॥ कर्णम्पूरयति । पूरी० । कर्मण्यण् ॥

कर्णपूरक. । पुं । कदम्बवृक्षे ॥ न । शिरीषे ॥ नीलोत्पले ॥ वतंसे ॥

कर्णप्रतिनाह । पु । कर्णरोगविशेषे ॥ अस्य सम्प्राप्तिरूपे यथा । सकर्णगूथो द्रवता यदा गतो विलायितो घ्राणमुखम्प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकार शिरसोर्धभेद कृदिति ॥

कर्णफल. । पु । कानकि माछ इति गौड प्रसिद्धे मत्स्यविशेषे ॥

कर्णभूषणम् । न । कर्णाभरणे ॥

कर्णमलम् । न । कर्णगूथे ॥

कर्णमुकुर । पुं । ताटङ्कनाम्नि कर्णभूषणे ॥

कर्णमोटिका । स्त्री । } चामुण्डादेव्याम् ॥
कर्णमोटी । स्त्री । }

कर्णरोगः । पुं । श्रोत्रव्याधौ ॥

कर्णलतिका । स्त्री । पाल्याम् । कानकापन्ता इति भाषा इतिहेमचन्द्रः ॥

कर्णवंशः । पुं । मञ्चे ॥ इतिशब्दरत्नावली ॥

कर्णवर्जित: । पुं । सर्पे ॥ त्रि । बधिरे ॥

कर्णवेध: । पुं । कर्णघटकदोषनिवारणार्थं कर्णयोर्वेधने ॥ सोदरभ्रातृणां संस्कारासाम्य पौर्वापर्यक्रम. । कर्णवेधस्याऽसंस्कारत्वाभावात न तथा नियम । यथा । यदापत्यद्वयंतिष्ठेत् सम्भवोप्यपरस्यच । कर्णघटकं विजानीयाच्छिन्त तत त्रयस्यच ॥ इत्याशङ्कय तयो र्मध्ये शुद्धिर्यस्याथ वत्सरे । कर्णवेधोछितस्तस्य नात्रज्येष्ठविचारणा ॥ षट्कर्णोत्पत्तिमाशङ्क्य भानो शुद्ध्यासमेपिच । कर्णवेध्यान दोष: स्यादन्यथा मरणम्भवेत् । इतिमाण्डव्य. ॥

कर्णवेधनी । स्त्री । हस्तिकर्णवेधनाङ्कुशे । कर्णारायाम् ॥ इतित्रिकाण्डशेष. ॥

कर्णवेष्ट. । पु ।<br>कर्णवेष्टकम् । न । } कुण्डले ॥ कर्णस्य वेष्टनम् ॥<br>कर्णवेष्टनम् । न ।

कर्णशष्कुली । स्त्री । वेष्टने । कर्णगोलके ॥ कर्णमध्यवर्त्याकाशे ॥

कर्णशूल. । पु । कर्णरोगविशेषे ॥

कर्णसंस्राव. । पु । कर्णरोगविशेषे ॥ तस्य निदानसम्प्राप्तिरूपाणि यथा । शिरोभिघाताद्थवा निमज्जतोजले प्रपाकाद्थवापि विद्रधे: । स्रवेद्धिपूयं श्रवणोऽनिलार्द्दित:सकर्ण संस्राव इति प्रकीर्त्तित इतिमाधव: ॥

कर्णस्फोटा । स्त्री । कानफाटा इतिगौड भाषा प्रसिद्धे लताविशेषे । कृष्णतण्डुलायाम् ॥

कर्णाट. । पु । देशविशेषे ॥ यथा । रामनाथ समारभ्य श्रीरङ्गान्तं विलेश्वरि । कर्णाटदेशो देवेशि साम्राज्यभोगदायक ॥ इतिशक्तिसङ्गमतन्त्रम् ॥

कर्णाटी । स्त्री । रागिणीविशेषे । मालवरागस्य नार्याम् ॥ हंसपदीवृक्षे ॥

कर्णानुज. । पुं । युधिष्ठिरे नृपे । अजातशत्रौ । कर्णस्य अनुज ॥

कर्णान्दु । स्त्री । कर्णपाल्याम् । कानतड्का इति भाषा ॥ उत्तरचिन्तिकायाम् । कानकडा इतिगौडभाषा प्रसिद्ध कर्णाभरणविशेषे ॥

कर्णान्दू । स्त्री । कर्णपाल्याम् ॥

कर्णाभरणक: । पुं । आरग्वधवृक्षे ॥

कर्णारा । स्त्री । नाल्याम् । कर्णवेधन्याम् ॥

कर्णारि । पु । अर्जुनपाण्डवे ॥ नदीसर्जवृक्षे ॥

कर्णास्फाल. । पु । करिण: कर्णचालने । कलभकर्णस्यायाम् ॥

कर्णि. । पु । कर्णाकारफलके वाणे ॥

कर्णिक । त्रि । कर्णिले ॥ विवृद्धौ कर्णौ यस्य । तुन्दादिषु स्वाङ्गाद्विवृद्धाविति ठक् ॥

कर्णिका । स्त्री । करिहस्ताग्रे । पुष्करे ॥ करमध्याङ्गुलौ ॥ क्रमुकादिच्छटाग्रे । बोंटा इति गौड भाषा ॥ कमलवराटे । बीजकोषे ॥ कर्णाभरणविशेषे । तालपत्रे । ढेंढी इति भाषा ॥ लेखन्याम् ॥ कुट्टन्याम् ॥ अग्निमन्थवृक्षे ॥ अजशृङ्गीवृक्षे ॥ कर्णस्य अलङ्कारः कर्णभवो ऽलङ्कारो वा । कर्णललाटादिति कन् ॥

कर्णिकाचल । पु } सुमेरुपर्वते ॥
कर्णिकाद्रिः । पुं । }

कर्णिकारः । पुं । आरग्वधविशेषे । टप ह्रे । कृतमालके । छोटा धनबहेडा इति भाषा ॥ कर्णिकारः कटुस्तिक्तस्तुवरः शोधनो लघुः । रञ्जनः सुखदः शोथश्लेष्मास्रव्रणकुष्ठजित् ॥ द्रुमोत्पले । कणियार इति गौडभाषा ॥ कर्णिकामियर्त्ति । ऋगतौ । कर्मण्यण् ॥

कर्णिकारकः । पुं । द्रुमोत्पले ॥ कृतमाले । सुवर्णके ॥ स्वार्थे कः ॥

कर्णिकी । पुं । हस्तिनि ॥ न । अम्बुजे ॥ कर्णिका अस्ति अस्य । व्री॰ इनिः ॥

कर्णी । पुं । वर्षपर्वतसप्तकान्तर्गतपर्वतविशेषे ॥ आरग्वधे ॥ कर्णिके ॥ विवृद्धौ कर्णावस्य । तुन्दादिभ्य इलच्चेति चकारादिनि ॥

कर्णिल । पु । कर्णिनि । कर्णिके ॥ विवृद्धौ कर्णावस्य । तुन्दादित्वात् पक्षे इलच् ॥

कर्णीरथ । पु । स्कन्धवाह्ययाने । प्रवहणे । खर्वरिया चौपाला डोला मीनस पालकी तानयान इत्यादि भाषा प्रसिद्धे ॥ कर्णसाध्या श्रवणक्रिया उपचारात् कर्णा । कर्णोऽस्यास्ति । इनि । कर्णी चासौ रथश्च । शब्दमात्रेण रथो नवस्तुतो रथः ॥ यद्वा । सामीप्यात् कर्णशब्देन स्कन्धो लक्ष्यते । सोऽस्त्यस्य वाहकत्वेन । इनि । कर्णी चासौ रथश्च । अन्येषामपीति दीर्घः ॥

कर्णीवाम् । पु । आरग्वधे ॥

कर्णीसुत । पुं । कंसासुरे । मूलदेवे ॥

कर्णेजप । त्रि । सूचके । पिशुने । दुर्जने । खले ॥ कर्णे जपति । जप॰ । स्तम्बकर्णयोरित्यच् । हलदन्तादित्यलुक् ॥

कर्णेन्दुः । पुं । उत्तंसिकायाम् । अर्द्धचन्द्राकृतिकर्णाभरणे ॥ कर्णपाल्याम् ॥

कर्ण्यम् । त्रि । कर्णहिते ॥ कर्णयोर्हित

म् । शरीरावयवाश्चत ॥

कर्त्तनम् । न । छेदने ॥ नारीणां स्त्रच निर्म्मितौ । कातना इतिभाषा ॥ कृ ती० । ल्युट् ॥

कर्त्तरी । स्त्री । कृपाण्याम् ॥ पत्नीस्त्रत स्वर्णादि कर्त्तनोपाये । कात काती इतिभाषा ॥ नापितोपकरणविशेषे । कैंची इतिभाषा ॥ योगविशेषे ॥ यथा । क्रूरमध्यगतश्चन्द्रो लग्नंवा क्रू रमध्यगम् । कर्त्तरी नामयोगोय कृन्यानिधनकारक इति ॥ अपिच । लग्नात् पापादृज्वनृजू व्ययार्थस्थौ य दातदा । कर्त्तरी नाम सा ज्ञेया म त्युदारिद्र्यशोकदेति ॥ कृन्तति । कृतीछेदने । वाहुलकादर । यद्वा । कर्त्तनम् । घञ् । कर्त्तं राति । रादाने । आतोनुपेतिक. । गौरा दित्वान्ङीष ॥

कर्त्तव्यम् । त्रि । करणीये । करणयो ग्ये । कार्य्ये ॥ यस्मिन क्रियमाणे न दोष स्तत्कर्त्तव्यम् ॥ तव्यप्रत्यय ॥

कर्त्ता । पुं । परमेष्ठिनि ॥ स्वरनिवन्धने दाक्षे । क्रीयते विक्षिप्यते इतस्तत श्चाल्यते कायो येन । क्ष विक्षेपे । ट च ॥ त्रि । स्वतन्त्र. कर्त्ततिनिरूपि ते षट्कारकान्तर्गतकारकविशेषे ॥ अ भिहितार्थे प्रथमा अनुक्तार्थे तृतीयावि



भक्तिर्भवति । तस्यलक्षणम् । क्रि यानुकूलकृतिमत्त्वं कर्त्तृत्वम् ॥ य. करोतिस ॥ कृत्याश्रयः कर्त्तेति तार्किका ॥ चेतनान्तर व्यापारा व्यवधानेन धात्वर्थनिष्पादकश्चेतन. कर्त्ता । कर्मकरणादिकारकचक्रप्र योक्तावा । इति प्रायश्चित्तविवेक. ॥ कृतिमति ॥ उत्पादके ॥ कारणानु कूलव्यापारवति । अनुष्ठातरि ॥ धा तूपात्तव्यापाराश्रये ॥ क्रियायांस्वात न्त्र्येण विवक्षितेऽर्थे ॥ सतुपञ्चविध. । यथा । क्रियामुख्यो भवेत् कर्त्ता हे तुकर्त्ता प्रयोजक । अनुमन्ता ग्रही ता च कर्त्तापञ्चविधः स्मृतइति ॥ स त्रिविधोपिभवति । यथा । त्रिधैव सा यते कर्त्ता विशेषेण प्रतिक्रियाम् । योग्यत्वप्रतिषिद्धत्वविशेषणपदान्व यै. ॥ अस्यार्थः ॥ क्रियांप्रति प्रकार त्रयेण कर्त्ता विज्ञायते तस्य विवरण म् । स्वाध्यायोऽध्येतव्य इत्यत्र यो ग्यत्वेन लब्धविद्यस्त्रैवर्णिक. । १ । अ परस्वंदयात् दीक्षितो न ददातीत्यत्र प्रतिषिद्धत्वेन दीक्षितेतरः । २ । स्वर्गकामोयजेतेत्यत्र विशेषण पदान्वयेन स्वर्गकाम कर्त्ता ज्ञायते । ३॥ अकर्त्तरीमो त्याद्यभिमानेवति ॥ ज्ञानशक्तिप्रधानपञ्चीकृतपञ्चम

पर्वतविशेषे ॥
कर्पटधारी । त्रि । मलिनजीर्णवस्त्रधारिणि भिक्षुके ॥
कर्पटिक: । त्रि । कर्पटान्विते । कर्पटधारिणि ॥
कर्पटी । त्रि । कर्पटान्विते ॥ अ० इनि ॥
कर्पर. । पुं । मूर्द्धास्थिनि । कपाले । खोपरी इति भाषा ॥ शस्त्रविशेषे ॥ कटाहे ॥ कल्पते । कृपूसामर्थ्ये । बाहुलकादरो लत्वाभावश्च ॥
कर्परांश: । पु । भग्नकपालखण्डे ॥
कर्पराल: । पुं । अक्षोटे । कन्दराले ॥ कर्परम् अलति । अलभू० । कर्मण्यण् ॥
कर्परिकातुत्थम् । न । तुत्थविशेषे । कर्पर्याम् ॥ गुडूचीयोगआञ्जने ॥
कर्परी । स्त्री । दार्विकायाम् । काथोद्भवतुत्थे । दारुहरिद्राया. क्वाथस्य तुत्थे । आवर्त्तननिष्पन्ने कृत्रिमरसाञ्जने । कल्पते । कृपू० । बाहुलकादरट् लत्वाभावश्च । टित्वान्ङीप् ॥
कर्परीतुत्थकम् । न । रसके । खपरिया थोथा इति ख्याते ॥ कर्परीतुत्थकं तुत्थादन्यत् तद्रसकं स्मृतम् । ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृता: ॥
कर्पास: । पुं । न । तूलिकायाम् । वस्त्रयोनौ ॥ क्रियते । डुकृञ्० । कृञ: पास ॥
कर्पासफलम् । न । कार्पासे । बिनौला इतिभाषा ॥ कर्पासफलमिक्षुर्स्तं कषायं मधुरं गुरु । वातश्लेष्महरं रुच्यं विशेषेणाश्रिवर्जितम् ॥
कर्पासी । स्त्री । कार्पास्याम् । कपासकावृक्ष इति भाषा ॥ कर्पासात् जातित्वात् गौरादित्वाद्वा ङीष् ॥
कर्पूर । पुं । न । घनसारे । चन्द्रसंज्ञे । सिताभ्रे । कपूर इति भाषा ॥ कर्पूर: शीतलो वृष्यश्चक्षुष्यस्लेखनो लघु: । सुरभिर्मधुरस्तिक्त: कफपित्तविषापह: ॥ दाहतृष्णास्यवैरस्यमेदोदौर्गन्ध्यनाशन: ॥ कर्पूरो द्विविध प्रोक्त पक्वा पक्वप्रभेदत: । पक्वात् कर्पूरत' प्राहु रपक्वं गुणवत्तरम् ॥ अपिच । कर्पूरो नूतनस्तिक्त' स्निग्धश्चोष्णास्त्रदाहद' । चिरस्थो दाहशोषघ्न' सर्वात' शुभकृत् पर: ॥ पोतासभीमसेनाद्यो ऽस्य भेदा भवन्ति । ते च भीमसेने द्रष्टव्या: ॥ किरति कृणाति वा । करति करोति वा । कृविक्षेपे हिंसायां वा । कृञ्० डुकृञ्० वा । क्विप् । पूर्यते पूरी० । इगुपधेतिक: । कर्चासौ पूरश्च ॥ यद्वा । कलते । कृपू० । ख० ऊर: । बाहुलकाल्लत्वाभा-

नेन वा ॥

कर्पूरक । पु । कर्पूरे ॥ कर्च्चूरके । क र्वूरके ॥

कर्पूरतिलका । स्त्री । जमाया सखी भेदे । जयायाम् ॥

कर्पूरतैलम् । न । कर्पूरस्नेहे । हिमतैले ॥

कर्पूरनालिका । स्त्री । कपूरनारीति ख्याते पक्वान्नविशेषे ॥ यथा । घृताक्तया समितया कृत्वा लम्बपुटं ततः । लवङ्गोषणकर्पूरयुतया सितया-न्वितम् ॥ पचेद्दाज्येन सिद्धैषा श्रेया कर्पूरनालिका । संयावसदृशीश्रेया गुणैः कर्पूरनालिका ॥

कर्पूरमणि । पुं । पाषाणप्रभेदे । कर्पूराश्मनि ॥ कर्पूरमणिनामायं मुक्या वातादिदोषनुत ॥

कर्पूररस । पु । रसकर्पूरे ॥

कर्पूरहरिद्रा । स्त्री । कपूरहलदीति ख्यातायाम् । सर्वकण्डूविनाशि न्याम् ॥

कर्पूराश्मा । पुं । उपरत्नविशेषे । कपूर चीनियेति ख्याते ॥

कर्फर । पुं । दर्पणे ॥ इतिजटाधर ॥

कर्बर । पुं । व्याघ्रे ॥ रक्षसि ॥ कृबाति । क्वण्हिं० । क्रगृशृवृक्ष्चतिभ्यः ष्वरच् ॥

कर्ब्बरी । स्त्री । शिवायाम् ॥ पिशाच्याम् कोष ॥

कर्ब्बुदार । पुं । कोविदारे ॥ नीलझिण्टाम् ॥ श्वेतकाञ्चने ॥

कर्ब्बुदारक । पु । श्लेष्मातकवृक्षे ॥

कर्ब्बुर । पु । पापे ॥ राक्षसे ॥ नानावर्णे । त्रिषु । किर्म्मीरे ॥ नदीनिष्पावधान्ये ॥ न । जले ॥ काञ्चने ॥ धुस्तूरवृक्षे ॥ त्रि । चित्रवर्णवति ॥ कर्बति । कर्बश्नि० । कर्बत्युनेन वा । कर्बगतौ वा । ओष्ठ्योपध । मद्गुरादयश्चेति उरच ॥ कर्बुरार्घवर्णेन वा । बवयोरभेदाद्दन्त्यमध्योपि॥

कर्ब्बुरफल । पुं । साकुरुण्डवृक्षे ॥

कर्ब्बुरा । स्त्री । कृष्णवृन्तायाम् । पारुल इति गौड भाषाप्रसिद्ध वृक्षे ॥ वर्वरायाम् । बाबुइतुलसी इति गौड भाषा ॥ उरजम्बा शाप ॥

कर्ब्बुरी । स्त्री । दुर्गायाम् ॥ इतित्रिकाण्डशेष ॥

कर्ब्बूर । पुं । शट्याम् ॥ द्राविडके । कचोरकचुरी इतिभाषा ॥ राक्षसे ॥ न । स्वर्णे ॥ हरिताले ॥ त्रि । चित्रिते ॥ कर्बति । कर्बगतौ । खर्जादिश्चादूरः ॥

कर्ब्बूरकः । पुं । कचूरामे ॥ स्वार्थेकः ॥

कर्म्मांकरः । पुं । कोनाशे । यमे ॥ त्रि ।

भृत्ये ॥ वेतनजीविनि । भरण्यभुजि । मूल्येन कर्मकुर्वति । कमेरा इति भाषा ॥ कर्म करोति । कृञ्० । कर्मणिभृताविति टः ॥

कर्म्मकरी । स्त्री । मूर्वालतायाम् ॥ विम्बिकालतायाम् ॥ मूल्येन कर्मकुर्वन्त्याम् । दास्याम् ॥ टित्त्वान्ङीप्॥

कर्म्मकर्त्ता । पु । कर्मात्मककर्त्तरि ॥ यथा । क्रियमाणन्तुयत् कर्म स्वयमेव प्रसिध्यति । सुकरैः स्वैर्गुणैः कर्तुं कर्मकर्त्तेति तद्विदुरिति ॥ त्रि । कर्मणः कर्त्तरि ॥

कर्म्मकाण्ड । पु । यावज्जीवमग्निहोत्रं जुहुयादित्यादिरूपेण चित्तशोधके कर्मप्रतिपादके वेदभागे ॥ संसारफलके ज्योतिष्टोमादिकर्मकलापे ॥ कर्मणांसमूहः । दूर्वादिभ्यः काण्ड ॥

कर्म्मकार. । पुं । वर्णसङ्करजातिविशेषे । लोहकारे । लुहार इतिभाषा ॥ गोपालात् तन्त्रवाय्यां वै कर्मकारोबभूव सुत. । ब्रह्मवैवर्त्तेत् शूद्रायां विश्वकर्मणोजातइत्युक्तम् ॥ वृषे ॥ त्रि । भृतिंविना भारवहनादिकर्मकारके । बेगारी इतिभाषा ॥ कर्म करोति । कर्मण्यण् ॥

कर्म्मकीलकः । पु । रजके ॥ इतित्रिका

ण्डशेष ॥

कर्म्मक्षम । पुं । अलङ्कर्मीणे । कर्मकरणसमर्थे ॥ कर्मसु क्षम । सप्तमीतियोगविभागात् समासः ॥

कर्म्मक्षेत्रम् । न । भारतवर्षे ॥

कर्म्मचोदना । स्त्री । कर्मविषयायां प्रेरणायाम् ॥ कर्म क्रिया पुरुषव्यापाररूपाऽर्थभावना तद्विषयाचोदना प्रेरणा विधिरूपा शाब्दीभावनेत्यर्थः ॥

कर्म्मजः । पु । कलियुगे ॥ स्वर्गादौ ॥ अदृष्टे ॥ वटद्रुमे ॥ त्रि । कर्मसम्भवे । कायिकवाचिकमानसकर्मोद्भवे ॥ कर्मणोजात. । जनी० । पञ्चम्यामजाताविति ड. ॥

कर्म्मजगुण. । पु । क्रियाजन्यगुणः ॥ स च संयोग. । विभाग. । वेगः । इति भाषापरिच्छेद. ॥

कर्म्मठ । त्रि । कर्मशूरे । प्रयत्नेन मारब्धं कर्मसमापयति य. सतथोच्यते ॥ कर्मकुशले ॥ कर्मणि घटते । कर्मणघटोऽठच् ॥

कर्म्मण्य. । त्रि । कर्मयोग्ये ॥ कर्मणि प्रवीणे ॥ कर्मणि साधु. । तत्रसाधुरितियत् ॥

कर्म्मण्यभुक् । त्रि । भरण्यभुजि । कर्मकारे । वेतनोपजीविनि ॥ कर्मण्यं वेतनं भुङ्क्ते । भुज० । क्विप् ॥

कर्मण्या । स्त्री । वेतने । मूल्ये ॥ कर्मणा सम्पद्यते । कर्मवेशाद्यत् ॥ कर्मणि साधुर्वा । तत्रसाधुरितियत ॥

कर्मदेव । पु । यज्ञेन स्वर्गं प्राप्ते ॥ यथा । ज्योतिष्टोमादिना स्वर्गप्राप्ता स्युः कर्मदेवता इति ॥ अदित्याहु । अश्विनकल्पेऽश्वमेधादिकर्म कृत्वा मवत् पदम् । अवाप्याजानदेवैर्या पूज्यास्ता. कर्मदेवता इति ॥

कर्मधारय । पुं । समानाधिकरणे तत्पुरुषे ॥

कर्म । न । क्रियायाम् । देहेन्द्रियादिव्यापारे ॥ संयोगवियोगयोरसमवायिकारणजातीयकर्मेति कथिता क्रिया । उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पञ्चकर्माणि भवन्ति । नित्यनैमित्तिककाम्यप्रायश्चित्तप्रतिषिद्धभेदादपि पञ्चविधं भवति । तच्चत्वारि धर्म्याणि अन्यदधर्म्यमिति निश्चयः ॥ निष्फलं क्लेशबहुलं सन्दिग्धफलमेव च । न कर्म कुर्यान्मतिमान् सदा वैरानुबन्धि च ॥ सञ्चितक्रियमाणप्रारब्धभेदात् कर्म त्रिविधं भवति ॥ कायिकवाचिकमानसिकभेदात् पुनस्तत् त्रिविधं भवति ॥ विधिप्रतिषेधलक्षणं शास्त्रप्रसिद्धं कर्म । तत्र नित्यनैमित्तिकप्रायश्चित्तभेदात् त्रिविधं भवति ॥ यागदानहोमात्मके वेदविहिते ॥ भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः । भूतानां भवनधर्मिणां सर्वेषां स्थावरजङ्गमानां भावमुत्पत्तिम् उद्भवं वृद्धिञ्च करोति यो विसर्गस्त्यागः तच्छास्त्रविहितो यागदानहोमात्मकः स एष कर्म संज्ञितः ॥ सात्त्विकादिभेदात् पुनस्तत्त्रिविधम् । तत्र सात्त्विकं यथा । नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत्तत् सात्त्विकमुच्यते ॥ राजसं यथा । यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः । क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ तामसं यथा । अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् । मोहादारभ्यते कर्म यत्तत् तामसमुच्यते ॥ तत्कर्माश्रमाभिमानविशिष्टेऽन्तःकरणधर्मे । शास्त्रविहितक्रियाकलापे नित्यनैमित्तिककाम्यात्मके ॥ शुक्लं कृष्णं शुक्लकृष्णमेति त्रिविधभेदभिन्ने ॥ तत्त्रिविधं जन्म प्रयच्छति । तदाहुर्विश्वरूपाचार्याः । शुभैराप्नोति देवत्वं निषिद्धैर्नारकीं गतिम् । उभाभ्यां पुण्यपापाभ्यां मानुष्यं लभतेऽवशः ।

इति ॥ क्रियतेतत्तत्फलार्थिभिरिति कर्म्म । तस्यचानादित्वम् आद्यकोटेरनुपलभ्यमानत्वात् । यत शरीरवत कर्मकरणम् तच्चशरीरकर्म्मारब्धम् । तान्यपिशरीरान्तरेण कृतानि । तच्चकर्म्मजमिति सोयं तृतीय पाश. ॥ जन्मनिमित्ते अदृष्टविशेषे ॥ उक्तमन्नवार्त्तिककारै. । नकर्म्मकारणं मुक्ते र्नाग्निस्तापस्यभेषजम् । कर्म्मभ्योजन्म नियतं जन्मचेन्निर्दृतिः कुत । इति ॥ वासना कर्म्म विद्याच त्रयं जन्मप्रयोजकम् । उक्तं तत्र प्रधानत्वं कर्म्मणः श्रूयते पुन. ॥ उत्तमाधमदेहाख्यं वैषम्यं कर्म्मणा भवेत । देहे विद्यावासनाभ्यां भवेद्भोगस्य कौशलम् ॥ कर्म्मसाध्येव कर्त्तव्यमिच्छताभ्युदयञ्चिरम् । पापन्तु सर्वदाहेयं दुःखेभ्यस्त्वस्तताभृशम् ॥ पूर्वकाण्डपरा इत्थं कर्म्मप्राधान्यमूचिरे । अथवेदान्त शास्त्रज्ञाः प्राहुः कामप्रधानताम् ॥ पुमानादौ काममय एवभूत्वाथ कर्म्म कृत् । यतोयं कर्म्मणोहेतुः कामो तोस्य प्रधानता ॥ अकामस्य क्रिया काचिद्दृश्यते नेहकस्यचित् । यद्य द्धि कुरुते जन्तु स्तत्तत्कामस्यचेष्टितम् ॥ यथादिरूपं निष्यं कर्म्मद्विधा

। सस्कारक विविदिषाजनक ञ्च । तत्र विहितत्वमात्रबुद्ध्या क्रियमाणं सस्कारकम् । ईश्वरार्पणबुद्ध्या क्रियमाणं विविदिषाजनकम् । यत्करोषीत्यादि भगवद्वचनादितिविवेक. ॥ षटकारकान्तर्गतकारकविशेषे ॥ अत्रद्वितीया विभक्तिर्भवति । उक्ते कर्म्मणि प्रथमाभवति । धातूपात्तव्यापारजन्यफलाश्रय कर्म्मेतित्तल्लक्षणम् । यत क्रियते फलार्थिभि स्तत कर्म्मेति प्रसिद्धम् । करोतेर्निखिलक्रियावाचकत्वात कर्त्तुर्व्यापारैर्यत् साध्यते तदित्यर्थ । अतएव क्रियाव्याप्यं कर्म्मेति क्रमदीश्वर । तच्चतुर्विधम् । निर्वर्त्त्यम् १ यथा घटं करोति पुत्रं प्रसूते ॥ विकार्यम् २ तच्चद्विविधम् । प्रकृतेरुच्छेदकम् प्रकृतेर्गुणान्तराधायकञ्च । आद्यंयथा काष्ठं भस्म करोति । अन्त्ययथा । सुवर्णं कुण्डलं करोति । तथाचोक्तमर्हद्धरिणा । यदसज्जायते पूर्वं जन्मना यत् प्रकाशते । तन्निर्वर्त्त्यं विकार्यञ्चकर्म्मद्वेधा व्यवस्थितम् ॥ प्रकृत्युच्छेदसम्भूतं विकार्यं काष्ठभस्मवत् । अन्यद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ प्राप्यम् ३ यथा ग्रामङ्गच्छति चन्द्रम् पश्यती

त्यादि ॥ अनीप्सितञ्च ४ यथा पापं त्यजति इत्यादि ॥ यज्ञादिश्रमभवने ॥ ज्ञानसाधनविशेषे ॥ यथाहुः । कषायपक्तिः कर्म्माणि ज्ञानन्तु परमा गतिः कषाये कर्म्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते इति ॥ क्रियते फलार्थिभिः । डुकृञ् । कृञः भावे कर्म्मणि च सर्वधातुभ्यो मनिन् इति मनिन् ॥ अर्च्चादि ॥ आरभेतैव कर्म्माणि श्रान्तः श्रान्तः पुनः पुनः । कर्म्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥

कर्म्मन्दी । पु । भिक्षौ । परिव्राजि ॥ कर्म्मन्देन प्रोक्तम् भिक्षुसूत्रमधीते । कर्म्मन्दकृशाश्वादिनि ॥

कर्म्मफलम् । न । कमरङ्गफले ॥ कर्म्मविपाके ॥ संसारे ॥ सर्वकर्म्मणाम् फलं व्याकृतसंसार एवेति भाष्योक्ते ॥ कर्म्मणः फलम् ।

कर्म्मफलप्सु । त्रि । कर्म्मफलार्थिनि ॥

कर्म्मफलासक्त । त्रि । कर्म्मणि फले च आसक्तः कर्त्तृत्वाभिमानो भोगाभिलाषश्च यस्य तस्मिन् ॥

कर्म्मभू । स्त्री । आर्य्यावर्त्ते ॥ कृष्टभूमौ । कर्म्मक्षेत्रे ॥

कर्म्मभूमि । स्त्री । आर्य्यावर्त्त । पुण्यभूमौ ॥ अत्रकालिकयानुष्ठाय दूरे च इति निर्भयाः । सर्वभक्ष्या नपर्यन्ति कर्म्मभूमिमचेतसः ॥ कर्म्मणो भूमि ॥ भारतवर्षे ॥ यथा । तत्रापि भारतं श्रेष्ठं जम्बुद्वीपे महामुने । यतो हि कर्म्मभूरेषा अतोऽन्या भोगभूमय इति विष्णुपुराणम् ॥

कर्म्ममीमांसा । स्त्री । पूर्वमीमांसायाम् । कर्म्मकाण्डवेदविचारग्रन्थे जैमिनिप्रणीते ॥

कर्म्ममूलम् । न । कुशे । दर्भे ॥ कर्म्मणो हेतौ ॥ कर्म्मणां मूलम् ॥

कर्म्मयुगम् । न । कलियुगे ॥ इति त्रिकाण्डशेषः ॥

कर्म्मयोग । पु । ईश्वरार्पणबुद्ध्या क्रियमाणे फलाभिसन्धिरहिते तत्तद्वर्णाश्रमोचिते वेदविहिते कर्म्मकलापे मनसां ज्ञानसाधनभूते ॥ चित्तशुद्धिजनके वैदिके कर्म्मणि ॥

कर्म्मरङ्गः । पुं । न । कमरङ्ग इति प्रसिद्धे फलवृक्षे । पीतफले । कर्म्मारे । न्युब्जे ॥ कर्म्मरङ्गं हिमं ग्राहि स्वाद्वम्लं कफवातकृत् ॥

कर्म्मरी । स्त्री । वंशरोचनायाम् ॥

कर्म्मवज्रः । पुं । शूद्रे ॥ इति महाभारतम् ॥

कर्म्मवाटी । स्त्री । तिथौ ॥

कर्म्मविपाक । पुं । कर्म्मजन्यफलस्य परिपाके ॥ प्राक्तनशुभाशुभकर्म्मणः पाप

रोगप्रायश्चित्ताख्यां विवरणग्रन्थे ॥

कर्म्मव्यतिहार । पुं । क्रियाविनिमये ॥ परस्परकरणे ॥

कर्म्मशील. । त्रि । कार्म्मे । कर्मकृति ॥ कर्मशीलं यस्य ॥

कर्म्मशूर । त्रि । कर्मठे । प्रयत्नेन प्रारब्धकर्मपरिसमापके ॥ फलपर्यन्त कर्मकर्त्तरि ॥ कर्मणिशूर । सप्तमी समासः ॥

कर्म्मशेष । त्रि । उत्पाद्यविकार्याप्यसंस्कार्येषु पुरोडाशसोममन्त्रव्रीह्यादिषु ॥

कर्म्मसङ्ग. । पु । कर्मसुदृष्टादृष्टार्थेषु अहमिदङ्करोमि एतत् फलम्भोक्ष्ये इत्यभिनिवेशविशेषे ॥

कर्म्मसङ्गी । त्रि । श्रुतिस्मृतिविहितप्रतिषिद्धकर्मफलाधिकारिणि । कर्तृत्वाभिमानेन फलाभिसन्धिना च कर्मण्यभिनिविष्टे ॥

कर्म्मसङ्ग्रह । पु । कर्मसङ्गृह्यते सम्वैन्यचेति- व्युत्पत्त्या कर्माश्रये ॥ कर्मणः पुण्यापापरूपस्य अर्थभावनाया. सङ्ग्रहे सङ्क्षेपे ॥

कर्म्मसचिवः । पु । कर्मोपयुक्तसचिवे । धीसचिवातिरिक्ते मन्त्रिविशेषे ॥ कर्मणि सचिव सहाय ॥

कर्म्मसन्न्यासिक' । पु । यतौ । सन्न्यासिनि ॥

कर्म्मसन्न्यासी । पु । यतौ ॥ द्विविध कर्मसन्न्यास. फलसाधनभेदत । फलाय त्यानिनस्त्यागो जिज्ञासोर्ज्ञानसिद्धये ॥ फलवत् कर्मणोपित्याज्यत्वे कर्मण्येवाधिकारस्ते इत्यादिस्मृतिविरोध इत्याशङ्क्य तस्याविरक्तविषयत्वानमैवमित्याह । अविशुद्धधिय कर्मण्यधिकारो विशुद्धधीः । सत्यां विविदिषोत्पत्तौ तदर्थं कर्म सन्त्यजेत ॥ तदर्थं शुद्ध्यर्थम् ॥ कर्मणा सन्न्यास कर्मसन्न्यास । सोऽस्यास्ति । इनि ॥ कर्मणा वध्यते जन्तुर्विद्ययाच विमुच्यते । तस्मात कर्म न कुर्वन्ति यतय पारदर्शिन ॥

कर्म्मसाक्षी । पु । सूर्ये ॥ सूर्यादिनवसु ॥ सूर्य सोमो यम कालो महाभूतानि पञ्चच । एते शुभाशुभस्येह कर्मणो नव साक्षिण ॥ कर्मणः साक्षी ॥

कर्म्मसिद्धि । स्त्री । इष्टानिष्टलक्षणायां फलप्राप्तौ ॥

कर्म्माध्यक्ष । त्रि । क्रियासाक्षिणि ॥

कर्म्मान्त । पु । कर्मभुवि । कृष्टभूमौ ॥ इक्षुधान्यादिसङ्ग्रहस्थाने ॥ शुचीनाकरकर्मान्ते इत्युक्ते ॥ कर्मावसाने ॥ कर्मान्ते दासभृत्याश्चेत्यु

न्ते ॥

कर्म्मार । पु । कर्म्मकारे । लौहकारे । लुहार इतिप्रसिद्धे जातिविशेषे ॥ वंशे । त्वचिसारे । बाँस इतिप्रसिद्धे वृक्षे ॥ कर्म्मरङ्गे । कमरख इतिभाषा ॥

कर्म्मार्ह । पु । पुरुषे ॥ त्रि । क्रियायोग्ये ॥

कर्म्मशौच. । पु । अनहङ्कारे ॥

कर्म्मी । पु । दक्षिणासहितज्योतिष्टोमादिकर्म्मानुष्ठायिनि । यजमाने । देवानामन्ने ॥ केवलकर्म्मी हि चन्द्रमण्डलाधिकारी परतस्तो देवानामन्नभूत इति श्रौतीप्रसिद्धि ॥ त्रि । कर्म्मविशिष्टे ॥ कर्म्मास्ति अस्य । स्त्री० इनि. ॥

कर्म्मिष्ठ । त्रि । क्रियावति ॥

कर्म्मीरक' । पुं । अक्षोटे ॥

कर्म्मेन्द्रियम् । न । कर्म्मसाधकेन्द्रिये । पाय्वादिपञ्चके व्यस्ते समस्ते च ॥ पायूपस्थम् पाणिपादौ वाक् चैवेन्द्रियसङ्ग्रहः । उत्सर्गानन्दनादानगत्यालापास्तु तत्क्रियाः ॥ वागादीनीन्द्रियाण्याकाशादीनां रजोंशेभ्यो व्यस्तेभ्य. पृथक्पृथक् क्रमेणोत्पन्नानि भवन्ति । यथोक्तं भागवते । तेषां रजोंशेर्जातानि क्रमात् कर्म्मेन्द्रियाणि च । प्रत्येकमिति ॥ कर्म्मसाधकमिन्द्रियं कर्म्मेन्द्रियम् ॥ कर्म्मेन्द्रियदेवता अग्नीन्द्रोपेन्द्रयमप्रजापतय । कर्म्मेन्द्रियाणां वागादीनां क्रमेणाग्न्यादयो देवता भवन्ति ॥ कर्म्मेन्द्रियाणां विषयास्तु वचनादानगमनविसर्गानन्दा क्रमेण वागादीनां विषया ॥

कर्व्व. । पु । कामदेवे ॥ आखौ ॥ कृणाति । कृञ् हिंसायाम् । किरति वा । कॄ विक्षेपे । कॄ गृॄ दॄभ्यो व ॥

कर्व्वट. । पु । न । शतग्राममध्ये मनोरमस्थाने ॥ ग्रामशतस्य जना क्रयविक्रयादिना सेवादिना वा येन ग्रामेण जीवन्ति तस्मिन् ॥ इति केचित् ॥ चतु समग्रामे ॥ चतु. सनेग्रहस्थाने ॥ चतु शतग्रामसङ्ग्रहस्थाने ॥ न । नगरे । पुरे ॥

कर्व्वुर. । पुं । राक्षसे ॥ पापे ॥ भेषजविशेषे ॥ व्याघ्रे ॥ कृणाति । कृञ्० । कृगृदृवलिभ्य उरच् ॥

कर्व्वुरी । पु । उमायाम् । शिवायाम् ॥ शिवपत्न्याम् ॥

कर्व्व्य । पु । कर्व्वुरे । कचूर इतिभाषा ॥ इति राजनिर्घण्ट' ॥

कर्ष. । पुं । न । अक्षे । आपादोक्ष्यके माने । अशीतिरत्तिकासु ॥ भिषजां व्यवहारेतु कर्ष. स्यात् तोलकद्वयम् । सुवर्णे । विभीतकपदके ॥ राज

निर्घगटकमते कर्ष स्याद्दशमाषकः ॥पु । कर्षणा ॥ विभीतक वृक्षे ॥ कर्षति । कृषविलेखने । पचाद्यच । भावे घञ्वा ॥

कर्षक, । त्रि । क्षेत्राजीवि । कृषीवले ॥ आकर्षणकर्त्तरि ॥ पु । अयस्कान्ते ॥ कर्षति । कृष० । ण्वुल ॥

कर्षणम् । न । वैश्यवृत्तिविशेषे । कृषि कर्मणि । लाङ्गलादिना भूमिखनने । खेती इतिभाषा ॥ आकर्षणे ॥ शोषणे ॥ पीडने ॥ कृषेर्ल्युट ॥

कर्षणी । स्त्री । क्षीरिणीवृक्षे ॥

कर्षफल । पु । विभीतकवृक्षे । कलि द्रुमे ॥ कर्षम् फलमस्य ॥

कर्षफला । स्त्री । आमलक्याम् ॥

कर्षार्द्धम् । न । तोलकपरिमाणे ॥

कर्षिणी । स्त्री । कविकायाम् । अश्व मुखबन्धनरज्जुस्थितलोहे ॥ क्षीरिकावृक्षे ॥

कर्षित, । त्रि । पीडिते ॥ यथा । अधमैकर्षित्व वृत्तिकर्षितइति ॥

कर्षू । पु । करीषाग्नौ ॥ तुषाग्नौ ॥ वार्त्तायाम् ।, जीविकायाम् ॥ कृषिविशेषे ॥ स्त्री । कुल्यायाम् ॥ कुल्ये। कीकसे ॥ नदीमात्रे ॥ कृत्रिमखाते । चतुरङ्गुलखातविशेषे ।कर्षणम् कृष्यते कर्षति वा कृषवि० । कृषिच

मितनिधनिर्सर्जिखर्जिम्यऊ ॥

कर्हि । अ । कदा ॥ कस्मिन्काले । अनद्यतनेर्हिलन्यतरस्याम् ॥

कर्हिचित । अ । कस्मिंश्चित्काले ॥ कस्याञ्चिदप्यवस्थायाम् । जातु ॥ कर्हिच चित चेति विग्रह ॥

कल । पु । मधुरध्वनौ । अव्यक्त मधुरध्वाने ॥ सालवृक्षे ॥ न । शुक्रे । रेतसि ॥ त्रि । अजीर्णे ॥ कडतिमाद्यति अनेन । कडमदे । हलश्चेति घञ । संज्ञापूर्वकत्वाद्वृद्ध्यभाव । डलयोरेकत्वम् ॥

कलक । पु । शकुलमत्स्ये ॥

कलकण्ठ । पु । कलध्वाने ॥ हंसे ॥ पारावते ॥ पिके ॥ कल कण्ठोऽस्य ।

कलकल, । पु । कोलाहले । बहुभिः कृते उच्चै शब्दे ॥ यथा । विशालाभ्या माभ्यां किमिह नयनाभ्यां खलुफलं न याभ्यामालीढा परमरमणीयातवतनु । अयंहिन्यक्कारो जननिमनुजस्य श्रवणयोर्ययोर्नान्तर्यात स्तव लहरिलीलाकलकल इति- जगन्नाथत्रिशूली ॥ सर्जनिर्यासे । कलशब्दे । कलनम् । घञ । सज्ञापूर्वकत्वाद्वृद्ध्यभाव । कलादपि कल, ॥

कलघोष । पु । कोकिले ॥ कलो घो

घो यस्य ॥

कलङ्क । पु । अङ्के । चिह्ने ॥ अपवादे ॥ कालायसमले । लौहकिट्टे ॥ कम् ब्रह्माणं लङ्कयति हीनतां गमयति प्रापयति वा । लकि गतौ । कर्मण्यण् । यद्वा । कलति । कल शब्दसंख्यानयोः । क्विप् । कल् चासौ अङ्कश्च ॥

कलङ्कलेखा । स्त्री । मालिन्यरेखायाम् ॥

कलङ्कप । पु । सिंहे ॥

कलङ्कषा । स्त्री । करताल्याम् ॥

कलङ्की । त्रि । अपवादग्रस्ते ॥ सचिह्ने ॥ लौहमलविशिष्टे ॥ मत्वर्थीय इनि ॥

कलङ्कुर । पुं । आवर्त्ते । जलभ्रमे ॥ इतित्रिकाण्डशेष ॥

कलञ्ज । पु । सविषास्त्रेण हतयो र्मृगपक्षिणो ॥ ताम्रकूटे । तामाकु सुरती इति भाषा ॥ यथा । विष्णुसिद्धान्तसारावल्यां वैद्यके । अथ धूमपर्णीधूमपानगुणा । कलञ्जसंवेष्टन धूमपानात स्याद्दन्तशुद्धिर्मुखरोगहानि । कफश्रमामज्वरहानिकृच्च गान्धर्वविद्याप्रवणैकसेव्यम् ॥ सख्याविशेषे । यथा । सप्ताशी प्रोच्यते गुञ्जा सातिस्रो रूपकं भवेत । रूपकैर्दशभि' प्रोक्त' कलञ्जोनामना

मत इतियुक्तिकल्पतरु ॥

कलतूलिका । स्त्री । कामुकायाम् । वाञ्छिन्याम् । लञ्जिकायाम् ॥

कलत्रम् । न । श्रोणौ ॥ भार्य्यायाम् ॥ नृपादीनां दुर्गस्थाने ॥ गडति गड्यते वा । गडसेचने । गडरादिभ्य क इति अत्रन । डलयोरैक्यम ॥ कलयते वा । कैड पालने । क ॥ कडति कड्यते वा । कडमासने । बाहुलका दत्रन् ॥

कलधूतम् । न । रूप्ये ॥ इतिराजनिर्घण्ट ॥

कलधौतम् । न । स्वर्णे । हेम्नि ॥ रजते । रूप्ये ॥ पु । कलध्वनौ ॥ कलो ऽमलो धौतोऽस्य ॥

कलध्वनि । पु । पारावते ॥ पिके । । कोकिले ॥ मयूर ॥ गम्भीरशब्दे ॥ कलोध्वनियस्य । कर्मधारयो वा ॥

कलध्वान । पु । पारावते ॥ परभृते ॥ बर्हिणि ॥ कलोध्वानो ऽस्य ॥

कलन । पु । वेतसवृक्षे ॥ न । चिह्ने । लक्ष्मणि ॥ दोषे ॥ लङ्कने ॥ ग्रसने ॥ यथा । कलनात् सर्वभूतानां महाकाल' प्रकीर्त्तित: । महाकालस्य कलनात त्वमाद्याकालिका परेति ॥ एकमासिकगर्भे ॥ गर्भे मिश्रिते शुक्रशोणिते । तत्तु एकरात्रे

का भवतीति श्रीभागवतम् ॥ सङ्ख्याने । गणने ॥

कलना । स्त्री । वशतायाम् ॥ गणनायाम् ॥

कलन्दर । पुं । सङ्कीर्णजातिविशेषे । सतु लेटात् तीवरकन्यायां जातः । इति ब्रह्मवैवर्त्ते पुराणम् ॥

कलन्दिका । स्त्री । सर्वविद्यायाम् ॥ इति हेमचन्द्रः ॥

कलन्धुः । स्त्री । पत्रशाकविशेषे । कुवकालुकायाम् । घोलिकायाम् ॥

कलभः । पु । पञ्चवर्षपर्यन्ते करिशावके ॥ इतिसुभूतिः ॥ त्रिंशद्वर्षस्तु कलभ इतिवैजयन्ती ॥ धत्तूरवृक्षे ॥ कलयति । कल विक्षेपे गतौ सङ्ख्याने वा । कलते वा । कलशब्दसङ्ख्यानयोः । कृशृशलिकलिगर्दिभ्योऽभच् । कलेभाषते वा । भाष व्यक्तायां वाचि । अन्येभ्योपीतिडः ॥

कलभवल्लभः । पु । पीलुवृक्षे ॥

कलभी । स्त्री । चञ्चुवृक्षे ॥

कलभैरव । त्रि । मधुरभीषणे ॥

कलमः । पु । लेखन्याम् । वर्णतूल्याम् ॥ शालिधान्यप्रभेदे ॥ चौरे । पाटच्चरे ॥ कलते । कल श० । कलिकर्चोरम ॥

कलमोत्तमः । पुं । गन्धशालौ ॥

कलम्ब । पुं । नालिकाशाके ॥ पृषत्के । शरे ॥ कल्यते । कल विक्षेपे । डलयोरेकत्वात् कृकदिकडिकटिभ्योऽम्बजित्यम्बच ॥ कदम्बे । श्रीपादपे ॥ कडम्बे । शाकनाडार्म् ॥ कडति । कडमदे । अम्बच ॥ केन जलेन तेवा । लवि अवस्रंसने । प्रचाच ॥

कलम्बकः । पुं । कलम्बार्थे ॥ धाराकदम्बे ॥

कलम्बिका । स्त्री । कलम्बीशाके । नाली इतिभाषा ॥ ग्रीवापश्चान्नाड्याम् । मन्यायाम् ॥ इतिहेमचन्द्रः ॥

कलम्बी । स्त्री । जलजलताशाकविशेषे । कलम्बिकायाम् । कलमीशाक इतिगौडभाषा । करेमु इतिभाषा ॥ कडति । कड मदे । कृकदीत्यम्बच् । डलयोरेकत्वम् ॥ केन जले लम्बते वा । लवि० । अच् । गौरादित्वान्ङीष् । कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी ॥

कलम्बुः । पु । कलम्बिकायाम् ॥

कलम्बुटम् । न । नवनीते । हैयङ्गवीने ॥ इतिहारावली ॥

कलम्बूः । स्त्री । कलंब्याम् । करेबू इति प्रसिद्धेशाके ॥

कलरवः । पु । कपोते । पारावते ॥ कोकिले ॥ कलध्वनौ ॥ त्रि । कल

ध्वनिविशिष्टे ॥ कलो रवोऽस्य ॥

कलल । पुं । न । गर्भवेष्टनचर्मणि । जरायौ ॥ कलने । शुक्रशोणितस ङ्घाते ॥ कल्यते । कलसङ्ख्याने । वृषादिभ्यश्चिदितिकल ॥

कललज । पुं । राले । सालनिर्यासे ॥

कललोद्भव । पु । सालवृक्षे ॥

कलविङ्क । पु । चटके ॥ कलिङ्गकवृ क्षे । इन्द्रयवे ॥ कल वङ्कते । वकि गतौ । अच् । पृषो० ॥

कलश । पुं । न । घटे । कूटे । कल सा इतिभाषा ॥ कलं शवति । शु गतौ । अन्येभ्योपीतिड ॥

कलशि । स्त्री । पृश्निपर्ण्याम् । पिठव नीति भाषा । चाकुलिया इतिगौ डभाषा ॥ गर्गर्याम् । मन्थपात्रे ॥ क लं श्यति । श्येतनूकर्णे । इन् । था तु । अकाराकारलोपः । कलशि मुद धिगुर्वी वल्लवा लोडयन्तीति माघ ॥

कलशी । स्त्री । पृश्निपर्ण्याम् ॥ गर्गर्या म् ॥ जाति लक्षणो ङीष् ॥

कलसः । पुं । द्रोणपरिमाणे ॥ त्रि । घटे ॥ यथा । कलां कलां गृहीत्वा तु देवानां विश्वकर्मणा । निर्मितो ऽयं सबै यस्मात् कलसस्तेन कथ्यत इति श्रीमद्भागवत्नम् ॥ अपि च । सागरे मथ्यमाने तु पीयूषा र्थं सुरासुरे । पीयूषधारणार्थाय निर्मितो विश्वकर्मणा ॥ कला क लास्तु देवानाममिता स्ता पृथक् पृथक् । यत कृतास्तु कलसा स्तत स्ते परिकीर्त्तिता इत्यादि कालि कापुराणे ८७ अध्याये द्रष्टव्यम् ॥ केन जलेन लसति । लसश्लेषणक्री डनयो । पचाद्यच ॥

कलसि । स्त्री । पृश्निपर्ण्याम् ॥ गर्ग

कलसी । स्त्री । र्याम् ॥

कलसीसुतः । पु । अगस्त्यमुनौ ॥

कलसोदधि । पुं । समुद्रे ॥ कलस इव उदधि मन्थानाधारत्वात् ॥ इतिम हाभारतम् ॥

कलह । पुं । खड्गकोषे ॥ भण्डने ॥ पुं । न । युद्धे । समरे । लड़ाई इतिभा षा ॥ पुं । राढे ॥ कलस्य मधुरध्व नेर्हननम् । अन्येभ्योपीतिडः ॥

कलहंस । पुं । कादम्बे । बालिहांस इतिगौडभाषाप्रसिद्ध हंसविशेषे । कलनादे ॥ राजहंसे ॥ नृपोत्तमे ॥ परात्मनि ॥ श्वेतद्ध्वाखराटस्सि प्रभेदे ॥ सकला: सनीषकवित क लहंस: । इति स० । यमुनाविहार कुतुके कलहंसो व्रजकामिनीकम लिनीकृतकेलि । जनचित्तहारिक लकण्ठनिनाद प्रमुद तनोतु तवम

कला

न्दतनूज. ॥ अस्य सिंहनादसंज्ञाप्य
स्ति ॥ कलोमधुरवाक् हंसः ॥
कलहनाशन. । पुं । पूतिकरञ्जे ॥
कलहप्रिय । पु । नारदे ॥ इतिमहा
भारतम् ॥
कलहप्रिया । स्त्री । सारिकायाम् ॥
कलहान्तरिता । स्त्री । नायिकाभेदे ॥
अस्यालक्षणं यथा । पतिमवमन्य
पश्चात् परितप्ता । यथा । कोपात्
कान्त पराणुद्य पश्चात् तापसमन्वि
ता । कलहान्तरिताप्रोक्ता नायिका
नयशास्त्रिभिरिति ॥
कला । स्त्री । मूलधनवृद्धौ । वृद्ध इ
तिभाषा ॥ शिल्पादौ ॥ अशमात्रे॥
चन्द्रस्यषोडशांशे ॥ कालमाने । त्रिं
शत् काष्ठात्मकेकाले ॥ स्त्रीरजसि
नौकायाम् ॥ कपटे। छद्मनि ॥
विभूतौ ॥ शक्तौ ॥ कलनायाम् ॥
मरीचिपत्न्याम् । कर्दमात्मजायाम्
॥ राशेस्त्रिंशद्भागोंशस्तस्य षष्टिभाग
कलेतिज्योतिर्विद । यथा । विकला
नां कलाषष्ट्या तत्षष्ट्याभाग उ
च्यते । तत्त्रिंशता भवेद्राशि र्भगणो
द्वा दशैवते । इति ॥ अथशैवतन्त्रोक्ता
स्तु: षष्टिकला लिख्यन्ते ॥ गीतम्
१ । वाद्यम् २ । नृत्यम् ३ । नाट्य
म् ४ । आलेख्यम् ५ । विशेषकच्छे

कला

द्यम् ६ । तण्डुलकुसुमबलिविकारा
७ । पुष्पास्तरणम् ८ । दशनवसना
ङ्गरागा. ९ । मणिभूमिकाकर्म १० ।
शयनरचनम् ११ । उदकवाद्यम् १२
। उदकघात १३ । चित्रायोगा १४
। माल्यग्रथनविकल्पा. १५ । शेखरा
पीडयोजनम् १६ । नेपथ्ययोगा
१७ । कर्णपत्रभङ्गाः १८ । गन्धयु
क्ति १९ । भूषणयोजनम् २० । इ
न्द्रजालम् २१ । कौचुमारयोगा.
२२ । हस्तलाघवम् २३ । चित्रशाक
पूपभक्ष्यविकारक्रिया २४ । पान
करसरागासवयोजनम् २५ । सूची
वापकर्माणि २६ । सूत्रक्रीडा २७ ।
प्रहेलिका २८ । प्रतिमाला २९ ।
दुर्वचकयोगा. ३० । पुस्तकवाचन
म् ३१ । नाटिकाख्यायिकादर्शनम्
३२ । काव्यसमस्यापूरणम् ३३ ।
पट्टिकावेत्रवाणविकल्पा ३४ ।
तर्कुकर्माणि ३५ । तक्षणम् ३६ ।
वास्तुविद्या ३७ । रूप्यरत्नपरीक्षा
३८ । धातुवाद ३९ । मणिरागज्ञा
नम् ४० । आकरज्ञानम् ४१ । वृ
क्षायुर्वेदयोगा. ४२ । मेषकुक्कुट
लावक युद्धविधि ४३ । शुकसारि
काप्रलापनम् ४४ । उत्सादनम्
४५ । केशमार्जनकौशलम् ४६ । अ

रमुष्टिकाकथनम् ४७ । म्लेच्छित कविकल्पा. ४८ । देशभाषाज्ञानम् ४९ । पुष्पशकटिकानिमित्तज्ञान म् ५० । अथ निमित्तज्ञान मिति पृथक् केचित् पठन्ति ॥ यन्त्रमातृ का ५१ । धारणमातृका ५२ । स म्पाठ्यम् ५३ । मानसीकाव्यक्रिया ५४ । क्रिया विकल्पा ५५ । छलि तकयोगा. ५६ । अभिधानकोषच्छ न्दोज्ञानम् ५७ । वस्त्रगोपनानि ५८ । द्यूतविशेष. ५९ । आकर्षक्री डा ६० । बालकक्रीडनकानि ६१ । वैनायिकीनां विद्यानांज्ञानम् ६२ । वैजयिकीनां विद्यानां ज्ञानम् ६३ । वैतालिकीनां विद्यानां ज्ञान म् ६४ ॥ इतिश्रीभागवतटीकायां श्रीधरस्वामिनः ॥ क्वचित पुस्तके छ्यीवापकर्मद्यूतक्रीडेत्यर्थकं पद म् । तदुत्तरं श्रीखाडमककथानि । वैतालिकीनामित्यत्र वैयासिकी नामितिच पाठो दृश्यते ॥ कलति कलयति कलते वा । कलामकुरू ष्यामिये: । पचाद्यच ॥ कल्यते वा । पुंसीतिघ. ॥ यद्वा कंसादि । आ लोनुमे तिकः ॥

कलाकूणम् । न । विषे ॥ इति राज निर्घण्ट. ॥

कलाकेलि. । पुं । कामदेवे ॥ कलासु केलिर्यस्य ॥

कलाङ्कुर. । पु । सारसे पक्षिणि ॥ कंसा सुरे । मूलदेवे ॥

कलाचिका । स्त्री । }
कलची । स्त्री । } प्रकोष्ठे । कफो णिरधोमणिबन्धपर्यन्ते । कलाई इति भाषे तिकश्चित् ॥ इति हेमचन्द्र हारावल्यौ ॥

कलाजाजी । स्त्री । कृष्णजीरके । कार व्याम् । कलौंजी मंगरैला इतिच ख्यातद्रव्ये ॥

कलाद: । पुं । स्वर्णकारे ॥ कलामाद त्ते । तुदाद्य° । मू° कः ॥

कलादक: । पुं । स्वर्णकारे ॥

कलानिधिः । पुं । चन्द्रे ॥ कला निधी यन्ते ऽत्र । दुधाञ्° । कर्मण्यधिकर णे चेति कि. ॥

कलानुनादी । पुं । रोलम्बे । भ्रमरे ॥ कलविङ्के ॥ कपिञ्जले ॥

कलान्तरम् । न । वृद्धौ । लाभे । सूद इतिभाषा ॥

कलाप: । पु । संहतौ । समूहे ॥ मयू रपिच्छे । बर्हे ॥ काञ्च्याम् ॥ भूष णसामान्ये ॥ तूणे ॥ चन्द्रे ॥ विद ग्धे ॥ कातन्त्रव्याकरणे ॥ ग्रामवि शेषे ॥ यथा ॥ देवापि योगमास्था

य कलापग्राममाश्रितः । सोमवंशे कलौनष्टे कृतादौ स्थापयिष्यति ॥ कलामाप्नोति ॥ आप्नृ० । कर्मण्यण् ॥ कलाआप्यतेऽनेन वा । हलश्चे ति घञ् ॥

कलापकः । पु । हस्तिकण्ठबन्धे ॥ कला पार्थे ॥ स्वार्थेकः ॥ न । ऋणविशे षे ॥ यस्मिन् काले मयूराः कलापि नो भवन्ति सउपचारात् कलापी कलापिनि देयमृणम् । कलाप्यश्व त्थयवबुसाद्वुन् ॥

कलापी । पु । प्लक्षवृक्षे ॥ बर्हिणि । मयूरे ॥ कोकिले ॥ कलापोऽस्या स्ति । इनि ॥

कलापिनी । स्त्री । रात्रौ ॥ नागरमु स्तायाम् ॥

कलापूर्णः । पु । चन्द्रमसि ॥ कलाभिः पूर्णः ॥

कलाभृत् । पुं । चन्द्रे ॥

कलामक । पुं । व्रीहिविशेषे । कलम धान्ये ॥

कलाम्बिका । स्त्री । अर्थानाम्प्रयोगे । ऋणादाने ॥ इतित्रिकाण्डशेष ॥

कलायः । पु । सतीनके । हरेणौ । म टर इतिभाषा ॥ कलायस्त्रिकटःप्रो क्तः । कलायोमधुर स्वादु पाकेरू क्षस्सुशीतल ।कषायो वातलो ग्रा

ही कफपित्तहरो लघु ॥ कलमय ते । अय० । कर्मण्यण् ॥

कलायनः । पुं । नर्त्तकभावे ॥

कलायशाकम् । न । केराउ शाक इति ख्याते ॥ कलायशाकं भेदि स्याल्लघु तिक्त त्रिदोषजित् ॥

कलाया स्त्री । गण्डदूर्वायाम् ॥

कलालाप । पुं । भ्रमरे । चञ्चरीके ॥

कलावान । पुं । विधौ । चन्द्रे ॥ त्रि । कलाविशिष्टे ॥

कलावती । स्त्री । तुम्बुरोर्गन्धर्वविशेष स्यवीणायाम् ॥ श्रीराधामातरि । वृषभानुपत्न्याम् ॥ अप्सरोविशेषे ॥ आगमोक्तदीक्षाविशेषे ॥

कलाविक । पु । कुक्कुटे ॥

कलाविकल । पु । चटके ॥

कलाहक. । पु । वाद्यविशेषे । काहला याम् ॥

कलिः । पु । शूरे ॥ आजौयुधि ॥ कल हे ॥ विभीतकवृक्षे ॥ अन्त्ययुगे । तिष्ये । कलियुगे ॥ यत्र कान्तागिरो वेदा यत्र धर्मोर्थसाधनम् । यत्र स्वप्र तिभामान तस्मै श्रीकलयेनमइति कलिविडम्बनम् ॥ अत्रवर्ज्यानाह । । देवरेणसुतोत्पत्ति र्वानप्रस्थाश्रम ग्रह । दत्ताक्षताया कन्याया पुनः र्दानं परस्य च ॥ समुद्रयानस्वीकार.

कमण्डलुविधारणम् । महाप्रस्थान
गमनं गोपशुश्च सुराग्रह ॥ अग्नि
होत्रहवन्याश्च लेहो लीढापरिग्रह
असवर्णासु कन्यासु विवाहश्च द्वि
जातिषु ॥ वृत्तस्वाध्यायसापेक्ष मघ
सङ्कोचनतथा । अस्थिसञ्चयनादूर्द्ध
मङ्गस्पर्शनमेव च ॥ प्रायश्चित्तविधा
नञ्च विप्राणां मरणान्तिकम् । संस
र्गदोषः पापेषु मधुपर्के पशोर्वधः
॥ दत्तौरसेतरेषाञ्च पुत्रत्वेनपरिग्र
हः । शामित्रंचैवविप्राणां सोमवि
क्रयणं तथा ॥ दीर्घकालं ब्रह्मच
र्य्यं नरमेधाश्वमेधकौ । कलौयुगे
त्विमान् धर्मान् वर्ज्यानाहुर्मनीषि
णः ॥ * ॥ तद्युगधर्मो यथा । क
लौतुधर्मपादानां तुर्यांशो ऽधर्महे
तुभिः ।। एधमाने क्षीयमाणोह्य
न्ते सोपिविनङ्क्ष्यति ॥ तस्मिन्
लुब्धादुराचारानिर्दया. शुष्कवैरि
णः । दुर्भगा भूरितर्षाश्चशूद्रदासो
त्तरा' प्रजाः ॥ यदा मायानृतंतन्द्रा
निद्राहिंसाविषादनम् । शोकमो
हौभयंदैन्यंसकलिस्तामसः स्मृत
॥ यस्मात् क्षुद्रदृशोमर्त्याः क्षुद्रभा
ग्यामहाशनाः । कामिनोवित्तही
नाश्चस्वैरिण्यश्च स्त्रियोऽसती" ॥ द
स्यूत्कृष्टा जनपदावेदाःपाषण्डदूषि

ता । राजानश्च प्रजाभक्षा. शिश्नो
दरपराद्विजा ॥ अव्रतावटवोऽशौ
चाभिक्षवश्चकुटुम्बिन. । तपस्विनो
ग्रामवासान्यासिनोत्यर्थलोलुपा'॥
ह्रस्वकाया महाहारा भूर्यपत्याग
तह्रिय । शश्वत कटुकभाषिण्यश्चौ
र्यमायोरुसाहसा. ॥ पणयिष्यन्ति
वैक्षुद्रा किराटा कूटकारिण ।
अनापद्यपिमंस्यन्ते वार्त्तांसाधु जुगु
प्सिताम् ॥ पतिंत्यक्ष्यन्ति निर्द्रव्यं भृ
त्याअप्यखिलोत्तमम् । भृत्यंविप
न्नंपतयः कौलं गाश्चापयस्विनी. ॥
पितॄन् भ्रातॄन् सुहृज्ज्ञातीन् हि
त्वासौरतसौहृदा' । ननान्दृश्याल
संवादा दीना. स्त्रैणाः कलौनर ।
शूद्रा' प्रतिग्रहीष्यन्ति तपोवेषोपजी
विन' । धर्मंवक्ष्यन्त्यधर्मज्ञा अधि
रुह्योत्तमासनम् ॥ नित्यमुद्विग्नम
नसो दुर्भिक्षकरकर्षिता । निरन्ने
भूतले राजन्ननावृष्टि भयातुराः ॥
वासोन्नपानशयनव्यवायस्नानभूषणै
। हीना' पिशाचसन्दर्शा भविष्यन्ति
कलौप्रजा ॥ कलौकाकिणिके प्यर्थे
विगृह्य त्यक्तसौहृदा । त्यक्ष्यंति च
प्रियान् प्राणान् हनिष्यन्ति स्वकान
पि ॥ न रक्षिष्यन्ति मनुजाः स्थविरौ
पितरावपि । पुत्रान्भार्याञ्चकुलजां

क्षुद्राः शिश्नोदरम्भराः॥ कलौनरा
जन् जगतापरं गुरुं त्रिलोकनाथा
नतपादपङ्कजम् । प्रायेणमर्त्त्या भ
गवन्तमच्युतं यक्ष्यन्ति पाषण्डविभि
न्नचेतसः ॥ * ॥ कलिकृतदोषवि
नाशोपायो यथा ॥ यन्नामधेयंम्रि
यमाण आतुरः पतनस्खलन्वा विव
शोगृणन् पुमान् । विमुक्तकर्मार्ग
ल उत्तमाङ्गतिं प्राप्नोति यक्ष्यन्तिन
तं कलौजनाः ॥ पुंसांकलिकृतान्
दोषान् द्रव्यदेशात्मसम्भवान् । सर्वा
न्हरति चित्तस्थो भगवान् पुरुषो
त्तमः ॥ श्रुतःसङ्कीर्त्तितो ध्यातः पू
जितश्चादृतोऽपिवा । नृणांधुनो
ति भगवान् हृत्स्थो जन्मायुताऽशु
भम् ॥ यथा हेम्निस्थितो वह्निर्दुर्व
र्णंहन्ति धातुजम् । एवमात्मगतो
विष्णुर्योगिनामशुभाशयम् ॥ विद्या
तपः प्राणनिरोधमैत्रीतीर्थाभिषे
कव्रतदानजप्यैः । नात्यन्तशुद्धिंल
भतेन्तरात्मा यथा हृदिस्थे भगवत्य
नन्ते ॥ तस्मात् सर्वात्मनाराजन् हृ
दिस्थं कुरुकेशवम् । म्रियमाणोह्य
वहितस्ततो यासि परां गतिम् ॥
कलेर्दोषनिधेराजन्नस्तिह्येकोमह-
नान्गुणः । कीर्त्तनादेवकृष्णस्य मु
क्तसङ्गः परं व्रजेत् ॥ कृते यद्ध्याय

तोविष्णुं त्रेतायां यजतोमखैः । द्वाप
रे परिचर्यायां कलौतद्धरिकीर्त्तना
त् ॥ * ॥ तद्युगशेषधर्मा ॥ सौरा
ष्ट्रावन्त्याभीराश्च शूरा अर्बुदमाल
वाः । व्रात्याद्विजाभविष्यन्ति शूद्र
प्राया जनाधिपाः ॥ सिन्धोस्तटं च
न्द्रभागां कान्तीं काश्मीरमण्डलम्
। भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छा
अब्रह्मवर्चसः ॥ तुल्यकालाइमेरा
जन्म्लेच्छ प्रायाश्च भूभृतः । एतेऽध
र्मान्रृतपराः फल्गुदास्तीव्रमन्यव-
॥ स्त्रीबालगोद्विजघ्नाश्च परदारधना
दृताः । उदितास्तमितप्रायाअल्प
सत्त्वाऽल्पकायुषः ॥ असंस्कृताः क्रि
याहीनारजसातमसावृताः । प्रजा
स्ते भक्षयिष्यन्ति म्लेच्छाराजन्यरू
पिणः ॥ जनतन्नाथास्तेपदास्तच्छी
लाचारवादिनः । अन्योन्यतोराज
भिश्चक्षयंयास्यन्ति पीडिताः ॥ तत
श्चानुदिनं धर्मः सत्यंशौचंक्षमाद
या । कालेन बलिना राजन् नङ
क्ष्यत्यायुर्बलं स्मृतिः ॥ वित्तमेवक
लौनृणां जन्माचारगुणोदयः । धर्म
न्याय व्यवस्थायां कारणं बलमेवहि
॥ दाम्पत्ये भिरुचिर्हेतुर्मायैव व्या
वहारिके । स्त्रीत्वे पुंस्त्वे च हिरति
र्विप्रत्वे सूत्रमेवहि ॥ लिङ्गमेवा

अयाज्ययाजका लुब्धा दुर्वृत्ता' पाप
कारिण' ॥ असत्यभाषिणो मूर्खा
दाम्भिका दुष्प्रपञ्चका' । कन्याविक्र
यिणो व्रात्या स्तपोव्रतपराङ्मुखा
॥लोकप्रतारणार्थाय जपपूजापराय
णा । पाषण्डा' पण्डितम्मन्या
श्रद्धाभक्तिविवर्जिता ॥ कदाहारा
कदाचारा धृतका शूद्रसेवका । शू
द्रान्नभोजिन' क्रूरा वृषली रतिका-
मुका: ॥ दास्यन्ति धनलोभेन स्वदा
रान्नीचजातिषु । ब्राह्मण्यचिह्नमे
तावत केवल सूत्रधारणम् ॥ नैव
पानादिनियमो भक्ष्याभक्ष्यविवेच
नम् । धर्मशास्त्रेसदानिन्दा साधुद्रो
हो निरन्तरम् ॥ सत्कथालापमात्रञ्च
न तेषामनसि क्वचित् । त्वयाकृता
नि तन्त्राणि जीवोद्धारणहेतवे॥नि
गमागमजातानि भुक्तिमुक्तिकरा
णिच। देवीना यत्र देवानांमन्त्रयन्त्रा
दिसाधनम् ॥ कथितावहवोन्यासा
सृष्टिस्थित्यादिलक्षणा' । वद्धपद्मास
नादीनि गदितान्यपि भूरिश ॥ पशु
वीरदिव्यभावा देवतामन्त्रसिद्धिदा
। शवासनं चितारोहो मुण्डसाध
नमेवच ॥ लतासाधनकर्माणित्वयो
क्तानिसहस्रश' । पशुभावदिव्यभा
वौस्वयमेवनिवारितौ ॥ कलौ न प



शुभावोस्ति दिव्यभाव कुतोभवेत्
। पत्र पुष्प फल तोय स्वयमेवाहरेत
पशु ॥ न शूद्रदर्शन कुर्यान्मनसान
स्त्रिय स्मरेत । दिव्यश्चदेवताप्राय:
शुद्धान्त करण' सदा ॥ द्वन्द्वातीतो
वीतराग सर्वभूतसम. क्षमी । क
लिकल्मषयुक्तानासर्वदा ऽस्थिरचे
तसाम् । निद्रालस्यप्रसक्ताना म्भाव
शुद्धि कथम्भवेत् ॥ वीरसाधनकर्मा
णि पञ्चतत्त्वोदितानिच । मद्य मास
तथामत्स्यमुद्रामैथुनमेवच । एता
नि पञ्चतत्त्वानि त्वयाप्रोक्तानि शङ्क
र ॥ कलिजा मानवा लुब्धा शिश्नो
दरपरायणा' । लोभात् तत्र पतिष्य
न्ति न करिष्यन्ति साधनम् ॥ इन्द्रिया
णा सुखार्थाय पीत्वाचबहुलम्मधु ।
भविष्यन्ति मदोन्मत्ता हिताहितवि
वर्जिता. ॥ परस्त्रीधर्षका. केचिद् द
स्यवो बहवो भुवि । न करिष्यन्ति ते
मत्ता पापयोनिविचारणम् ॥ अ
तिपानादिदोषेण रोगिणो बहव
स्त्रितौ । शक्तिहीना वुद्धिहीना भूत्वा
चविकलेन्द्रिया ॥ ह्रदेगर्त्तेप्रान्तरे
च प्रासादात पर्वतादपि। पतिष्यन्ति
मरिष्यन्ति मनुजामदविह्वला ॥
केचिद्विवादयिष्यन्ति गुरुभि स्वज
नैरपि। केचिन्मौनामृतप्राया अपरेब

हुजल्पकाः ॥ अकार्यकारिणः क्रूराः
र्ममार्गविलोपकाः ॥ हिताय यानि क
र्माणि कथितानि त्वया प्रभो । मन्येता
नि सर्वाणि विपरीतानि मानवैः ॥ के
षां योगं करिष्यन्ति न्यासजातानि के
पिवा । स्तोत्रपाठं यन्त्रलिपिं पुरश्चर्यां
जगत्पते ॥ युगधर्मप्रभावेण स्वभावे
न कलौ नराः । भविष्यन्ति दुरात्मा
नः सर्वथा पापकारिणः ॥ तेषामुपाय
दीनेश कृपया कथय प्रभो । आयुरा
रोग्यवर्चस्यं बलवीर्यविवर्द्धनम् ॥ वि
द्याबुद्धिप्रदं नृणामप्रयत्नशुभंकरम् ।
येन लोका भविष्यन्ति महाबल पराक्र
माः ॥ शुद्धचित्ताः परहिता मातापि
त्रोः प्रियङ्कराः । स्वदारनिरताः पुरु
षाः परस्त्रीषु पराङ्मुखाः ॥ देवता
गुरुभक्ताश्च पुत्रस्वजनपोषकाः । ब्रह्म
ज्ञा ब्रह्मविद्याश्च ब्रह्मचिन्तनमानसाः
॥ सिद्ध्यर्थं लोकयात्रायाः कथयस्व हि
ताय यत् । कर्त्तव्यं यदकर्त्तव्यं वर्णा
श्रमविभेदतः । विना त्वां सर्वलोका
नां कस्त्राता भुवनत्रये ॥ इति श्रीमहा
निर्वाणतन्त्रे प्रथमोल्लासे जीवनिस्ता
रोपायप्रश्नः ॥ इति देव्या वचः श्रुत्वा
शङ्करो लोकशङ्करः । कथयामास स
र्वेन महाकारुण्यवारिधिः ॥ श्रीस
दाशिव उवाच ॥ साधु पृष्टं महाभागे



जगतां हितकारिणि । एतादृशः शु-
भः प्रश्नो न केनापि कृतः पुरा ॥ धन्या
सि सुकृतज्ञासि हितासि कलिजन्म
नाम् । यदुक्तं त्वया भद्रे सत्यं सत्यं
यथार्थतः ॥ सर्वज्ञासि त्रिकालज्ञा ध
र्मज्ञासि परमेश्वरि । भूतं भवद्भविष्यञ्च
धर्मयुक्तं त्वया प्रिये ॥ यथातथ्यं यथा
न्यायं यथा योग्यं न संशयः । कलिक
ल्मषदीनानां द्विजादीनां सुरेश्वरि
॥ मेध्यामेध्याविचाराणां न शुद्धिः
श्रौतकर्मणा । न संहिताद्यैः स्मृति
भिरिष्टसिद्धिर्नृणां भवेत् ॥ सत्यं स
त्यं पुनः सत्यं सत्यं सत्यं मयोच्यते
। विनाह्यागममार्गेण कलौ नास्ति ग
तिः प्रिये ॥ श्रुतिस्मृतिपुराणादौ मयै
वोक्तं पुराशिवे । आगमोक्तविधाने
न कलौ देवान्यजेत् सुधीः ॥ कला
वागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्त्तते
। न तस्य गतिरस्तीति सत्यं सत्यं न सं
शयः ॥ सर्ववेदैः पुराणैश्च स्मृतिभिः
संहितादिभिः । प्रतिपाद्योऽस्मि ना
न्योऽस्ति प्रभुर्जगति मां विना ॥ मा
ममन्तिचते सर्वे मत्पदं लोकपाव
नम् । मन्मार्गविमुखा लोकाः पा
षण्डा ब्रह्मघातिनः । अतो मन्म
तमुत्सृज्य यत्कर्म समाचरेत् ।
निष्फलं तद्भवेद्देवि कर्त्तापि नारकी-

भवेत् । मूढो मन्मतमुत्सृज्ययोन्य न्मतमुपाश्रयेत । ब्रह्महापितृहा स्त्रीघ्न सभवेन्नात्रसंशय ॥ कलौ तन्त्रोदितामन्त्रा सिद्धा स्तूर्णफल प्रदा । शस्ता कर्म्मसुसर्वेषु जपय ज्ञक्रियादिषु ॥ निर्वीर्या' श्रौतजा तीयाविषहीनोरगाइव । सत्या दौ सफला आसन कलौतेमृतका इव ॥ पञ्चालिका यथाभित्तौ सर्वे न्द्रियसमन्विता. । अमूरशक्ता का र्येषुतथान्ये मन्त्रराशय' ॥ अन्यम न्त्रै कृतङ्कर्मवन्ध्यास्त्रीसङ्गमो यथा । नतत्रफलसिद्धि स्याच्छ्रमएवहिके वलम् ॥ कलावन्योदितैर्मार्गै सिद्धि मिच्छतियोनर । तृषितोजाह्नवी तीरेकूपंखनतिदुर्मतिः ॥ मदुक्तादु दितं धर्म्मंहित्वान्यद्धर्ममीहते । अ मृतं स्वगृहेत्यक्ता चीरमार्कंसवा च्छति ॥ नान्य पन्था मुक्तिहेतुरि हामुत्रसुखाप्तये । यथा तन्त्रोदितो मार्गोमोक्षायच सुखायच ॥ तन्त्रा णिबहुधोक्तानिनामाख्यानान्विता निच । सिद्धानां साधकानाञ्च विधानानिचभूरिशः ॥ अधिकारिवि भेदेनपशुवाहुल्यतः प्रिये । कुला चारोदितंधर्मंगुप्त्यर्थंकथितक्वचित ॥ जीवप्रवृत्तिकारीणिकानिचित्क थितान्यपि । देवानानाविधाः प्रोक्ता देव्योपिबहुधा प्रिये ॥ भैरवाश्चैव बेतालावटुका नायिकागणा' । शा क्ता शैवावैष्णवाश्चसौराणागाणपता दय. ॥ नानामन्त्राश्चयन्त्राणि सिद्धोपा यान्यनेकश । भूरिप्रयाससाध्यानि यथोक्त फलदानिच ॥ यथायथाकृ ताः प्रश्ना येनयेन यदायदा । तदात स्योपकारायतथैवोक्तमयाप्रिये ॥ सर्वलोकोपकारायसर्वप्राणिहिताय च । युगधर्मानुसारेणयाथातथ्येन पार्वति ॥ त्वयायादृक्कृत प्रश्नोन केनापिपुराकृत' । तवस्नेहेनवक्ष्या मिसारात्सारपरात् परम् ॥ वेदा नामागमानाञ्च तन्त्राणाञ्च विशेष त । सारमुद्धृत्यदेवेशितवाग्रेकथ्य तेमया ॥ यथानरेषुतन्त्रज्ञाः सरि तांजाह्नवीयथा । यथाहन्त्रिदिवेशा नामागमानामिदंतथा ॥ किंवेदै. किंपुराणैश्चकिंशास्त्रैर्बहुभि' शिवे । विज्ञातेस्मिन्महा तन्त्रेसर्वसिद्धीश्व रोभवेत ॥ यतोजगन्मङ्गलायत्वया हंविनियोजित । अतस्तेकथयि ष्यामियद्विश्वहितकृद्भवेत ॥ कृते विश्वहितेदेवि विश्वेश. परमेश्वर' । प्रीतोभवतिविश्वात्मायतोविश्वंत दाश्रितम् ॥ सएकएव सद्रूपः सत्यो

ऽद्वैत परात्पर । स्वप्रकाश सदा पूर्ण सच्चिदानन्दलक्षण ॥ निर्विकारो निराधारो निर्विशेषो निराकुलः । गुणातीत सर्वसाक्षी सर्वात्मा सर्वदृग्विभु ॥ गूढः सर्वेषु भूतेषु सर्वव्यापी सनातनः । सर्वेन्द्रियगुणाभास सर्वेन्द्रियविवर्जित ॥ लोकातीतो लोकहेतु रवाङ्मनसगोचरः । स वेत्ति विश्वं सर्वज्ञस्तं न जानाति कश्चन ॥ तदधीनं जगत्सर्वं त्रैलोक्यं सचराचरम् । तदालम्बनतस्तिष्ठेदवितर्क्यमिदं जगत् ॥ तत्सत्यता मुपाश्रित्य सद्वद्भाति पृथक् पृथक् । तेनैव हेतुभूतेन वयं जाता महेश्वरि ॥ कारणं सर्वभूतानां स एकः परमेश्वरः । लोकेषु सृष्टिकरणात् स्रष्टा ब्रह्मेति गीयते ॥ विष्णु पालयितादेवि संहर्त्ताहं तदिच्छया । इन्द्राद्यो लोकपाला सर्वे तद्वशवर्त्तिनः ॥ स्वे स्वेऽधिकारे निरता स्ते शासति तदाज्ञया । त्वम्परा प्रकृति स्तस्य पूज्यासि भुवनत्रये ॥ तेनान्तर्यामिरूपेण तत्तद्विषययोजिता । स्वस्वकर्म प्रकुर्वन्ति न स्वतन्त्रा कदाचन ॥ यद्भयाद्वाति वातोऽपि सूर्यस्तपति यद्भयात् । वर्षन्ति तोयदा काले पुष्प्यन्ति तरवो वने ॥ कालङ्कालयते का



लेमृत्योर्मृत्यु र्भियोभयम् । वेदान्तवेद्योभगवान यत्तच्छब्दोपलक्षित ॥ सर्वेदेवाश्च देव्यश्च तन्मया सुरवन्दिते । आब्रह्मस्तम्बपर्यन्तं तन्मयं सकल जगत ॥ तस्मिंस्तुष्टे जगत्तुष्ट प्रीणिते प्रीणित जगत । तदाराधनतो देवि सर्वेषां प्रीणनं भवेत॥ तरोर्मूलाभिषेकेण यथा तद्भुजपल्लवा । तृप्यन्ति तदनुष्ठाना त्तथा सर्वेऽमरादय ॥ यथा तवार्चनाद्ध्यानात् पूजनाज्जपनादपि ये । भवन्ति तुष्टा सुन्दर्यस्तथा जानीहि सुव्रते ॥ यथा गच्छन्ति सरितो ऽवशेनापि सरित्पतिम् । तथार्चादीनि कर्माणि तद्दुद्देश्यानि पार्वति ॥ योयोयान्यान्य देवान्भक्तयायजन्दाशये । तत्तद्दातिसोऽध्यक्षस्ते दैवगणो प्रिये ॥ बहुनात्र किमुक्तेन सत्यमेकम्प्रिये - । ध्येय पूज्यः सुखाराध्यस्तविना नास्तिमुक्तये ॥ नायासो नोपवासश्च कायक्लेशो न विद्यते । नैवाचारादि नियमो नो पचाराश्च भूरिशः ॥ नदिक्कालविचारो ऽस्ति न मुद्रान्यास संहतिः । यत्साधने कुलेशानि तत्तवि नाकोऽन्यमाश्रयेत ॥ * ॥ इतिश्री महानिर्वाण तन्त्रे सर्वतन्त्रोत्तमोत्तमे सर्वधर्मनिर्णयसारे श्रीमदाद्या

सदाशिवसंवादेजीव निस्तारोपाय प्रश्नोत्तरेपरब्रह्मोपासनोपक्रमोनामद्वितीयोल्लास ॥ २ ॥ * ॥ तृतीयोल्लासे ब्रह्मोपदेशकथनम् ॥ कलौ पापयुगे घोरे तपोहीनेति दुस्तरे । निस्तारवीजमेतावद्ब्रह्ममन्त्रस्यसाधनम् ॥ साधनानिवहूक्तानि नाना तन्त्रागमादिषु । कलौदुर्वलजीवा नामसाध्यानिमहेश्वरि ॥ अल्पायुषःस्वल्पसत्त्वा अन्नाधीनासव प्रिये । लुब्धाधनार्जनेव्यग्रा सदाचञ्चलमानसा ॥ समाधावस्थिरधियोयोगक्लेशासहिष्णव । तेषाहिताय मोचायब्रह्ममार्गोयमीरित ॥ कलौनास्त्येव नास्त्येव सत्यसत्यमयोच्यते । ब्रह्मदीक्षाविनादेवि कैवल्यायसुखायचेति ॥ * ॥ श्रुत्वासम्यक परब्रह्मोपासनपरमेश्वरी । परमानन्दसम्पन्नाशङ्करं परिप्रच्छति ॥ श्रीदेव्युवाच ॥ कथितंयत्त्वयानाथब्रह्मोपासनमुत्तमम् सर्वलोकप्रियकरं साचाद्ब्रह्मपदप्रदम् ॥ तेजोबुद्धिबलैश्वर्यदायकसुखसाधनम् । तृप्तास्मिजगदीशानतववाक्यामृतप्लुता ॥ यदुक्तंकरुणासिन्धोयथा ब्रह्मनिषेवणात् । गच्छन्ति ब्रह्मसायुज्यंतथैवममसाधनात ॥ एतदेदितुमिच्छामि मदीयसाधनं परम् ।



ब्रह्मसायुज्यजननयत्त्वयाकथितम्प्रभो ॥ विधानकीदृशतस्यस । पनकेनवर्त्मना । मन्त्र कोवाचविहितोध्यनपूजादिकञ्चकिम् ॥ सविशेषसावशेषमामूलादक्तु मर्हसि । ममप्रीतिकरदेवलोकाना हितकारकम् ॥ कोह्यन्यस्त्वाहतेशम्भोभवव्याधिभिषग्गुरु ॥ इतिदेव्यावचश्रुत्वादेवदेवोमहेश्वर । उवाच परयाप्रीत्या पार्वतीं पार्वतीपति ॥ श्रीसदाशिवउवाच ॥ शृणुदेविमहाभागेतवाराधनकारणम् । तत्साधनतो येन ब्रह्मसायुज्यमश्नुते ॥ त्वपराप्रकृति साक्षाद्ब्रह्मण परमात्मन । त्वत्तोजातजगत्सर्वंत्वजगज्जननीशिवे ॥ महदाद्यणुपर्यन्त यदेतत सचराचरम् । त्वयैवोत्पादित भद्रेत्वदधीनमिद जगत ॥ त्वमाद्या सर्वविद्याना मस्माकमपि जन्मभ । त्वजानासिजगत्सर्वंनत्वाजानातिकश्चन ॥ त्वकाली तारिणी दुर्गा षोडशी भुवनेश्वरी । धूमावतीत्वबगला भैरवी छिन्नमस्तका ॥ त्व मन्नपूर्णा वाग्देवीत्वदेवि कमलालया । सर्वशक्तिस्वरूपात्वसर्वदेवमयीतनू ॥ त्वमेवसूक्ष्मास्थूला व्यक्ताव्यक्तस्वरूपिणी । नि

राकारापि साकारा कलवा वेदितम् हीति॥ उपासकानां कार्यार्थं श्रेयसे जगतामपि। दानवानां विनाशाय धत्से नानाविधास्तनूः॥ चतुर्भुजा त्वं द्विभुजा षड्भुजाष्टभुजा तथा। त्वमेव विश्वरक्षार्थं नानाशस्त्रास्त्रधारिणी॥ तत्तद्रूपविभेदेन मन्त्रयन्त्रादिसाधनम्। कथितं सर्वतन्त्रेषु भावाश्च कथितास्त्रय॥ पशुभावः कलौ नास्ति दिव्यभावोऽपि दुर्लभः। वीरसाधनकर्म्माणि प्रत्यक्षाणि कलौयुगे॥ कुलाचारं विना देवि कलौ सिद्धिर्न जायते। तस्मात्सर्वप्रयत्नेन साधयेत् कुलसाधनम्॥ कुलाचारेण देवेशि ब्रह्मज्ञानं प्रजायते। ब्रह्मज्ञानयुतो मर्त्यो जीवन्मुक्तो न संशयः॥ ज्ञानेन मेध्यमखिलममेध्यं ज्ञानतो भवेत्। ब्रह्मज्ञाने समुत्पन्ने मेध्यामेध्यं न विद्यते॥ येोऽजानाति परं ब्रह्म सर्वव्यापि सनातनम्। किममेध्यं तस्याग्रे सर्वं ब्रह्मेति जानतः॥ त्वं सर्वरूपिणी देवि सर्वेषां जननी परा। तुष्टायां त्वयि देवेशि सर्वे तोषा भवेत्॥ सृष्टेरादौ त्वमेकासीत् तमोरूपमगोचरम्। त्वत्तो जातं जगत्सर्वं परब्रह्मसिसृक्षया॥ महत्तत्त्वादिभूतान्तं त्वया सृ-



ष्टमिदं जगत्। निमित्तमात्रं तद्ब्रह्म सर्वकारणकारणम्॥ सद्रूपं सर्वतोव्यापि सर्वमावृत्य तिष्ठति। सदैकरूपं चिन्मात्रं निर्लिप्तं सर्ववस्तुषु॥ न करोति न चाश्नाति न गच्छति न तिष्ठति। सत्यं ज्ञानमनाद्यन्तमवाङ्मनसगोचरम्॥ तस्येच्छामात्रमालम्ब्य त्वं महायोगिनी परा। करोषि पासि हंस्यन्ते जगदेतच्चराचरम्॥ तव रूपं महाकालो जगत्संहारकारकः। महासंहारसमये कालः सर्वं ग्रसिष्यति॥ कलनात्सर्वभूतानां महाकालः प्रकीर्त्तितः। महाकालस्य कलनात्त्वमाद्या कालिका परा॥ कालसंग्रसनात् काली सर्वेषामादिरूपिणी। कालत्वादादिभूतत्वादाद्याकालीति गीयते॥ पुन स्वरूपमासाद्य तमोरूपं निराकृति। वाचातीतं मनोगम्यं त्वमेकैवावशिष्यसे॥ साकारापि निराकारा मायया बहुरूपिणी। त्वं सर्वादिरनादिस्त्वं कर्त्री हर्त्री च पालिका॥ अतस्ते कथितं भद्रे ब्रह्ममन्त्रोपदीक्षितः। यत्फलं समवाप्नोति तत्फलं तव साधनात्॥ नानाचारेण भावेन देशकालाधिकारिणाम्। विभेदात्कथितं भद्रे गुप्तं चिह्नसाधनम्॥ येनैवाधिकृतास्त एव फलभागिनः। भ

विष्यन्ति तरिष्यन्ति मानुषा गतकि
ल्बिषा ॥ वहुजन्मार्जितै पुण्यै कु
लाचारेमतिर्भवेत । कुलाचारेणपू
तात्मासाचाच्छिवमयोभवेत् ॥ यत्रा
स्तिभोगवाहुल्य तत्रयोगस्यकाकथा
। योगेपिभोगविरह कौलस्तूभयम
श्नुते ॥ एकश्चेत्कुलतत्वज्ञ पूजितो
येनसुव्रते । सर्वेदेवाश्चदेव्यश्चपूजि
तानात्रसंशय ॥ पृथिवीहेमसंपूर्णा-
दत्त्वायत्फलमाप्नुयात । तस्मात्को
टिगुणपुण्यंलभते कौलिकार्चनात
॥श्वपचोपिकुलज्ञानी ब्राह्मणादति
रिच्यते । कुलाचारविहीनस्तुब्राह्म
णः श्वपचाधमः ॥ कौलधर्मात् परो
धर्मोनास्तिज्ञानेतुमामके । यस्या
नुष्ठानमात्रेण ब्रह्मज्ञानीनरोभवेत्
॥सत्यंब्रवीमि ते देवि हृदिकृत्वाव
धारय । सर्वधर्मोत्तमात् कौलातप
रोधर्मोनविद्यते ॥ अयन्तुपरमोमा
र्गोगुप्तोस्तिपशुसङ्कटे ।व्यक्तीभविष्य
त्यचिरात संप्राप्ते प्रवलेकलौ ॥ क
लिकालेप्रवृद्धेतु सत्यंसत्यंमयोच्य
ते । नस्थास्यन्तिविनाकौलानपशवो
मानवाभुवि ॥ यदातुवैदिकीदीक्षा
दीक्षापौराणिकीतथा । नस्थास्य-
तिवरारोहे तदैवप्रवल कलि ॥ य
दातुपुण्यपापानांपरीक्षावेदसम्भवा



। नस्थास्यतिशिवे शान्तेतदैवप्रवल
कलि ॥ क्वचिच्छिन्ना क्वचिद्भिन्ना य
दासुरतरङ्गिणी । भविष्यति कुले
शानितदैवप्रवल कलि ॥ यदातु-
म्लेच्छजातीया राजानोधनलोलुपा
। भविष्यन्ति महाप्राज्ञे तदैवप्रवल
कलि ॥ यदास्त्रियोतिदुर्दान्ता
कर्कशा कलहेरता । गर्हिष्यन्ति
स्वभर्त्तारंतदैवप्रवल कलि ॥ य
दातुमानवा भूमौ स्त्रीजिता काम
किङ्करा । द्रुह्यन्तिगुरुमित्रादीन्
तदैव० ॥ यदाक्षोणीस्वल्पफलातो
यदास्तोकवर्षिणः । असम्यकफलि
नोवृक्षास्तदैव० ॥ भ्रातर स्वज
नामात्यायदाधनकणेच्छया । मि
थ सम्प्रहरिष्यन्तितदैव० ॥ प्रक
टेमद्यमांसादौ निन्दादण्डविवर्जिते
। गूढपानंचरिष्यन्तितदैव० ॥ स
त्यत्रेताद्वापरेषु यथामद्यादिसेवन
म् । कलावपि तथाकुर्यात कुलधर्मा
नुसारत ॥ येकुर्वन्तिकुलाचारंसत्य
पूताजितेन्द्रिया. । व्यक्ताचारा दया
शीलानचितानवाधते कलि ॥ गुरु
शुश्रूषणेयुक्ता भक्ता मातृपदाम्बुजे
। अनुरक्ताः स्वदारेषु नहि० ॥ सत्य
व्रता सत्यनिष्ठा सत्यधर्मपरायणा
। कुलसाधनसत्यायेनहि० ॥ कुलमा

गेशार्तस्त्वा निशोधितानिच योगिने। येदद्यु सत्यवचसे नहि०॥ हिसा मात्सर्यरहिता दम्भद्वेषविवर्जिता। कुलधर्मेषु निष्ठा येनहि०॥ कौलिकैः सह संसर्गवसति कुलसाधुषु। कुर्वन्ति कौलसेवायै नहि०॥ नानावेषधरा कौला कुलाचारेषु निश्चला। सेवन्ते वा कुलाचारैर्नहि०॥ जीवसेकादिसंस्कारा. पितृश्राद्धादिका क्रिया'। येकुर्वन्तिकुलाचारैर्नहि० ॥ स्नानं दानं तपस्तीर्थव्रतं तर्पणमेवच। येकुर्वन्ति कुलाचारैर्नहि० ॥ कुलतत्त्वं कुलद्रव्यं कुलयोगिनमेवच। नमस्कुर्वन्ति ये भक्त्यानहि०॥ कौटिल्याग्लतहीनानां स्वच्छानां कुलमार्गिणाम्। परोपकारनिरतिना साधवो किङ्कर कलि.॥ कलेर्दोषसमूहस्य महानेकोगुणः प्रिये। सत्यप्रतिज्ञकौलानांश्रेयः सङ्कल्पमात्रतः॥ अपरेतुयुगे देविपुण्यं पापञ्चमानसम्। न्यासामामी त कलौ पुण्यं केवलं नतुदुष्कृतम्॥ कुलाचारैर्विहीनाये सततासत्यभाषिणः। परद्रोहपरायेचतेनरा कलिकिङ्कराः॥ कुलवर्त्मस्वभक्तायेपरयोषित्सुकामुका। द्वेष्टार'कुलनिष्ठानां तेज्ञेया कलिकिङ्कराः॥



युगाचारप्रसङ्गेन कलेः प्राबल्यलक्षणम्। सङ्क्षेपात् कथितम्भद्रे प्रीतयेतव पार्वति॥ प्रकटेचकलौ देविसर्वे धर्माःसुदुर्बला। स्थास्यत्येकं सत्यमात्रतस्मात् सत्यमयोभवेत॥ सत्यधर्मं समाश्रित्ययत्कर्मं कुरुतेनर। तदेवसकलं कर्मंसत्यं जानीहिसुव्रते॥ नहि सत्यात् परोधर्मो न पापम् अनृतात्परम्। तस्मात् सर्वात्मनामर्त्यः सत्यमेकं समाश्रयेत॥ सत्यहीनावृथा पूजा सत्यहीनोवृथा जप'। सत्यहीनं तपोव्यर्थमूषरेवपनं यथा॥ सत्यरूपम्परम्ब्रह्म सत्यं हि परमन्तप। सत्यमूला क्रिया सर्वा' सत्यात् परंतरंनहि॥ अतएवमया प्रोक्तं कुप्रकृते प्रवले कलौ। कुलाचारोपि सत्येनकर्त्तव्योप्यक्तभावत॥ गोपनाद्धीयते सत्यं नगुप्तिरनृतंविना। तस्मातप्रकाशत' कुर्यात्कौलिककुलसाधनम्॥ कुलधर्मस्यगुप्त्यर्थं नास्ति त्वाज्जुगुप्सितम्। यदुक्तं कुलतन्त्रेषु नग्नस्तु प्रबलेकलौ॥ कृते धर्मश्चतुष्पादस्त्रेतायांपादहीनक। द्विपादोद्वापरेदेविपादमात्रंकलौ युगे॥ तथापिसत्य वलवन्तप: खञ्ज दयापिच। सत्यपादेक्त्रलेशोपि

धर्मलोपः प्रजायते ॥ तस्मात् सत्य समाश्रित्य सर्वकर्माणि साधयेत ॥ कुलाचारं विनायच नास्त्युपाय कुलेश्वरि । तत्रान्यतमवेशश्चेत् कुतो निःश्रेयसं भवेत ॥ सर्वथा सत्यपूतात्मा मन्मुखेरितवर्त्मना । सर्वङ्कर्म नरः कुर्यात् स्वस्ववर्णाश्रमोदितम् ॥ दीक्षापूजाजपंहोमपुरश्चरणतर्पणम् । व्रतोद्वाहौ पुसवनं सीमन्तोन्नयनं तथा ॥ जातकर्म तथा नाम चूडाकरणमेवच । मृतक्रिया पितृश्राद्धं कुर्यादागमसम्मतम् ॥ तीर्थश्राद्धं वृषोत्सर्गं शारदोत्सवमेवच । यात्रांगृह प्रवेशश्च नववस्त्रादिधारणम् ॥ वापीकूपतडागानां संस्कारं तिथिकर्म्म च । गृहारम्भप्रतिष्ठाश्च देवानां स्थापनन्तथा ॥ दिवाकृत्यं निशाकृत्य पर्वकृत्यन्तथैवच । ऋतुमासवर्षकृत्य नित्य नैमित्तकन्तथा ॥ कर्त्तव्यंयद्कर्त्तव्यत्याज्यग्राह्यञ्चयद्भवेत् । मयोक्तेनविधानेन ततसर्वं साधयेन्नर ॥ नकुर्य्याद्यदि मोहेनदुर्मत्या ऽश्रद्धयापिवा । विनष्ट सर्वकर्म्मभ्योविष्ठायासभवेत् कृमिः ॥ यदिमन्मतमुत्सृज्यमहेशि प्रबलेकलौ । यद्यायत् क्रियते कर्म विपरीतायतद्भवेत् ॥ मन्मतासम्म



तादीक्षा साधकप्राणघातिनी । पूजापिविफलादेवि हुतभस्मार्पणयथा ॥ देवता कुपितातस्य विघ्नस्तस्यपदेपदे ॥ कलिकाले प्रवृत्तेत् शास्त्रामच्छास्त्रमन्यिके । येन्य मार्गे क्रियाकुर्यात समहापातकी भवेत ॥ व्रतोद्वाहौ प्रकुर्वाणोयो न्यमार्गेणमानव । सयातिनरकं घोरं यावच्चन्द्रदिवाकरौ । व्रतेब्रह्मवधप्रोक्तोब्राह्मोमाणवको भवेत् । केवलं शूद्रवाहो ऽसौचण्डालादधमोपिस ॥ उद्वाहितापियानारीजानी यात्सातुगर्हिता । उद्वोढापि भवेत पापीससर्गात्कुलनायिके ॥ वेश्यागमनज पाप तस्यपुंसोदिनेदिने । तद्हस्तादन्नतोयादिनैवगृह्णन्तिदेवता ॥ पितरोपिनचाश्नन्तियतस्तन्मलपूयवत् । तयोरपत्यकानीन सर्वधर्मवहिष्कृत ॥ दैवेपित्र्येकुलाचारेनाधिकारोस्यजायते ॥ अशास्त्रवेनमार्गेण देवतास्थापनचरेत् । नसान्निध्य भवेत्तत्रदेवताया कथञ्चन ॥ वृहाम्बुफलनाऽस्तिकाय क्लेशोधनक्षय ॥ आगमोक्तविधिहित्वाय श्राद्धंकुरुतेनर. ॥ श्राद्धंतद्विफलंसोपिपितृभिर्निरकव्रजेत् ॥ तत्तोयंशोणितसमं पिण्डोमलसमो

भवेत् । तस्मात्सर्व्वं प्रयत्नेनशाङ्क रंमतमाश्रयेत ॥ बहुनात्रकिमुक्तेन सत्त्यं सत्त्यंमयोच्यते । अशाम्भवक्रतंकर्मसर्व्वंदेविनिरर्थकम् ॥ यस्तुतावत परोधर्म्मः पूर्व्वधर्म्मोपिनश्यति । शाम्भवाचारहीनस्य नरकान्नैवनिष्कृ ति ॥ मदुदीरितमार्गेणनित्त्यनैमित्तकर्म्मणाम् । साधनंयत्महेशानि तदेवतवसाधनम् ॥ विशेषाराधनंतवमन्त्रयन्त्रादिसंयुतम् । शेष जकालिरोगाणा ग्रुयतागदतोमम ॥ ॥ * ॥ इतिश्रीमहानिर्व्वाणतन्त्रे सर्व्वतन्त्रोत्तमोत्तमे सर्व्वधर्म्मनिर्णय सारेश्रीमदाद्यासदाशिवसंवादेजी वनिस्तारोपायप्रश्ने पराप्रकृतिसाध नोपक्रमोनामचतुर्थोल्लास. ॥ ४ ॥ * ॥ यावद्दत्स्यापूजास्ति यावद्गङ्गाध रातले । यावद्वेदमयोघोष स्तावत्तो विद्यतेकलि ॥ हरेर्नामैवनामैवना मैवममजीवनम् । कलौनास्त्येवना स्त्येवनास्त्येवगतिरन्यथा ॥ एकाये । द्यूतक्रीडासाधनीभूताक्षस्य यस्मिन् भागेएकोऽङ्कस्तस्मिन् ॥ कलनम् । क लशब्दादौ । इन् ॥ कलयतिकल्य तेवा । कलगतौसंख्यानेच । अदन्तः । अच इः ॥

कलि. । स्त्री । कोरके । कलिकाया म् ॥ कलते । कलशब्दसंख्यानयोः । सर्व्वधातुभ्यइन् ॥

कल्लिक । पु । क्रोञ्चवक इतिशाडभा षाप्रसिद्धे पक्षिणि । क्रौञ्चे ॥

कलिका । स्त्री । अविकसितपुष्पे । को रके ॥ वीणामूले ॥ पदसप्ततियुक्त रचनाविशेषे ॥ लक्षणन्तु । कस्मा नामभवेत्तालनियता पदसप्तति । कलाभिः कलिकाप्रोक्ता तद्भेदा षट समीरिताः इत्यादिरूपगोस्वा मिकृतगोविन्दविरुदावलीभाष्येऽव लोकनीयम् ॥ कलयति । कलग तौसंख्यानेच । चुरादि । अचइः । स्वार्थेकन् ॥

कलिकापूर्व्वम् । न । अङ्गप्रधानान्यतर बहुकर्म्मसाध्य स्वर्गादिफलजनकापू र्व्वोत्पत्तौतत्तत् प्रत्येककर्म्मजन्येऽ दृष्टे ॥ इतिस्मृतिः ॥

कलिकार. । पुं । धूम्याटपक्षिणि ॥ पीतमस्तकपक्षिणि ॥ पूतिकरञ्जे ॥ कलिंकरोति । कृञ्० । कर्म्मण्यण् ॥

कलिकारकः । पुं । नारदे ॥ पूतिकर ञ्जे । लट्टाकरञ्जे ॥ स्वार्थेकन् ॥

कलिकारी । स्त्री । उपविषप्रभेदे । ला ङ्गल्याम् । गर्भपातन्याम् । अग्निमु ख्याम् । विषलाङ्गलीया इतिगौड भाषा ॥

कलिङ्ग. । पु । पूतिकरञ्जे ॥ धूम्याटे ॥ कुटजवृक्षे ॥ शिरीषवृक्षे ॥ प्लक्षवृक्षे ॥ कलिङ्गा । देशविशेषे ॥ यथा । जगन्नाथात् पूर्वभागेकृष्णातीरान्तर्गंशिवे । कलिङ्गदेशः सम्प्रोक्तोवाममार्गपरायणइति ॥ कलिङ्गा क्षत्रिया. तेषांनिवासोजनपदः कलिङ्गा । निवासेऽणोजनपदेलुप् । लुपियुक्तवद्व्यक्तिवचने ॥ न । कौटजफले । इन्द्रयवे ॥ कलिङ्गच्छति । अन्तर्भावितण्यर्थोगमेर्डः । पृ० ॥ खण्डिश्चेतिमुकुट. । कलिगायतीति स्वामी । के मूर्ध्नि लिङ्गंचूडास्येति वा ॥

कलिङ्गक । पु । कलिङ्गार्थे ॥ इन्द्रयवे ॥

कलिङ्गा । स्त्री । नितम्बिन्याम् । योषिति ॥ त्रिवृतायाम् ॥ इन्द्रयवे ॥

कलिञ्ज. । पु । कटे । चटाई सफ इतिभाषा ॥

कलित । त्रि । विदिते ॥ आप्ते ॥ भेदिते ॥ गणिते ॥ उक्ते ॥ बद्धे ॥ धृते ॥ यथा । करकलितकपालः कुण्डलीदण्डपाणिरिति भैरवध्यानम् ॥ सङ्क्रान्ते ॥ यथा । कदाकालेमात कथयकलिताखण्डकरसमिति ॥ विचारिते ॥

कलिदोषघ्न. । पु । कुलधर्म्मे ॥ कलिमलापहे परमात्मनि वासुदेवे ॥ यथा । कलावघातिदोषाढ्येविषयासक्तमानस । कृत्वातुसकलंपापंगोविन्दस्मरणाच्छुचि ॥ अतिपापप्रसक्तोपिध्यायन्निमिष मच्युतम् । भूयस्तपस्वीभवति पङ्क्तिपावनपावन ॥ आद्येनापिनमस्कार, प्रयुक्तश्चक्रपाणये । संसारस्थूलबन्धानामुद्वेजनकरोहिस ॥ इत्यादिपुराणवचनम् ॥ कलेर्दोषा. विहिताऽकरणप्रतिषिद्धानुष्ठानलक्षणा. तान्स्मरणमात्रेणहन्तिनाशयतीतिव्युत्पत्ति. ॥

कलिद्रुम. । पुं । बिभीतके । बहेडा इतिभाषा ॥

कलिन्द । पु । अद्रिविशेषे ॥ सूर्य्ये ॥ विभीतकद्रुमे ॥

कलिन्दकन्या । स्त्री । यमुनायाम् ॥

कलिन्दजा । स्त्री । यमुनायाम् ॥ कलिन्दाज्जाता । जनी० ड. । टाप् ॥

कलिन्दनन्दिनी । स्त्री । कालिन्द्याम् ॥

कलिन्दशैलजा । स्त्री । यमुनायाम् ॥

कलिप्रिय: । पु । नारदमुनौ ॥ वानरे ॥ कले. प्रिय. । कलि. प्रियोयस्यवा ॥

कलिमलापह । पु । संसारदु.खोपशमने ॥

कलिमारक. । पु । पूतिकरञ्जे । कण्टकवतिकरञ्जे ॥ कलिंमारयति ॥

कलिमाल्यः । पु । पूतिकरञ्जे ॥

कलियुगम् । न । कलौ । अन्त्ययुगे ॥ अस्योत्पत्त्यादिर्यथा । माघीपूर्णिमायां शुक्रवारे कलियुगोत्पत्तिः । अस्यावतार कल्कि । पुण्यमेकपादम् । पापत्रिपादम् । गङ्गातीर्थम् । शूद्रयोनिरग्नि । अन्नगताः प्राणाः । सार्द्धत्रिहस्तपरिमितो मनुष्यदेहः । अष्टाधिकशतवर्षं परमायुः । भोजनपात्रस्यनियमो नास्ति इत्यस्य लक्षणम् ॥ अस्याब्दाः ४३२००० ॥ अत्र षट् शककर्त्तारः । यथा । युधिष्ठिरो विक्रमशालिवाहनौ नृपाधिनाथौ विजयाभिनन्दनः । इमेनु नागार्जुनमेदिनीविभुर्बलिः क्रमात् षट् शककारका कलाविति ॥ धर्मः सङ्कुचितस्तपो विरचितं सत्यञ्च दूरं गतो काधर्मश्चलाक्षिजाश्च लुभितामाराव शा मानवाद्यस्य माहात्म्यम् ॥ अत्र निस्ताराय आगमोक्तं ब्रह्मोपासनमेव सदाशिवेनोक्तम् ॥

कलियुगालय. । पु । विभीतके ॥

कलिलम् । त्रि । गहने ॥ मिश्रे ॥ कलते कल्यते वा । कलशब्दसङ्ख्यानयोः । सलिकलीतीलच् ॥

कलिवृक्षः । पुं । विभीतके ॥

कलिहारी । स्त्री । लाङ्गल्याम् ॥ कलिहारीसराकुष्ठशोफार्शोव्रणशूलजित् । सक्षाराश्लेष्मजित्तिक्ता कटुका तुवरापि च ॥ तीक्ष्णोष्णाकृमिहृल्लघ्वी पित्तला गर्भपातनी ॥

कली । स्त्री । कलिकायाम् ॥

कलुष । पु । स्त्री । महिषे ॥ न । पापे ॥ त्रि । आविले ॥ लुषति । लुष हिंसायाम् । इगुपधेति कः । कस्य जलस्य लुषो घातक ॥ कलयति । वशीकरोति वा । कलसङ्ख्याने । पुनः फिकलिभ्य उषच् ॥

कलेवरम् । न । शरीरे ॥ कले शुक्रे मधुराव्यक्तध्वनौ वा वरं श्रेष्ठम् । हलदन्तादित्यलुक् ॥

कलोपजीवी । त्रि । वार्द्धुषी ॥

कल्कः । पु । न । घृततैलादिशेषे ॥ दम्भे ॥ विभीतकवृक्षे ॥ विष्ठायाम् ॥ किट्टे ॥ तुरुष्कनामगन्धद्रव्ये । घृतेन तैलेन वा त्रिफलादिद्रव्यसमन्वितेन साध्ये पिष्टौषधविशेषे ॥ घृततैलादिपाके देयऔषधद्रव्ये । तत्तु पञ्चकषायान्तर्गतदृषदि पेषितम् । यथा । द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा जलमिश्रितम् । तदेव सूरिभिः पूर्वैः कल्क इत्यभिधीयते इति ॥ अस्य पूर्णवीर्ये याममेकं तिष्ठति ॥ शाठ्ये ॥ पापे । यथा । तपोनकल्कोऽध्ययनम

कल्कादृश्याद्ि॥ न। छद्मनि॥ चि। पापाशये। पापात्मनि॥ कल्यते। कल०। कृदाधारार्चिकलिभ्य क इति क॥

कल्कनम्। न। दम्भे॥ शाठ्ये॥ कथने॥ कलहे॥

कल्कफल। पु। दाडिमवृक्षे॥

कल्कि। पु। विष्णोर्भविष्यति दशमावतारे। विष्णुयशः पुत्रे॥ सतु कलिशेषे पापात्मनां विनाशाय सम्भलग्रामे भविष्यति। यथा। सम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः। भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति॥ तस्य कर्म यथा। अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः। असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः॥ विचरन्नाशुना क्षौण्यां हयेनाप्रतिमद्युतिः। नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति॥ इति श्रीभागवतम्॥ विशेष कल्किपुराणादिषु द्रष्टव्य॥

कल्की। पु। कल्क्यवतारे॥ यथा। मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः। रामो रामश्च रामश्च बुद्धः कल्की च ते दश वै॥

कल्प। पु। शास्त्रे। यागक्रियायामुपदेशके वेदाङ्गविशेषे। यज्ञविद्यायाम्। बोधायनादिकर्मपद्धतिग्रन्थे। सूत्रग्रन्थे॥ अनुष्ठेयक्रमः कल्प॥ विधौ॥ कल्पतेऽनेनवा। कृपू सामर्थ्ये। अच। घञ्वा॥ प्रलये। संवर्त्ते॥ कल्पते समर्थो भवति। पुंसीतिघ॥ ब्रह्मणो दिने॥ ब्रह्मणो दिनमेकः कल्प। ब्रह्मणोरात्रिश्चापर. कल्प॥ कल्पयति स्थितिं प्रलयञ्च। कृपू०। ण्यन्तात पचाद्यच॥ क्रमसन्दर्भेतु। त्रिंशत्कल्पैर्ब्रह्मणः कोमासो भवति। तेषां क्रमतो नामानि। यथा। श्वेतवाराह १ नीललोहित २ वामदेव ३ गाथान्तर ४ रौरव ५ प्राण. ६ वृहत्कल्प ७ कन्दर्प ८ सद्य ९ ईशान १० ध्यान ११ सारस्वत १२ उदान १३ गरुड १४ कौर्म १५ ब्रह्मणः पौर्णमासी। नारसिंह. १६ समाधिः १७ आग्नेय १८ विष्णुज १९ सौर. २० सोमकल्प २१ भावन २२ सुप्तमाली २३ वैकुण्ठ २४ आर्चिष २५ वल्मीकल्प २६ वैराज. २७ गौरीकल्प २८ माहेश्वर २९ पितृकल्प ३० ब्रह्मणोऽमावास्या। इति क्रमसन्दर्भ प्रभासखण्डम॥ एतादृशैर्द्वादशमासैर्ब्रह्मणः संवत्सरो भवति। एवंवर्षशतम्ब्रह्मणआयु.। तत्र पञ्चाशद्वर्षात्मकं

पे ॥ हस्तिपुच्छे ॥ त्रि । मलिने ॥ शुभकर्म स्यति समाप्तिं करोति । षो न्तकर्मणि । आतोनुपेतिक । पृ० ॥ लक्षपक्षे ॥

कल्माष । पु । राक्षसे ॥ चित्रवर्णे ॥ कृष्णवर्णे ॥ कृष्णपाण्डुरवर्णे । ग न्धशालौ ॥ त्रि । चित्रवर्णवति ॥ क लयति । कल० । क्विप् । कल् । मा षयति । अभिभवति वर्णान् माष. । मषहिंसायाम् । हन्यर्थाश्चेति चु रादौ पाठा णिच् । कलश्चासौमा ष श्चेति कल्माष ॥

कल्माषकण्ठ. । पु । शिवे ॥ इतिश ब्दावली ॥

कल्माषपाद. । पु । सौदासनृपे ॥

कल्माषी । स्त्री । शवलायाम् ॥ अन्य तो ङीषिति ङीष् ॥

कल्यम् । न । प्रत्यूषे । प्रभाते ॥ मधुनि ॥ सज्जे ॥ त्रि । वाक्श्रुतिवर्जिते ॥ उपा यवचने ॥ सज्जे ॥ नीरोगे ॥ दक्षे ॥ कल्याणवचने ॥ कलयति चेष्टाम् । अघ्न्यादयश्चेतिकलेर्यक् ॥ यद्वा । कल्यते । कलगतौ सङ्ख्यानेच । चुरादिरदन्त । अचोयत ॥ कलासु साधुर्वा । तत्र साधुरितियत् ॥

कल्यजग्धि । स्त्री । प्रातराशे । प्रात र्भोजने । कलेउ कलेवा इतिभाषा ॥

कल्यपाल. । पु । } शौण्डिके ॥
कल्यपालक. । पु । }

कल्यवर्त्त । पुं । प्रातराशे ॥ इतित्रिका ण्डशेषः ॥

कल्या । स्त्री । मद्ये ॥ हरीतक्याम् ॥ टाप् ॥ शुभात्मिकायां वाचि ॥

कल्याणम् । न । अक्षयस्वर्गे ॥ मङ्गले । शिवे । भद्रे । शुभे ॥ हेम्नि ॥ त्रि । शुभयुक्ते ॥ कल्येप्रात. काले अणय ते । अण शब्दे । अकर्त्तरिचेतिघञ् ॥ स्त्री । बह्वादिभ्यश्चेति ङीषि क ल्याणी ॥

कल्याणकृत । त्रि । शास्त्रविहितकारि णि ॥ कल्याणं करोति । डुकृञ् । क्विप । तुक ॥

कल्याणगुणम् । न । श्रद्धावैराग्यादौ ॥

कल्याणघृतम् । न । औषधविशेषे ॥

कल्याणतम. । त्रि । अतिशोभने ॥

कल्याणबुद्धिः । त्रि । सुधियि ॥

कल्याणयोगः । पुं । यात्रायोगान्तरे ॥ यथा । गुरौकेन्द्रेत्रिकोणेवारवृत्तिं भेचकर्मणि । कल्याणयोगेभूपस्य यातु कल्याणकृद्भवेदिति ॥ पुनश्च । त्रिकोणगे शुभेखेटे सबले वाद्वितीयगे । कल्याणसंज्ञोयोगोऽयं यायिना मङ्गलप्रदइति ॥

कल्याणबीज । पु । मसूरे ॥ इतिरा

जनिर्घण्ट ॥

कल्याणिका । स्त्री । मनःशिलायाम् ॥

कल्याणी । त्रि । कल्याणविशिष्टे ॥

कल्याणिनी । स्त्री । बलायाम् ॥

कल्याणी । स्त्री । माषपर्ण्याम् ॥ गवि ॥ मङ्गलमृत्स्नीम् ॥ वङ्गादिस्थप्रदेशे तिलौषे ॥

कल्याणाख । पु । गौरिक के ॥ इतिशि काण्डशेष ॥

कल्लः । त्रि । बधिरे । श्रवणेन्द्रियहीने । बहरा इतिभाषा ॥ इतित्रिकाण्ड शेष ॥

कल्लवम् । न । स्वरभेदे ॥ वाधिर्य्ये ॥

कल्लोलः । पुं । हर्षे ॥ उल्लोले । महात रङ्गे । बडीलहर इति भाषा । बड ढेउ इतिगौडभाषा ॥ त्रि । वैरिणि । सपत्ने ॥ कंजलम् तस्यलोलः उन्मादः । यापदान्तस्येत्यनुस्वारस्यलकारः ॥ कल्लन्तेऽनेन नवा । कल्लशब्दशब्दे । बाहुलकादोलच् ॥

कवक. । पुं । कवले । ग्रासे ॥ न । छत्राके ॥ शिलान्ध्राणि कवकानि चेतिमनुः ॥

कवचः । पुं । गर्दभाण्डे । नन्दिवृक्षे ॥ पटहवाद्ये ॥ पुं । न । तनुत्राणे । वर्मणि । सन्नाहे ॥ मन्त्रविशेषे । लौहादिवर्मवदङ्गादिसंरक्षणार्थं देवतामन्त्रविग्रहे ॥ तत्तुपूजायांपाठ्य-

म् भूर्जेविलिख्यकण्ठादौ धार्यश्च ॥ कंवातवच्चति । वञ्चुगतौ । अन्तर्भावितण्यर्थोवा । मृ० अ ॥ कौति । कुशब्दे । कृतन्यञ्जीत्यादिना कौतेरचच्प्रत्ययेके ॥

कवचपत्रम् । न । भूर्जपत्रे ॥

कवटी । स्त्री । कपाटे ॥

कवयि । स्त्री । कवय्याम् ॥

कवयी । स्त्री । कयीमाच इतिगौडभाषाप्रसिद्धे मत्स्ये । कवई इतिभाषा । क्षुद्रपक्षयुक्तायाम् ॥ कवयीमधुरा स्निग्धाकषायाबलिकारिणी । किञ्चित्पित्तकरीवातश्लेष्मजीवसवर्द्धिनी ॥

कवर । पुं । पाठके ॥ पुं । न । लवणे ॥ अम्ले ॥ केशपाशे ॥ त्रि । मिश्रे ॥ खचिते । सम्पृक्ते ॥ कौतिकूजति वा । कुशब्दे । कोरप्‌च ॥ कवरंलवणेऽम्लेस्त्रीपुन्नीसुङ्गौकचान्तरे । कर्बुरे मार्यागारचः पाठयेभैषजान्तरे ॥ इतिमेदिनी ॥ कवर कर्बुरः सारङ्गितित्रिकायुधः ॥

कवरकी । स्त्री । बन्द्याम् ॥ इतिहारावली ।

कवरा । स्त्री । बर्बरायाम् । खरपुष्पायाम् । बावुई इतिभाषा ॥ अजाद्यत्वाट्टाप् ॥

कवरी । स्त्री । केशविन्यासे । केशवेशे

॥ पृथ्व्याम्। कारव्याम् ॥ कवरी केशाना सन्निवेशविशेष. सा इव ॥ शाकभेदे ॥ वृणोति। इञ् वरणे। अच। गौरादि०। कस्यशिरसोवरी ॥ यद्वा। कूयते। कुशब्दे। कोरट्न्। जानपदेति ङीष् ॥ कशिरो वृणोति आच्छादयति कं कुत्सितवर्णं वृणोति वा। पूर्ववद्च ङीषौ ॥ तुम्ब्याम्। वर्वरायाम् ॥

कवर्ग। पुं। कादिपञ्चसु ॥

कवर्गीय. । पुं। कवर्गभवेवर्णे ॥ भवार्थे वर्गान्ताच्चेति छ' ॥

कवल:। पुं। ग्रासे ॥ चिलिचिमे। वेलेमाच इतिगौड़भाषाप्रसिद्धे मत्स्ये ॥ केन वलते। वल०। अच् ॥

कवलित:। त्रि। भुक्ते ॥ व्याप्ते ॥

कवस.। पु। उरच्छदे। कवचे ॥ कौति। कु०। अतन्यञ्जीत्यादिना कौतेरस. ॥

कवाटम्। न। कपाटे ॥ क वातम् वटति। वटवेष्टने। कर्मण्यण् ॥ कुङ् शब्दे। क्त्रादेरप्। कव शब्दम् गतिवा। अटगतौ। पचाद्यच्। कवच्चोष्ण इच्च्यवयोगविभागात को' कवादेशो वा ॥

कवाटवक्रम्। न। कवाटवेटु इति गौड़भाषाप्रसिद्धे वृक्षविशेषे। वक्राग्रे। कपोतवक्रे ॥

कवाटी। स्त्री। क्षुद्रकपाट्याम् ॥ टिड्ढेति ङीप् ॥

कवारम्। न। पद्मे ॥ इतित्रिकाण्डशेष' ॥

कवि। पुं। वाल्मीकिमुनौ ॥ शुक्रे। दैत्यगुरौ ॥ सूरौ। भास्करे ॥ काव्यस्यकर्त्तरि ॥ सर्वपर्यायैना' कवय' ॥ ब्रह्मणि ॥ त्रि। क्रान्तदर्शिनि। अतीतानागताद्यशेषवस्तुदर्शिनि सर्वज्ञे। सर्वद्रष्टरि ॥ सूक्ष्मार्थविवेकिनि। मेधाविनि। पण्डिते ॥ स्त्री। खलीने ॥ कौति। कु०। अच इ: ॥

कविकम्। न। खलीने ॥ इति हलायुध' ॥

कविका। स्त्री। खलीने। कडि आखी इति खगाम इतिचख्याते ॥ केविकापुष्पे ॥ कवयीमत्स्ये ॥ यथा। कविका मधुरा स्निग्धा कषाया रुचिकारिणी। किञ्चित् पित्तकरी वातशमनी बलवर्द्धनी ॥ कवते कौति वा। कुङ शब्दे। कुशब्देवा। अच इ'। कवि'। स्वार्थे कन्। कुञादिभ्यो वुन् वा। टाप् ॥

कविज्येष्ठ'। पु। वाल्मीकिमुनौ ॥

कविता। स्त्री। कविकर्म्मे। काव्ये ॥ कवे: कर्मभावोवा। तल् ॥ कविता वनिता वापि आयाता सुखदायिनी ॥

कविय. । पुं । न । अश्वास्यबन्धनरज्जौ । खलीने ॥

कविरामायण ।पु । वाल्मीकिमुनौ ॥ इतिशब्दरत्नावली ॥

कविलासिका । स्त्री । वीणाविशेषे ॥

कवी । स्त्री । खलीने ॥

कवीयम् । न । खलीने ॥

कवेलम् । न । उत्पले । कुवलये ॥

कवोष्णम् । न । कोष्णे । मन्दोष्णे ॥ ईषदुष्णम् । कवञ्चोष्ण इतिको' का वादेशः ॥ त्रि । तद्वति ॥

कव्यम् । न । मृतोद्देशेनत्यक्ते । पितृ सम्प्रदानकान्ने । पित्र्ये ।, ॥ कूयते पितृभ्यः । कुशब्दे । यत् ॥

कव्यवालः । पुं । पितृगणविशेषे ॥

कशा । स्त्री । चर्मयष्ट्याम् । अश्वादि ताडन्याम् ॥ आदिनोष्ट्रवारादिग्र हः ॥ अथकशापातविचारः । एतेषु त्रिविधेष्वश्वोऽप्येवंताड्य इतिवि मर्शः ॥ कशानामुत्तममध्यमाधमे षु यथासङ्ख्यं मदुसमनिष्ठुरैकवि धिरूपं चितयम् तत्रविचारे ॥ यथा शुभोजराजः । मृदुमेकेन घातेन दु ष्टकालेषु ताडयेत् । तीव्रं मध्यं पु मश्वौघ्यां अधमं निष्ठुरैस्त्रिभिः॥ उप वेशेऽथनिद्रायां स्खलितेदुष्टचेष्टिते । वक्रपाशोकपीत्सु ग्रीवाम् ज्ञुग्रीवेसङ्के पिते ॥ सन्त्रासेच दुरुत्थाने विमार्ग गमने भये । शिक्षात्यागस्य समये स ञ्जातेचित्तविभ्रमे ॥ दण्ड प्रयो ज्यो वाहाना कालेषु द्वादशस्वपि । ग्रीवायाम्भीतमाहन्यात् वक्षच्चैव चवाजिनम् ॥ विभ्रान्तचित्तमधरे त्यक्तशिक्षमताडयेत । प्रकृपिते स्कन्धवाह्नौ वेढवालोकनन्तथा ॥ उ पवेशेच निद्रायां कटिदेशेचताडये त् । दुश्चेष्टितंमुखेहन्यात् उन्मार्गे प्रस्थितं तथा ॥ जघनेस्खलितं हन्या त्तेन्नमार्गेदुरुत्थितम् । यः क्रुद्धप्र कृतिर्वाजी त सर्वत्रैवताडयेत ॥ इ ति माघे ५ सर्गे तेजोनिरोधेति १० श्लोके मल्लिनाथ ॥ मांसरोहि ण्याम् ॥ कशति । कशशब्दे । पचा द्यच ॥

कशार्हः । त्रि । काश्ये । कशाघातयो ग्ये ॥ कशायाः अर्हः ॥

कशिपु. । पु । भक्ते । भोज्ये ॥ आच्छा दने । वस्त्रे ॥ एकोक्त्या भक्ताच्छादन योः । भोज्यवस्त्रयोः ॥ कशिपुर्भोज्य वस्त्रयोः॥एकैकस्मिन्द्वयोश्चापीति मेदिनीकरः॥ शय्यायाम् ॥सत्यां क्षितौ किंकशिपोः प्रयासैः॥ कशति कुः स म् कश्यते वा । कशगतिशासनयो । स्व॰ साधु' ॥

कशेरु । पुं । न । पृष्ठकोकसे । पृष्ठास्थिनि ॥ जलोद्भवे मूलविशेषे ॥ कशेरु द्विविधं तत्तु महद्राजकशेरुकम् । मुस्ताकृति लघु स्याच्चिचिवोटमितिस्मृतम् ॥ कशेरुकद्वयं शीतमधुरं तुवरं गुरु । पित्तशोणितदाहघ्नं नयनामयनाशनम् ॥ ग्राहि शुक्रानिलश्लेष्मरुचिस्तन्यकरं स्मरम् ॥ पु । भारतवर्षान्तःपातिद्वीपविशेषे ॥ कं शृणाति । शॄ हिंसायाम् । बाहुलकाद् उः प्रत्यये प्रकृतेरेरुडादेशः ॥ शवजातौ ॥

कशेरुकम् । न । तृणकन्दे । कशेरुणि ॥

कशेरुका । स्त्री । पृष्ठास्थि । पृष्ठवंशे ॥ कं वायुं शृणाति । शॄ० । केन शीर्यते वा । केश्रएरूच्वास्ये स्यु: । संज्ञायां कन् । केशादृतिह्रस्व ॥ यद्वा । कश्यते कशति वा । कशशब्दे । बाहुलकादेरु । स्वार्थे कन ॥

कशेरू. । स्त्री । तृणकन्दे ॥ पृष्ठकीकसे ॥ शवजातौ ॥ कं शृणाति । शॄ० । केश्रएरुच्वास्ये स्यू ॥

कश्चन । अ । कश्चिद ॥

कश्चित् । अ । कश्चन । अनिश्चये । कोऽपि इतिभाषा ॥ अर्थान्तरभूते ॥

कश्मलम् । न । मूर्च्छने ॥ पापे ॥ मोहे ॥ त्रि । मलिने ॥ कशनम् । कशगतौ । कुटिकशिकौतिभ्य प्रत्यय स्यमुडिति कल. ॥

कश्मीर' । पु । काश्मीराख्ये देशे ॥

कश्मीरजम् । न । कुङ्कुमे ॥' कश्मीरे जायते । सप्तम्याजनेर्डः ॥

कश्मीरजन्म । न । कुङ्कुमे ॥ कश्मीरे जनमास्य ॥

कश्यम् । न । अश्वमध्ये ॥ मद्ये ॥ कश्यतेऽनेनवा । कश० । बाहुलकाद्य ॥ त्रि । कशार्हे ॥ कशाचमयष्टि' । तद्घात उपचारात कशा । ताम र्हति । दण्डादित्वात यत ॥

कश्यप । पु । मुनिविशेषे । कलागर्भे मरीचिमुनेरौरसे पुत्रे ॥ यथा । ब्रह्मणस्तनयो योऽभूत मरीचिरितिविश्रुत । कश्यपस्तस्य पुत्रोऽभूत् कश्यपानात् स कश्यप ॥ इतिमार्कण्डेयपुराणे विश्वकर्मकृतसूर्यस्तवाध्याय ॥ कश्य मद्यंपिबति पाति वा । पा० सुपीति क ॥ मीनप्रभेदे ॥ मृगान्तरे ॥

कश्यपनन्दन । पु । गरुडे ॥ इतिहलायुध ॥ कश्यपस्य नन्दन ॥

कष. । पु । पाषाणविशेषे । निकषे । सुवर्णपरीक्षणपाषाणे । कसौटी इतिभाषा ॥ खड्गादितीक्ष्णीकरणाय न्ते ॥ कषति । कषहिंसायाम् । प

चाद्य च ॥

कषण । पु । अपक्वे । अम्लाटे ॥ न । घर्षणे । काषे ॥ कण्डूयने ॥

कषमाण । त्रि । कण्डूयमाने ॥

कषाकु. । पु । अग्नौ ॥ सूर्ये ॥

कषाय । पु । श्योनाकवृक्षे । रागे ॥ अ न्तःकरणदोषे । कामक्रोधादिमले ॥ चर्यविक्षेपाभावेपि चित्तवृत्तेरा गादिवासनया स्तब्धीभावादखण्डव स्त्वनवलम्बने ॥ रक्तपीतवर्णयोगे ॥ धवृक्षे ॥ त्रि । तुवररसवति ॥ सु रभौ ॥ लोहिते ॥ रक्तपीतमिश्रित वर्णे ॥ पु । न । क्वाथे । निर्यासे । क्वाथरसे ॥ यथा त्रिफलाकषाय । स पञ्चविधो यथा । स्वरसश्च तथा कल्कः क्वाथश्च हिमफाण्टकौ । ज्ञेयाः कषायाः पञ्चैते लघवः स्युर्यथोत्तरम् ॥ अङ्गरागे ॥ विलेपने ॥ कसैला इतिप्रसिद्धे रसविशेषे । पृथिव्यनिल गुणबाहुल्यात्तस्योत्पत्तिरित्याह शिवदासः । तुवरे ॥ कषायोरोप णोग्राहीस्तम्भनःशोधनोहिमः । क फशोणितपित्तघ्नो जिह्वाजाड्यकरो लघु. ॥ कषतिकण्ठम् । कष० । आ कुलकादायः ॥

कषायकृत् । पु । रक्तलोध्रे ॥

कषायजलम् । न । संस्कारोपयोगि-

नि पञ्चक्षीरद्रुमक्वथिततोये । प्लक्षा श्वत्थोदुम्बरशिरीषवटसम्भवे क-षायजलैरित्युक्ते ॥

कषाययावनाल । पु । तुवरयावनाल धान्ये ॥ इतिराजनिर्घण्ट ॥

कषाया । स्त्री । क्षुद्रदुरालभायाम् ॥

कषायी । पुं । सखुआ० इति प्रसिद्धे सालवृक्षे ॥ लकुचवृक्षे ॥ खर्जूरी वृक्षे ॥ विषयेषु सरागे ॥

कषि । त्रि । हिंसके । हिंस्रे ॥ कषति कष्यते वा । कष० । खनिकषीष्या दिना इः ॥

कषीका । स्त्री । पक्षिजातौ ॥ कषति । कष० । कषिदूषिभ्यामीकन् ॥ खनिके ॥ कषत्यनया । पूर्ववदीकन् ॥

कष्टम् । न । पीडामात्रे । कृच्छ्रे । व्य आयाम् ॥ त्रि । गहने ॥ पीडायु-क्ते ॥ जुगुप्सिते ॥ दोषविशेषे ॥ क ष्टतदर्थावगमो दुरायत्तो भवेदिति लक्षणम् ॥ कषतिकष्यतेऽसौ वा । कष० । क्त । कृच्छ्रगहनयो. क-षइतिनेट् ॥

कष्टकारक । पुं । संसारे ॥ त्रि । पीडा करे ॥ कष्टस्य कारकः ॥

कष्टस्थानम् । न । पीडाकृत्स्थले । दुः खजनक स्थाने ॥ कष्टस्य स्थानम् ॥

कसनोत्पाटनः । पुं । वासकवृक्षे ॥ त्रि

। कासघ्ने ॥

कसेरु. । पु । कशेरौ । गुण्डकन्दे । सु कन्दे । शूकरेष्टे ॥

कसेरुक । पु । }
कसेरुका । स्त्री । } कशेरुणि ॥

कस्तीरम् । न । रङ्गे । पिश्चटे । वङ्गे ॥

कस्तुरिका । स्त्री । }
कस्तूरिका । स्त्री । } मृगमदे । कस्तूर्याम् ॥

कस्तूरी । स्त्री । मृगमदे । मृगनाभौ । गन्धकेलिकायाम् । वेधमुख्यायाम् ॥ कस्तूरिका कटु स्तिक्ता चारोष्णा शुक्रला गुरु । कफवातविषच्छर्द्दिशीतदौर्गन्ध्यशोषहृत् ॥ सा चत्रिविधा । कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक् । काश्मीरी कपिलच्छाया कस्तूरी त्रिविधा मता ॥ कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् । काश्मीरदेशसम्भूता कस्तूरी ह्यधमा स्मृता ॥ कसति गन्धोऽस्याः । कसगतौ । स्व० अर. । पृषोदरादिः ॥

कस्तूरीमल्लिका । स्त्री । मृगमदवासायाम् ॥

कह्लारम् । न । श्वेतोत्पले । सौगन्धिके ॥ कस्य जलस्य ह्लार इव । के ह्लादते वा । ह्लादी० । पचाद्यच् । पृषोदरादिः ॥

काङ्क्ष । पुं । वकपक्षिणि ॥ क इतिशब्दे न के जले वा । ह्लयति । ह्वेञ्स्प र्द्धायां शब्देच । मू० । क' ॥

कांसीयम् । न । कांस्ये ॥ इतिराजनिघंटः ॥

कांस्यम् । न । वाद्यविशेषे ॥ पानपात्रे ॥ मानभेदे ॥ ताम्ररङ्गमिश्रितधातौ । ताम्रार्द्धे । सौराष्ट्रके । वह्निलोहके ॥ ताम्रं त्रपुज माख्यातं कांस्य घोषञ्च कंसकम् । उपधातुर्भवेत् कांस्यंद्वयो स्तरणिरङ्गयो. ॥ कांस्यस्य तु गुणा ज्ञेया स्वयोनिसदृशाजनै । संयोगजप्रभावेण तस्यान्येपिगुणा. स्मृता ॥ कांस्य कषायं तिक्तोष्ण लेखनं विशदसरम् । गुरु नेत्रहितं रूक्षं कफपित्तहर परम् ॥ * ॥ अस्यशोधनम् । पत्रीकृत्य पत्राणि कांस्यस्याग्नौ प्रतापयेत । निषिञ्चेत्तत्तप्तानि तैले तक्रे च काञ्जिके ॥ गोमूत्रेच कुलत्थानां कषायेच त्रिधा त्रिधा । एवं कांस्यस्य रीतेश्चविशुद्धि सम्प्रजायते ॥ * ॥ मारणविधिस्तु । अर्कक्षीरेणसम्पिष्टोगन्धक स्तेनलेपयेत । समेन कांस्यपत्राणिशुद्धान्यम्लरवे र्मुहु. ॥ ततोमूषापुटे धृत्वापचे द्गजपुटेनच । एवपुटद्वयात् कांस्य रीतिश्चम्रियते ध्रुवम् ॥ इतिभावप्रकाश ॥ कंसीयस्य

विकार कंसीयपरमव्ययोरितियञ् । छत्यचम्पुक ॥

कास्यकम् ।न । कांस्यशब्दार्थे ॥

कास्यकार । पु कसकारे । कसेरा इति ख्याते जातिविशेषे । शौल्विके । ताम्रकुट्टके ॥ कांस्य करोति । डुकृञ् कर्मण्यण् ॥

कास्यनील । पु । अञ्जनविशेषे । मृ पालुस्थे । हेमतारे ॥

काक । पु । आत्मघोषे । वायसे । करटे ॥ पीठसर्पिणि । पङ्गौ ॥ वृक्षविशेषे । शिरोऽवक्षालने ॥ परिमाणविशेषे ॥ द्वीपविशेषे ॥ अतिधृष्टे ॥ तिलके ॥ न । सुरतबन्धे ॥ काकानां संहतौ ॥ काकानां समूह । तस्य समूह इत्यण् ॥ कायति । कै शब्दे । इण्भीकापाशल्यतिमर्चिभ्यः कन् ॥

काककङ्गु । पुं । चीनके । चीणा इति प्रसिद्धे धान्ये ॥ इति हेमचन्द्रः ॥

काककर्कटी । स्त्री । खर्ज्जूर्य्याम् ॥

काककला । स्त्री । काकजङ्घाख्ये ॥

काककुष्ठम् । न । कङ्कुष्ठे ॥

काकघ्नी । स्त्री । करञ्जाख्ये ॥

काकचिञ्चा । स्त्री । } गुञ्जायाम् ॥ का
काकचिञ्चि । स्त्री । } कणरी चिञ्चा ।
काकचिञ्ची । स्त्री । } गौरादि ॥

काकच्छद । पु । } खञ्जनपक्षिणि ॥
काकच्छदि । पु । }

काकजङ्घा । स्त्री । स्वनामाख्याते वृक्षविशेष । काकनासिकायाम् । नदीकान्तौषधौ ॥ काकजङ्घा हिमा तिक्ता कषाया कफपित्तजित् । निहन्ति ज्वरपित्तास्रज्वरकण्डुविषक्रिमीन् ॥ काकस्य जङ्घायाम् ॥

काकजम्बु । स्त्री । भूमिजम्बाम् ॥

काकजम्बू । स्त्री । काकफलायाम् । काकनीलायाम् ॥

काकणम् । न । कुष्ठविशेषे ॥ तल्लक्षणं यथा । यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनम् । त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैवसिध्यतीति ॥

काकणन्तिका । स्त्री । गुञ्जायाम् ॥

काकतालीयम् । न । अवितर्कितसम्भवे ॥ यादृच्छिकन्याये ॥ समासाच्चतद्विषयादितिछः । अस्मादेवज्ञापकात् इवार्थेसमासः । सच सुपेतिवा । वाविवार्थौ । काकागमनमिव तालपतनमिव । काकतालम् । काकतालमिव काकतालीयम् । इत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ । तत्रकाकागमनं देवदत्तागमनस्योपमानम् । तालपतनं दस्यूपनिपातस्य । तालेनतु य काक

स्यवध.स देवदत्तस्य दस्युना वधस्तोप मोनम्। इति वधादि काकतालीया दि शब्दवाच्य.सम्पद्यते ॥ काकता लसमागमसदृशश्चोरसमागम इ ति समासार्थः। तत्प्रयुक्त काकम रणसदृशस्तु मत्ययार्थ ॥

काकतिक्ता। स्त्री। काकचिञ्चायाम् ॥

काकतिन्दुक। पु। काकेन्दौ। काकपी लुके। माकडाकेन्दु माकडागाव् काकतेदु इतिच गौडभाषा ॥ का- कानाम् काकवर्णो वा तिन्दुकः ॥

काकतुण्ड। पु। कालागुरुणि ॥

काकतुण्डफला। स्त्री। काकनासाया म् ॥

काकतुण्डिका। स्त्री। काकचिञ्चाया म् ॥

काकतुण्डी। स्त्री। राजरीत्याम्। राजपीतल इति भाषा ॥ कौआडो डी इति भाषाप्रसिद्धे वृक्षविशेषे। काकादन्याम् ॥

काकध्वज। पु। वाडवाग्नौ ॥

काकध्वजा। स्त्री। धूमावत्याम् ॥

काकनामा। पु। वकवृक्षे ॥ इति रत्न माला ॥

काकनास.। पु। विकङ्कटवृक्षे ॥

काकनासा। स्त्री। काकजङ्घावृक्षे ॥ काकस्यनासेव फलमस्या। काक



नासा कषायोष्णा कटुका रस पाक यो.। कफघ्नी वामनी तिक्ता शोथा र्शश्वित्रकुष्ठनुत् ॥

काकनासिका। स्त्री। काकजङ्घायाम्। कौवाठोंठी लिख्यातौषधौ ॥ रक्तत्रि वृति ॥

काकपक्ष। पु। शिखण्डके। मस्तकपा र्श्वद्वये केशरचनाविशेषे। पट्टे इति भषा ॥ यथा। वालानान्तु शिखा प्रोक्ता.काकपक्ष.शिखण्डक. इतिह लायुध.। काकस्य पक्षइति ॥

काकपद। पु। रतिबन्धविशेषे ॥ यथा। पादौ द्वौ स्कन्धयुग्मस्थौ चिह्नलिङ्गं भगेलघु। कामयेत् कामुकीं कामी बन्ध'काकपदोमत इति ॥

काकपर्णी। स्त्री। मुद्गपर्ण्याम् ॥

काकपीलु। पुं। काकतिन्दुके। कुच ला इति भाषा ॥ श्वेतगुञ्जायाम् ॥ काकतुण्ड्याम् ॥ काकैःपील्यते। पीलप्रतिष्ठम्भे। वाहुलकादु ॥

काकपीलुक। पु। काकपीलौ ॥ का कानाम् पीलुरिव। इवेप्रतिकृता विति कन् ॥

काकपुच्छ। पुं। पिके ॥

काकपुष्ट। पु। कोकिले ॥ काकेन पुष्ट ॥

काकपुष्पम्। न। ग्रन्थिपर्णे ॥

काकमाल: । पु । निम्बवृक्षे ॥ इतिरा-जनिर्घण्ट. ॥

काकबलि: । पु । काकसम्प्रदान काम्ना दैा ॥

काकभाण्डी । स्त्री । महाकरञ्जे ॥

काकभीरु' । पु । पेचके ॥

काकमद्गु: । पुं । दात्यूहे ॥

काकमर्दः । पुं । महाकाकलतायाम् ॥

काकमर्दक. । पु । किम्पाके ॥

काकमाचिका । स्त्री । वायस्याम् ॥

काकमाची । स्त्री । वायस्याम् । बहुफलायाम् । सर्वतिक्तायाम् । मको म इतिभाषा ॥ काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा । तिक्ता रसायनी शोथकुष्ठार्शोज्वरमेहजित् । कटुर्नेत्रहिता हिक्काच्छर्दिहृद्रोग-नाशिनी ॥ काकमाचिजनितं मधु शाकं वेसवारमिश्रितेनसुवासम् । तप्ततैलतलनेन सुपाक कैरवाप्य म कृतं सुखवासम् ॥ काकान् मन्यते । मचिशारयोच्छायपूजनेषु । क मैणण्व् । आगमशासनस्यानित्य त्वान्नुम् ॥

काकमाता । स्त्री । काकमाच्याम् ॥

काकमुद्गा । स्त्री । मुद्गपर्ण्याम् । मुगानी इतिगौडभाषा ॥ ईषत् कम् ईषदर्थेचेतिको: कादेश: । काकेन ईषज्जलेन मुद्र गच्छति । गमप्रेतित्र. ॥ यद्वा । काका मुद्गा हर्षं प्राप्ता यस्याम् ॥

काकयव । पु । आगडा इतिगौडभाषा प्रसिद्धे तण्डुलशून्यधान्ये ॥ इतिम हाभारतम् ॥

काकरिपु । पु । उलूके ॥

काकरुहा । स्त्री । वन्दायाम् ॥

काकरूक । पुं । स्त्रीजिते ॥ उलूके ॥ दम्भे ॥ त्रि । नग्ने ॥ भीरुके ॥ निर्द्धने ॥

काकलम् । न । कण्ठमणौ ॥ पु । द्रोणकाके ॥

काकलक । पु । कण्ठमणौ । ग्रीवाया मुन्नतप्रदेशे ॥

काकलि' । स्त्री । काकल्याम् ॥

काकली । स्त्री । सूक्ष्ममधुरास्फुटध्वनौ ॥ ईषत्कल काकली । ईषदर्थेचेतिको कादेश । गौरादित्वान्ङीप् ॥

काकलीद्राक्षा । स्त्री । निर्बीजायाम् । रसाधिकायाम् । सूक्ष्मायाम् । किसमिस इतिभाषा ॥ इति राजनिर्घण्ट ॥

काकलीरव । पुं । कोकिले ॥

काकवल्लरी । स्त्री । स्वर्णवल्ल्याम् ॥

काकविष्ठा । स्त्री । काकमले ॥ कर्म

ह्यनुपादेयत्वेन वैराग्यास्पदे ॥

काकशीर्ष । पु । वकवृत्ते ॥

काकस्फूर्ज । पु । काकतिन्दुके ॥

काका । स्त्री । काकनासायाम् ॥ काकोल्याम् ॥ काकजङ्घायाम् ॥ रक्तिकायाम् ॥ काकमाच्याम् ॥ काकोदुम्बरिकायाम् ॥ टाप ॥

काकाक्षिगोलकन्याय । पु । एकमेव चक्षुर्गोलक मुभयचक्षु सम्बन्धिस दुभयचक्षु कार्यकारकमित्यर्थनिष्ठे. दृष्टान्ते ॥

काकाङ्गी । स्त्री । काकजङ्घायाम् ॥ काकस्येवाङ्ग नासारूपं फलमस्या । जातेरिति गौरादित्वाद्वा ङीष् ॥

काकाण्ड । पु । महानिम्बे ॥ काकतिन्दुके ॥

काकाण्डा । स्त्री । कोलशिम्ब्याम् ॥

काकाण्डी । स्त्री । महाज्योतिष्मत्याम् ॥

काकाण्डोला । स्त्री । कोलशिंब्याम् ॥

काकादनी । स्त्री । गुञ्जायाम् ॥ श्वेतगुञ्जायाम् ॥ वृक्षविशेषे । चिंचायाम् । गृञ्जनकायाम् ॥ गौरादित्वान्ङीष् ॥

काकायु: । पुं । स्वर्णवल्ल्याम् ॥

काकार' । त्रि । जलस्थाविशि ॥ कज लम् आकिरति । कृ० । आङ पूर्व. ।

कर्मण्यण् ॥

काकारि । पु । पेचके ॥

काकाल: । पु । द्रोणकाके ॥ काका इतिरवं लाति । ला० । क ॥

काकिणी । स्त्री । पणस्य तुर्यांशे । वराटकानां दशकद्वये ॥ काठा इतिगौड भाषाप्रसिद्धे मानदण्डस्यतुरीयेंशे ॥ इतिहेमचन्द्र ॥ कृष्णलायाम् । रक्तिकायाम् ॥ एकवराट्याम् । एककौडी इतिभाषा ॥ उन्मानांशे ॥ उद्मानचतुर्थभागे ॥ ककनम् । ककलौल्ये । घञ । काकमणति । अण्शब्दे । अण् । पृ० ॥

काकिनी । स्त्री । पणपादे । पञ्चगण्डके ॥ मानपादे ॥ वराटके ॥ उद्मानतुर्यांशे ॥ ककनम् । कक० । घञ । काकमनिति । अनप्राणने । अण् । पृ० ॥

काकी । स्त्री । वायस्याम् ॥ काकोल्याम् ॥

काकु । स्त्री । शोकभीत्यादिभि. कामक्रोधादिभिर्वाध्वनेर्विकारे ॥ जिह्वायाम् ॥ कक्यते । ककलौल्योपतापयो ॥ वाहुलकादुण् ॥

काकुत्स्थ । पु । सूर्यवंशजे पुरञ्जयाख्ये राजनि ॥ पुरा किल पुरञ्जयो नाम साक्षाद्भगवतोविष्णोरंशाऽवतीर्ण:

कश्चिदैक्ष्वाको राजा देवैः सह सम-
यबन्धेन देवासुरयुद्धे महोक्षरूपधा-
रिणो महेन्द्रस्य ककुदिस्थित्वापिना-
किलीलया निखिलमसुरकुलं निह-
त्य ककुत्स्थसञ्ज्ञाले भे इति पौराणि-
की कथात्रानुसन्धेया ॥ यथाहरघु-
वंशे कालिदासः ।महेन्द्रमास्थाय म-
होक्षरूपंयः संयतिप्राप्तपिनाकिली-
लः । चकार वाणैरसुराङ्गनानां गण्ड-
स्थली: प्रोषितपत्रलेखा इति ॥श्री
रामचन्द्रे ॥ ककुत्स्थस्य गोत्रापत्य-
म् ॥ शिवादिभ्योऽ

काकुदम् । न । तालुनि । जिह्वेन्द्रिया-
धिष्ठाने । तालुआ इतिभाषा ॥ का
कुर्जिह्वा सा उद्यते ऽस्मिन् । अने-
कार्थत्वाद्वदि वस् श्रेपणेवर्त्तते । घ
ञर्थे कः। पृषोदरादित्वादेकारस्योका-
रस्यलोप, । यकन्धुवत परखपंवा ।
नुदेवोऽधिकरणे कः।पृषोदरादित्वा
न्नुलोपः ॥ ईषत् कवते वा । कुङ् श
ब्दे । अव्यादित्वात् साधु ॥ यद्वा ।
निश्चेष्ट ककुदमिरः । ककुदे भेवम्
। अण् ॥

काकुत्तम् । न । विकृतशब्दे ॥ काकु
श्च तद्रुतञ्च ॥

काकेशुः । पुं । खग्गके । इक्षुगन्धाख्येतृ
णे । खागडा इतिगौडभाषा ॥

काञ्चे ॥

काकेन्दु. । पु । काकतिन्दुके । कटुति
न्दुके । कुचला इतिभाषा ॥ काका
नां काकवर्णोवा तिन्दुः । पृ० ॥

काकेष्ट. । पु । निम्बवृक्षे ॥

काकोचिक । पु । काउची इतिगौडभा
षाप्रसिद्धेमत्स्यविशेषे । काकोच्याम्॥

काकोची । स्त्री । काकोचिके मत्स्ये॥

काकोदर । पु । सर्पे । वचुश्चुव्रसि ॥
काकस्येव उदरमस्य ॥ यद्वा । ईष
त् अकति । अक ३ , ईषदर्थे चेतिकोः
कादेश । काकमीषत्कुटिलगतिम
त् उदरमस्य ॥

काकोडुम्बर. । पु । मलपूवाम् । अघ
नेफलायाम् । काकडुमुर इतिगौड
भाषा । फेगडा फेगुला इतिपर्वती
य भाषा ॥

काकोडुम्बरिका । स्त्री । काकोडुम्बरे
। कठुम्बरी काष्ठोडुम्बर इतिख्या
ते ॥ काकप्रिया उदुम्बरी । संज्ञा
यांकन् ॥

काकोल. । पु । कुलाले ॥ द्रोणकाके
॥ काकयति । कलकौल्ये । स्वार्थेणय
न्तः । वाहुलकादोलच् ॥ सर्पे ॥ शू
करविशेषे ॥ काकोलीव नामख्यातौ
षधिविशेषे ॥ न । नरकविशेषे ॥ पुं
। न । कृष्णवर्णस्थावरविषविशेषे ॥

काकोलमुग्रतेज स्यात् कृष्णच्छविम च्छाविषम् ॥ ईषत् कोलति । कुल संस्त्याने । अच् । ईषदर्थेचेतिकोः कादेश. ॥

काकोली । स्त्री । अष्टवर्गीयौषधिविशेषे । वायसोल्याम् । स्वादुमांस्याम् ॥ जायते चीरकाकोली महामेदोद्भवस्थले । यत्रस्यात् चीरकाकोली काकोलीतत्रजायते ॥ पीवरी सदृश कन्द सचीरः प्रियगन्धवान् । साप्रोक्ता चीरकाकोली काकोली लिङ्गमुच्यते ॥ यथास्यात् चीरकाकोली काकोल्यपितथाभवेत् । एषा किञ्चिद्भवेत् कृष्णा भेदोयमुभयोरपि ॥ काकोलीयुगलं शीतं शुक्रलमधुरं गुरु । हंहण वातदाहास्रपित्तशोषज्वरापहम् ॥ काकानकोलयति । कोलश्डिउलचेपणे । अन्येभ्योपीतिड. । गकध्यादि. ॥ अस्याः स्थाने अश्वगन्धामूलम् ॥

काकोलूकिका । स्त्री । काकोलूकयोर्वैरभावे ॥

काच' । पुं । कटाचे ॥ कुत्सितोऽचः कुत्सितोक्षोस्य वा । कापथ्यचयोरिति कादेशः ॥

काचसेनि. । पु । अभिप्रतारिनामनि नृपविशेषे ॥ काचसेनस्या पत्यम् । अतइञ् ॥

काची । स्त्री । तुवरिकायाम् । अरहड इति भाषा ॥ सौराष्ट्रमृत्तिकायाम् ॥ कच्छेभवा । तत्रभवइत्यण् । ङीप् ॥

काचीव. । पु । } शोभाञ्जनवृक्षे॥
काचीवक. । पुं । }

काग । पु । काके ॥ इति जटाधरः ॥

कागद । पु । न । कागजइत्यारव्यो भाषाप्रसिद्धे शुभ्रपत्रे ॥ यथोक्त मन्त्रकल्पद्रुमोक्त हनुमत्कवचे । भूर्जेवा वसने रक्ते चौमेवा तालपत्रके । कागदेवाष्टगन्धेन पञ्चगन्धेनवा पुन ॥ त्रिगन्धेनाथ वैकेन विलिख्य धारयेन्नर इति ॥

काङ्चा । स्त्री । इच्छायाम् ॥ काङ्चइच्छायाम् । गुरोश्चहलः । टाप् ॥

काङ्गा । स्त्री । वचायाम् ॥ इतिशब्दचन्द्रिका ॥

काच: । पुं । शिक्ये । छींका इतिभाषा ॥ मणौ ॥ नेत्ररोगविशेषे ॥ तल्लक्षणम् । अस्मिन्नपितमोभूतेनातिरूढेमहागदे । चन्द्रादित्यौ सनक्षत्रावन्तरीक्षेचविद्युतः ॥ निर्मलानिच तेजांसिभ्राजिष्णूनीव पश्यति । सएवलिङ्गनाशस्तुनीलिका काचसंज्ञित इति ॥ क्षारे । मृत्तिकाविशे

॥ धने ॥ नागकेशरपुष्पे ॥ काञ्चति । काचिदीप्तौ । नन्द्यादिल्युः ॥

काञ्चनक । पुं । शालेर्जातिविशेषे ॥ कोविदारवृक्षे ॥ न । हरिताले ॥

काञ्चनकदली । स्त्री । स्वर्णकदल्याम् । चाँपाकेला इति गौडभाषा ॥

काञ्चनकारिणी । स्त्री । शतमूल्याम् ॥

काञ्चनक्षीरी । स्त्री । क्षीरिणीलतायाम् ॥

काञ्चनगिरिः । पु । सुमेरुपर्वते ॥

काञ्चनपुष्पकम् । न । आहुल्यवृक्षे । हलराख्ये । सुपुष्पे ॥

काञ्चनपुष्पी । स्त्री । गणिकारीवृक्षे ॥

काञ्चनारः । पु । कोविदारे । युगपत्रके ॥ काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् । कृमिकुष्ठगुदभ्रंसगण्डमालाव्रणापहः ॥ कोविदारोपि तद्वत्स्यात् तस्य पुष्पं लघु स्मृतम् । रूक्षं सङ्ग्राहि पित्तास्रप्रदरक्षयकासजित् ॥

काञ्चनाल । पुं । कोविदारे ॥

काञ्चनाह्वयः । पु । चाम्पेये । नागकेशरे ॥ काञ्चनस्याह्वया आह्वयो यस्य ॥

काञ्चनी । स्त्री । हरिद्रायाम् ॥ गोरोचनायाम् ॥ स्वर्णक्षीरीवृक्षे ॥ काञ्च्यतेऽनया । काचिदीप्त्यादौ । करणेतिल्युट् । टिड्ढेतिङीप् ॥

काञ्चनीया । स्त्री । गोरोचनायाम् ॥

काञ्चि । स्त्री । काञ्च्याम् ॥ काञ्चते । काचिदीप्तिबन्धनयोः ॥ सर्वधातुभ्य इन् ॥

काञ्चिकम् । न । काञ्जिके । आरनाले ॥ इन्नन्तात् सञ्ज्ञायां कन् ॥

काञ्ची । स्त्री । सप्तपुर्यन्तर्गतपुरीविशेषे ॥ यथा । शिवकाञ्ची विष्णुकाञ्ची काञ्चीयुग्मञ्च सम्मतम् । एतास्तु पृथिवीमध्ये न गण्यन्ते कदाचन ॥ एताः सप्तपुर्यः ॥ काशी शिवत्रिशूलस्था काञ्ची हरिहरात्मिका । वामदक्षिणहस्ताभ्यां दधार द्विजपुङ्गवा इति भूतशुद्धितन्त्रम् ॥ चन्द्रहार गोट् इति गौडभाषाप्रसिद्धे स्त्रीकट्याभरणे । मेखलायाम् । तत् पर्यायाः । सप्तकी । रसना । सारसनमिति ॥ केचित्तु एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका । रसना षोडशज्ञेया कलापः पञ्चविंशकः ॥ इति भेदं पठन्ति । इयत्ताभेदात् पर्यायता ॥ गुञ्जायाम् ॥ कृदिकारादिति वा ङीष् ॥

काञ्चीपदम् । न । जघने ॥ इति हलायुधकोषः ॥

काञ्जिकम् । न । आरनाले । अवन्तिसोमे । धान्याम्ले । काँजी इति भा

था ॥ काञ्जिकं रोचनं रुच्यं पाचनं
वह्निदीपनम् । शूलाजीर्णविबन्धघ्नं
कोष्ठशुद्धिकरम् परम् ॥ नभवेलका
ञ्जिकं यत्र तत्र भाजि. प्रदीयते ॥ सं
हितं धान्यमण्डादिकाञ्जिकं कथ्यते
जनै ॥ काञ्जिकमोदि तीक्ष्णोष्णं रो
चनं पाचनलघु । दाहज्वरहरं स्प
र्शात् पानाद्वातकफापहम ॥ माषा
दिवटकैर्यत्तु क्रियते तद्गुणाधिकम् ।
लघुवातहरं तत्तु रोचनं पाचनम्परम
॥ शूलाजीर्णविबन्धामनाशनं वस्ति
शोधनम् ॥ धान्याम्लमच्छतरयाम
निवारिवारिगुणोरसोलवणजीर
कसंस्कृतंयत् । आवासितं सुरभिहि
ङ्गुकतैलयुक्तात् सेर्वागुणैरधिकयो
ऽधिकताम्प्रयाति ॥ यद्भामरोगपवि
भावितमाणिमन्थंसंसिद्धमामकरम
द्वकाञ्जिकयत । अम्लं विवर्द्धयति
जाठरवीतिहोत्रानिर्वाददीपमिवग
न्धकचूर्णयोग ॥ काञ्जिकं रुचिदं ह
द्यंस्वच्छमग्निकरंपरम् । वातघ्नंदा
हश्लेष्मगुर्वीशारदपाचकम् ॥ अपिच
। काञ्जिकं दधितैलमत्स्यवर्गैप्लितना
शनम् दाहकं गात्रशैथिल्यंवर्ध्यं स
न्तर्पणंपरम् ॥ मद्दमासच अभयात्
॥ अपिच । कुल्माषधान्यमण्डोत-
थमृतंकाञ्जिकम्भवेत् ॥ यन्मस्त्वा-



दिगुणैर्भाण्डेसगुडस्योद्रकाञ्जिकम्
। धान्यगागोनिरात्रस्थंशुक्तंचुक्रंतदु
च्यते ॥ अमृतमत्यादौ । सप्तायामि
तिभ। मेखला । धात्वर्थनिर्देशे वा ।
केअञ्जिका अस्य ॥

काञ्जिकवटक । पुं । काँजीवरा इति
लोके ॥ तस्यपाकप्रकारोयथा । म
न्थनीनूतनाधार्या कटुतैलेनलेपि-
ता । निर्मलेनाम्बुना पूर्ण तस्यां चू
र्णविनि. क्षिपेत् ॥ राजिकाजीरक
लवणहिङ्गुशुण्ठीनिशाकृतम् । नि:
क्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्चमुद्र
येत् ॥ ततोदिनत्रयादूर्ध्वमम्ला स्यु
र्वटकाशुभम् ॥ काञ्जिकवटकोरुचो
वातहर: स्याकारक:शीत' । दाहं
शूलमजीर्णं हरते नेत्रामयेष्वहित:
॥ इति ॥

काञ्जिका । स्त्री । जीवन्तीलतायाम् ॥
पलाशीलतायाम् ॥ सार्षपद्रष्टे:,
कूलेच्छमात्सरे ॥ सार्षपीकन्दली
शूद्रच्छायवयितास्निग्धभाजने । स्था
पितामक्षसहितात्वथवालकुलोद
के ॥ समरात्रात् परंशुक्तंतत सम्य
क् प्रजायते । तस्मादेवसमाकृष्य
तलयेत्ताम्रलेहयेत् ॥ काञ्जिकेतिस
मारव्यातासाशूद्रधर्मोपजीवकैः । सार्षं
पञ्च गुणायेहितेचास्याअपिकीर्तिं

ता ॥

काञ्ची । स्त्री । महाद्रोणावृक्षे ॥

काठ । पुं । पाषाणे । अश्मनि ॥

काठकम् । न । कठानान्धर्मे आम्नाये समूहे । चरणेभ्योधर्मवदिति गोत्र चरणाद्वुञ् ॥

काठिन्यम् । न । कठिनतायाम् ॥ यथा । वाच्यतां समयोतीत स्पष्टमग्रे भविष्यति । इतिपाठयतांग्रन्थे काठिन्यंकुत्रवर्त्तत इतिकश्चिविडम्बनम् ॥

काठिन्यफल । पुं । कपित्थवृक्षे ॥

काण' । पु । काके । वायसे ॥ त्रि । एकचक्षुषि । काणा इति भाषा ॥ योगविशेषे । यथा । रवैाज्येष्ठा सोमे ऽभिजित भैामे पूर्वाभाद्रपदा बुधे ऽश्विनी भरणीच गुरावार्द्रा शुक्रे मघा शनैाचित्राचेत् काणयोगोभवति ॥ कणनिमीलने । अस्मात घञ ॥

काणूक । पुं । करटे । वायसे ॥ कणति । कण° । उकणिभ्यामूकोकणादित्यूकण् ॥

काण्ड. । पुं । न । स्तम्बे । तृणादिगुच्छे ॥ नालके । गुहा इतिभाषा ॥ वाणे । अर्थ ॥ अवसरे । प्रस्तावे । प्रकरणे । कुत्सिते ॥ वृक्षविशेषे । प्रकोष्ठे ॥ नाडीस्कन्धे । नाले ॥ वर्गे । परिच्छेदे ॥ वृन्दे । समूहे ॥ रहसि । निर्जनस्थाने ॥ षोडशहस्तप्रमाणे दण्डे ॥ श्लाघायाम् ॥ पापीयसि ॥ कनति । कनीदीप्तौ । अमन्ताट्ड । कादिभ्यःकित । अनुनासिकस्येतिदीर्घ. ॥ कणति कण्यते वा । कणशब्दे । ड । बाहुलकाद्दीर्घ. ॥ न । सन्धिविच्छिन्नैकखण्डास्थिनि॥

काण्डकटुक' । पुं । कारवेल्ले ॥

काण्डकाण्डक । पुं । काशतृणे ॥

काण्डकीलक' । पु । लोध्रे ॥

काण्डगुण्ड । पु । दीर्घकाण्डे । काशतृणे ॥ गुण्डनामतृणे ॥

काण्डगोचर । पु । नाराचे । लैाहमयेवाणे ॥

काण्डतिक्त । पु । भूनिम्बे । चिरायता इतिभाषा ॥

काण्डनील' । पुं । लोध्रे ॥

काण्डपट । पुं । तिरस्करिण्याम् ॥ दृष्ट्याद्योलम्बिनि वायुसञ्चारार्थे पटविशेषे । चिक सिरकी इतिचभाषा ॥ कनात इतिच ॥

काण्डपुङ्खा । स्त्री । शरपुङ्खायाम् ॥

काण्डपुष्पम् । न । दैाना इति भाषा प्रसिद्धे क्षुद्रसुगन्धिपुष्पविशेषे ॥

काण्डपृष्ठ. । पुं । वैश्यापतौ ॥ सुतान्तरे ॥ स्वकुलं पृष्ठत कृत्वा यो वैश

रत्नुसंत्रजेत् । तेनदुश्चरितेनासौ । काण्डपृष्ठ इतिस्मृत ॥ न । कर्णधनुषि ॥ काण्डानि शस्त्राणि पृष्ठे यस्य । ॥ त्रि । शस्त्राजीवे ॥

काण्डरुहा । स्त्री । कटुक्याम् ॥

काण्डर्षि । पु । वेदकाण्डविशेषाध्यापके जैमिन्यादौमुनिविशेषे ॥ इति त्रिकाण्डशेष. ॥

काण्डवान् । त्रि । काण्डीरे । वाणधारके । तीरन्दाज इतीतरभाषा ॥ काण्डोवाणो ऽस्यास्ति । मतुप ॥

काण्डवारिणी । स्त्री । दुर्गायाम् ॥ यथा । महागजघटाटोपसंयुगे नरवाजिनाम् । वारणाद् वारते वाणान् तेनसा काण्डवारिणीति देवीपुराणे देवीनिरुक्ति नामा ४५ ऽध्यायः ॥

काण्डसन्धि. । पुं । ग्रन्थौ ॥

काण्डस्पृष्ठ । पुं । काण्डपृष्ठे । शस्त्राजीवे ॥ स्पृष्टं गृहीतं काण्डं शस्त्रंयेन । वाहिताग्न्यादिष्विति परनिपातः ॥

काण्डहीनम् । न । भद्रमुस्तके ॥

काण्डेका । स्त्री । वच्चायाम् । कराल त्रिपुटायाम् ॥ काकुलीनामकलं क्याम् ॥

काण्डीरः । त्रि । काण्डवति ॥ काण्डो वाणोऽस्यास्ति । काण्डाण्डादीरन्नी रचौ ॥ पुं । अपामार्गे ॥ काण्डवेल इति गौडभाषा प्रसिद्धे लताप्रभेदे । कारवल्ल्याम् ॥

काण्डीरा । स्त्री । } मञ्जिष्ठायाम् ॥
काण्डीरी । स्त्री । }

काण्डेक्षु । पुं । कोकिलाक्ष । तालमखाना इतिभाषा ॥ काशतृणे ॥ काण्डेक्षुरिव ॥

काण्डोल । पुं । पिटे । कण्डोले ॥ स्वार्थिकः प्रत्ययः ॥

काण्व । पु । यजुर्वेदीयशाखाविशेषे ॥ कण्वस्य गोत्रापत्यम् । काण्व्य. । गर्गाद्यञ् ॥ काण्व्यस्य छात्रः । कण्वादिभ्योगोत्रइत्यण् । कण्वोदेवताऽस्यवा ॥

कातरः । त्रि । अधीरे । व्यसनाकुले । रोगादिनाऽऽकुलमनसि ॥ भीते ॥ विवशे ॥ ईषत्तरति । पचाद्यच् । ईषदर्थेचेति कोः कादेशः ॥ पुं । कातलामाछ इतिगौडभाषाप्रसिद्धे मत्स्ये ॥

कातराक्षी । स्त्री । चकितनेत्रायाम् । भयलोचनायाम् ॥

कातर्य्यम् । न । अधीरतायाम् । केवलायांनीतौ ॥ यथा । कातर्य्यं केवलानीति शौर्यं श्वापदचेष्टितम् । अत. सिद्धिंसमेताभ्यामुभाभ्यामन्वियेष

ष सः ॥ भावेष्यञ् ॥

कातल' । पु । मत्स्यविशेषे । कातला इति भाषा ॥ कातलोमधुरस्त्रोष्णो गुरुपाकीत्रिदोषकृत् ॥

कात्तृणम् । न । रोहिषतृणे ॥

कात्य । पु । कात्यायनमुनौ ॥ कतस्यापत्यम् । गर्गादित्वात् यञ् ॥

कात्यायन । पु । धर्मशास्त्रकर्तृमुनिविशेषे ॥ व्याकरणवार्त्तिककारे । वररुचौ ॥ कात्यस्यापत्यम् । फक् ॥

कात्यायनी । स्त्री । उमायाम् । दुर्गायाम् ॥ काषायवस्त्राद्धवृद्धविधवायाम् ॥ कात्यायन्यर्द्धवृद्धायाकाषायवसनाऽधवेत्युक्तं ॥ कतस्यअपत्यम् । ग° यञ् । सर्वत्रलोहितादिकतन्तेभ्य इतिष्फ । षित्वान्ङीष् ॥

काथञ्चित्क । त्रि । कथञ्चिदर्थे ॥ विनयादित्वातस्वार्थेठक् ॥

काथिक । पु । कथायांसाधौ ॥ कथादिभ्यष्ठक् ॥

कादम्बः । पु । वालिहाँस इतिगौड प्रसिद्धे कलहंसपक्षिणि । नीलहंसोयमितिरघुव्याख्यानेमल्लिनाथ ॥ वाणे । इषौ ॥ कदति । कदिःसौत्रः । कदेर्णित् पक्षिणीत्यम्बच् ॥ कदम्बेसमूद्भवः । अण् ॥

कादम्बकः । पु । वाणे । सायके ॥

कादम्बर' । पु । दध्यग्रे । दधिसरे ॥ न । कदम्बपुष्पोद्भवेमद्ये ॥ कादम्बं कदम्बजातरसंराति । रा° आत इतिक. ॥ मल्लिनाथस्तु इथङ्गिरभितस्तटावितिमाघ श्लोकव्याख्यावसरे कादम्बइक्षुः । कादम्ब. कलहंसे क्ष्वौरितिविश्व. । कादम्बं राति रलयोरभेदाल्लाति प्रकृतित्वेनादत्ते इतिकादम्बरमैक्षवम् । पानसद्राक्षमाधूकं खार्जूरन्तालमैक्षवम् इति स्मरणात् । आत इतिक. इत्याह ॥

कादम्बरी । स्त्री । कोकिलायाम् ॥ भारत्याम् । सरस्वत्याम् ॥ शारिकापक्षिणि ॥ मदिरायाम् । हस्तिभियायाम् ॥ कुत्सितमम्बरम् । कुगतीतिसमास' । को'कतत्पुरुषेचि । कदम्बरंनीलाम्बरमस्यास्ति । अर° अच् । तस्येयम् । तस्येदमित्यण् । ङीप् ॥ यद्वा । कदम्बेजातोरस'कादम्ब. । तत्रजातइत्यण । कादम्बंराति । रादाने । आतोनुपेतिकः । गौरादित्वान् ङीष् ॥

कादम्बर्य्य' । पु । कदम्बद्रुमे ॥

कादम्बा । स्त्री । मुण्डीतिख्यातायाङ्कदम्बपुष्पाम् ॥

कादम्बिनी । स्त्री । मेघमालायाम् ॥ कादम्बा' कलहंसाः मलाकावन्मेघ

॥ गृहविशेषे ॥ काम्यतेस्म । कमु कान्तौ । क्त. । यस्यविभाषेतिनेट् । अनुनासिकस्येतिदीर्घः ॥ कनति स्म वा । कनीदीप्तिकान्तिगतिषु । गत्यर्थेति क्त ॥

कान्तपक्षी । पुं । मयूरे ॥

कान्तपुष्प । पु । कोविदारवृक्षे ॥

कान्तलक. । पु । नन्दीवृक्षे । त्रौंद इति गौडभाषा प्रसिद्धे । तुन्ने ॥ काम्यते । कमु०। मतिबुद्धि पूजार्थे भ्यश्चेतिक्त: । लकति । लकआस्वादने । अच् । कान्तश्चासौलकश्च ॥

कान्तलोह. । पु । न । अयस्कान्ते । कान्तीसार इति प्रसिद्धे लौहे ॥ अस्य परीक्षा । यत्पात्रे नप्रसरतिजले तैलबिन्दु प्रतप्ते हिङ्गुर्गन्धंत्यजतिच निजंतिक्तता निम्बकल्क । तप्तदुग्ध भवति शिखराकारकं नैतिभूमि ...ाक्स्यात सजलचयाक कान्तलोहंतदुक्तमिति ॥ अस्यगुणा. । गुल्मोदरार्श शूलाममामवात भगन्दरम् । कामलाशोथकुष्ठानि क्षय कान्तम योहरेत् ॥ प्लीहानमम्लपित्तञ्चयकृच्चापिशिरोरुजम् । सर्वान् रोगान् विजयते कान्तलोहंनसंशय' ॥ बलवीर्य्यवपुःपुष्टिंकुरुते ऽग्निविवर्द्धये दिति ॥

कान्ता । स्त्री । नार्य्याम् ॥ स्त्रीविशेषे । सर्वाङ्गसुन्दर्याम् ॥ भोगेचीर्येधर्मं पूर्वमन कुटिलभाषया. । कान्ता इरति सर्वस्वंक: स्तेनस्ताहृशोऽपर ॥ प्रियङ्गुवृक्षे । फलिन्याम् ॥ नागरमुस्तायाम् ॥ रेणुकायाम् ॥ वृहदेलायाम् ॥ काम्यतेस्म । कमु० । स्त्रि ङ् । भावेक्त । टाप् ॥

कान्ताङ्घ्रिदोहद. । पु । कान्ताचरणदोहदे । अशोकवृक्षे ॥

कान्तायसम् । न । अयस्कान्ते ॥

कान्तार । पुं । कोविदारवृक्षे ॥ इक्षुविशेषे । कतारा इतिभाषा ॥ कान्तारेष्वगुरुकष्टप्य क्षेमलोत्वंस्ख:सर ॥ न । उपसर्गादौ ॥ कानने ॥ अजविशेषे ॥ पु । न । महारण्ये ॥ दुर्गमवर्त्मनि ॥ विले ॥ कान्ताअरायस्य ॥ यद्वा । कस्य जलस्य सुखस्य वा । अन्त' । कान्तं मनोज्ञम् ऋच्छति इयर्त्ति वा । कर्मण्यण ॥

कान्तारक । पु । काजलि आक इति गौड भाषा प्रसिद्धे इक्षु विशेषे ॥ कान्तरसमृच्छति । ऋगतौ । कर्मण्यण ॥ स्वार्थे कन् वुल्वा ॥

कान्तारी । स्त्री । कान्तारके ॥

कान्ति. स्त्री । शोभायाम् । दीप्तौ ॥ अभिलाषे । इच्छायाम् ॥ स्त्रीयांशृङ्गार

सौगुण्यविशेषे । सौन्दर्ये ॥ काम्यते
अनया वा । कमनं वा । कमु० । क्तिन्
। अनुनासिकेति दीर्घ इति केनचि
दुक्तं तन्न । काम्यतीति तेनविग्रहो
न्मौत् । तथाङ्गस्याङ्गिङ्निमित्त
ईट् सम्भवात् । आयादय इति णिङ
भावेवाबोध्यम् ॥

कान्तिदम् । न । पित्ते ॥ त्रि । कान्त्यु
त्पादके । शोभादायके ॥

कान्तिदा । स्त्री । वाकुच्याम् । सोमरा
ज्याम् ॥

कान्तिदायकम् । न । कालीयकद्रव्ये ॥
त्रि । कान्तिप्रदे ॥

कान्यिक । त्रि । कन्यायाम्भवे ॥ शैषि
कः कन्यायाष्ठक् ॥

कान्दर्पिकम् । न । वाजीकरणे ॥ यथा
। रक्तेऽधिके स्त्री पुरुषस्तु शुक्रे न
पुंसकं शोणितशुक्रसाम्ये । यस्मादतः
शुक्रविवृद्धिदानि निषेवितव्यानिर-
सायनानि ॥ कर्म्यवृष मृदुगात्र
श्चयः सोत्पलं मधुमदावसाप्रिया ।
वल्लकीस्वरकथारतः सखीवर्गएष
मदनस्य वागुरा ॥ माक्षीकधातु-
मधुपारदलोहचूर्णपथ्याशिलाजतु-
विडङ्गघृतानियोऽश्नात् । सैकानि
विंशतिरब्दानि जरान्वितोपि सामो
तिकोऽपि रमयत्यबलां युवेव ॥ क्षीर



श्रितं च कपिकच्छुमूलैः पिबेत् स्वयं
स्त्रीषु नसोऽभ्युपैति । माषान् पय
सर्पिषि वा विपक्वान् षड्ग्रासमात्रांश्च
पयोऽनुपानात् ॥ विदारिकाया स्व
रसेन चूर्णं मुहुर्मुहुर्भावितशोषित
ञ्च । घृतेन दुग्धेन सशर्करेण पिबेत्
स यस्य प्रमदाः प्रभूताः ॥ धात्रीफला
नां स्वरसेन चूर्णं सुभावितं क्षौद्र
सिताज्ययुक्तम् । लीढ्वानुपीत्वा च
पयोऽग्निशक्त्या कामाग्निकामः पु-
रुषो निषेवेत् ॥ क्षीरेण बस्ताण्डयु
जाश्रितेन सम्प्राप्तकामी न तु म-
स्तिलान् यः । सुशोषितानप्तिपिबेत्
पयश्चतस्याग्रतः किं चटकः करोति
॥ माषकूपसञ्चितेन सर्पिषा षष्टिको
दनमदन्ति ये नराः । क्षीरमप्यनुपि
बन्ति ताश्च ते शर्वरीषु मदनेन शेरते
॥ सिताश्वगन्धाकपिकच्छुमूलैर्विदा
रिकाषष्टिकपिष्टयोगाः । आजेन पि
ष्टाः पयसा घृतेन पक्वा भवेच्छष्कुलि
कातिदृष्या ॥ क्षीरेण वा गोक्षुरको
पयोगं विदारिकाकन्दकभक्षणं वा
। कुर्वन्नसीदेदधिनीयतेश्च मदा-
ग्निमान्द्येदिदमचूर्णम् ॥ साजमो
दश्चवचाहरीतकीशृङ्गवेरसञ्चिता
च पिप्पली । मस्तुतक्रसुरोष्णवा
रिभिश्चूर्णपानमुदराग्निदीपनम् ॥

कन्यन्नतिक्तलवणानि कटूनि वान्ति य चारशाकबहुलानिचभोज्यना- नि। इक्कशुक्रवीर्येरहित: स करोत्य मेकथ्याजान जरन्निव युवाप्यबलाम वाप्येति ॥

कान्दवम्। न। मिठाई पकवान इ ति प्रसिद्धेभक्ष्ये ॥ कान्दौ संस्कृत म्। संस्कृतम्भक्ष्याइत्यण् ॥

कान्दविक.। त्रि। आपूपिके। पूपविक्र यकर्त्तरि। भक्ष्यकारे ॥ कान्दवंपण्यम स्य। तदस्यपण्यमितिठक्।

कान्दिग्भूत.। त्रि। कान्दिशीके ॥

कान्दिशीक:। त्रि। भयद्रुते। भीत्या पलायिते। कान्दिशंयामीत्याह। तदाहेतिमाशब्दादिभ्यउपसङ्ख्या नमितिठक्। पृ० ॥

कान्यकुब्जम्। न। पुरविशेषे। गाधि पुरे। कुशस्थले। महोदये। कनौ ज इति भाषा ॥

कान्यजा। स्त्री। नलीनामगन्धद्रव्ये ॥

कापटिक:। त्रि। शठे ॥ पुं। छात्रे ॥ परमर्मज्ञे। प्रब्रवर्गेषु प्रथमे ॥ त व परमर्मज्ञ प्रगल्भच्छात्र कापटव्य वहारित्वात् कापटिक। तंदर्थार्थि न मर्थमानाभ्या मुपगृह्यरहसि रा जाब्रूयात् वयमुद्देशंपश्यसि तत् त दानीमेव मयि वक्तव्यमिति ॥ कापटे

मचरति। ठक् ॥

कापथ्यम्। न। कपटभावे ॥

कापथम्। न। उशीरे ॥ पुं। कथ्ये। निन्द्यवर्त्मनि ॥ कुत्सित: पथ:। कुगतीतिसमास.। ईषदर्थेचेति को' कादेश:। कुमार्गोपीषन्मार्गो भवति। इत्यमदन्तपथशब्देन समा सेन पुंस्त्वंनिर्वाह्य पथिन् शब्देन स मासे कापथ्यचयोरितिकादेशे पथ: सङ्ख्याव्ययादेरितिक्लीबत्वंभवति॥

कापाल:। पुं। कालियाकडा इतिगौ- डभाषा प्रसिद्धकर्कोटायाम् ॥ न। अष्टादशकुष्ठान्तर्गतवातिककुष्ठे। ब्र ह्मकपालम् ॥

कापालिक:। पुं। कपालि इतिगौड भाषाप्रसिद्धवर्णसङ्करजातौ। अन्त्य जविशेषोयम् ॥ सिद्धान्ताचारिविशे षे ॥ यथा। अथतीर्थकराग्रणी.प्रत- स्थे कापालिकजालकविजेतुमितिश ङ्करविजय: ॥ अस्यस्वरूपं यथा। न राश्थिमालाकृतभूरिभूषण. श्म- शानवासी न्वकपालभोजन.। प श्यामि योगांजनशुद्धदर्शनो जग न्मिथोभिन्नमभिन्नमीश्वरादिति ॥ अस्यधर्मोयथा। मस्तिष्कान्त्रवसाभि घारितमहामासाहुती र्जुह्वताव ह्नौ ब्रह्मकपाल कल्पितसुरापाने

न नः पारगा । सखः कूलकठोरक
गठ विगलत्कीलालधारोल्वणे रक्षो
न पुरुषो यज्ञारवज्ञिभि र्दैवो मया
भैरव' इति प्रबोधचन्द्रोदय. ॥ कपा
लिकेव । शर्करादिभ्योऽण् ॥

कापाली । स्त्री । विडङ्गायाम् ॥

कापित्थम् । न । काथित्थे ॥ कपित्थस्या
वयवोविकारोवा । अनुदात्तादेश्चे
त्यञ् ॥

कापिल: । पुं । साङ्ख्यशास्त्रे ॥ पि
ङ्गलवर्णे ॥ त्रि । पिङ्गलवर्णवति ॥
। न । उपपुराणविशेषे ॥

कापिशम् । न । मद्ये ॥

कापिशायनम् । न । मद्ये । मधुनि ॥
देवतायाम् ॥ कापिश्यांजातादि ।
कापिश्या.ष्फक ॥

कापिशायनी । स्त्री । द्राक्षायाम् ॥ षि
त्त्वान् ङीष ॥

कापिशेय. । पु । पिशाचे ॥

कापुरुषः । पु । कुपुरुषे ॥ कुत्सितः पु
रुषः । विभाषापुरुषइतिकादेश' ॥
ईषत् पुरुषोवा ॥

कापेयः । पुं । शौनकर्षौ । कपिगोत्रा
पत्ये ॥ इतस्वानिञ इतिढक् ॥ त्रि ।
कपिसम्बन्धिनि ॥ न । कपित्वे ॥ क
पे. कर्मभावोवा । कपिज्ञात्योर्ढक् ॥

कापोतम् । न । कपोतसमूहे ॥ कपो
तानांसमूह' । अनुदात्तादेरञ् ॥
सौवीराञ्जने ॥ कपोतस्येदम् । क
पोतवर्णत्वात् । तस्येदमित्यण् ॥ पु
। सर्जके ॥ कपोताभवर्णे ॥ सर्जिका
क्षारे ॥ कपोतवर्णोऽस्यास्ति । अर्श
आद्यच् ॥ त्रि । कपोताभवर्णवति ॥ क
पोतस्यावयवोविकारोवा । प्राणिर
जतादिभ्योञ् ॥

कापोताञ्जनम् । न । सौवीराञ्जने ।
स्रोतोञ्जने ॥ कापोतञ्च तदञ्जन
ञ्च ॥

काप्यकर' । पुं । काप्यकारे ॥

काप्यकारः । पुं । स्वयंकृतं पापं चित्ते
आधाय यः कथयति तस्मिन । स्वपा
पवक्तरि ॥

काफल । पु । कट्फले ॥

काम । अ । अभ्यनुज्ञायाम् ॥

कामम् । न । रेतसि ॥ इच्छानतिक्रमे
। निकामे ॥ काम्ये ॥ बाढे ॥ अनुम
तौ ॥ पुं । इच्छायाम् ॥ अनुरागे ॥
फलतृष्णायाम् ॥ तत्तद्दृष्टविष
याभिलाषे ॥ पुंस्रोयाविषयापेक्षास
कामइतिभण्यते । पुमामादौकाम
मय एवभूत्वाथकर्मकृत । यतोयंकर्म
णोहेतु' कामोलोकप्रमाणता ॥ अथा
नकामस्यक्रियाकाचिद्दृश्यते नेहकर्हि
चित । यद्यद्धिकुरुतेकिञ्चित्तत्का

मस्यचेष्टितम् ॥ वाह्यादिभेदात् कामस्त्रिविध । वाह्योगस्पर्शचेत्यादि १ अन्तरोमनोराज्यरूप. २ वासनामात्ररूपस्तृतीय ३ ॥ इन्द्रियाधिष्ठाने ॥ अर्थे काम्यमानत्वाच्छब्दादिविषयेषु ॥ विषयभोगे ॥ स्त्रीपुसयो परस्परव्यतिकराभिलाषेच्छ-त्युगतनिरूढ. कामशब्द ॥ स्त्रीसङ्गे ॥ अस्मात् सङ्कल्पादिर्दर्मेत्यादिश्च्ये वंरूपे ॥ अप्राप्तोपिविषयः प्राप्तिकारणाभावेपिप्राप्यतामित्याकारेचित्तवृत्तिविशेषे ॥ रतिमात्रहेतु काम ॥ शास्त्रानुमतजायापुत्रवित्तादिविषयो ऽभिलाष ॥ मोहनस्तम्भनाकर्षणवशीकरणमारणोच्चाटनादि ॥ दिव्यमानुषभेदात् द्विविध काम ॥ कर्मफले ॥ कामविलब्धे ॥ रिरंसायाम् ॥ रतौ ॥ त्रयोदशाङ्के ॥ कामस्तु लक्ष्मणोहृदयाज्जात । यथा । हृदि कामोभ्रुवो.क्रोधोलोभश्चाधरदच्छदादिति श्रीभागवतम् ॥ महाराजचूते ॥ कामदेवे । स्मरे ॥ अस्यस्थानानि यथा । पादाङ्गुष्ठे प्रतिपदि द्वितीयायाञ्चगुल्फके । ऊरुदेशे तृतीयाया चतुर्थ्यां भगदेशत ॥ नाभिस्थानेचपञ्चम्यां षष्ठ्यान्तुकुचमण्डले । सप्तम्यांहृदयेचैव चाष्टम्यां कण्ठदेशत. ॥ नवम्यांकण्ठदेशेचदशम्यांचोष्ठदेशत: । एकादश्यागण्डदेशे द्वादश्यांनयनेतथा ॥ श्रवणेचत्रयोदश्यां चतुर्दश्यालालाटके । पौर्णमास्यांशिखायाञ्च ज्ञातव्यश्च इतिक्रमात ॥ दक्षेपुसांस्त्रियावामेशुक्ले कृष्णेविपर्यय. ॥ यत्रस्थाने वसेत कामस्तत्रैव नखचुम्बनम् । मन्त्रेणानेनकर्त्तव्यंज्ञातव्य रतिकोविदै ॥ काम्यते ऽनेन । कमु० । पुंसिसंज्ञायामितिघ. । यद्वा । कामयते । पचाद्यच् ॥ कमनम् । कमेर्घञ्वा ॥

कामकला । स्त्री । रतौ । कामदेवपत्न्याम् ॥ मुखंविन्दुवत्कृत्वेति ध्यानोक्तशक्तिप्रभेदे ॥ चन्द्रस्यया षोडशकलास्ता एव कामस्य कला ॥

कामकामी त्रि । अन्ने । काम्यान् विषयान् कामयितु शीले ॥

कामकार । पु । कामत प्रवृत्तौ । स्वेच्छायाम् ॥ कामकरोति । कृञ० । कर्मण्यण् ॥

कामकारत. । अ । स्वेच्छामात्रेणेत्यर्थे ॥

कामकूट । पु । वेश्याप्रिये ॥ वेश्याया विभ्रमे ॥

कामकृत् । त्रि । कामकारके ॥ कामान्करोति । डुकृञ० । क्विप् ॥

कामकेलिः । पुं । सुरते ॥ त्रि । षिङ्गे ॥

कामक्रोधपरायणः । त्रि । कामक्रोधा भ्यां सदायणिर्गृह्णीते ॥ कामक्रोधौ परमयन माश्रयोयस्य ॥

कामखञ्जरिका । स्त्री । स्वर्णकेतक्याम् ॥

कामगामी । त्रि । कामगामिनि ॥

कामगिरिः । पु । भारतवर्षस्यपर्वतवि शेषे ॥ सतुकामरूपदेशे वर्त्तते ॥

कामगुणः । पु । रागे ॥ विषये ॥ आ भोगे ॥

कामगामी । त्रि । कामचरे । अनुका मीने ॥ कामंयथेच्छं गमनशीलः । कामत्रिस्थ्यव्ययम् । सुपीतिणिनि ॥

कामचार, । पुं । कामाचारे ॥ स्वत न्त्रतायाम् ॥

कामचारी । त्रि । कामुके ॥ स्वच्छन्दे । स्वेच्छाचारिणि ॥ कलविङ्के ॥ पु । गरुडे ॥

कामचारिपुरम् । न । देवपुरविशेषे ॥

कामजानः । पुं । कोकिले । पिके ॥

कामतालः । पुं । कोकिले । वनप्रिये ॥

कामतिथिः । स्त्री । त्रयोदश्याम् ॥

कामदः । त्रि । कामिके । अभीष्टदे ॥ न । दक्षिणस्यां दिशिविख्याते वन विशेषे ॥ कामान्ददाति । कुदाम्० । काल इतिकः ॥

कामदा । स्त्री । कामधेनौ । टाप् ॥

कामदुघा । स्त्री । कामधेनौ ॥ कामा न् दुग्धे दोग्धिवा । दुह कप्घश्चे तिदुहेः कप् प्रत्ययोघश्चान्तादेशः ॥

कामधरः । पु । कामरूपस्यमत्स्यध्वज पर्वतस्थे सरोवरे ॥

कामधुक् । स्त्री । समुद्रमथनोद्भवाया वसिष्ठमुने कामधेनौ ॥ धेनूनाम स्मि भगवतो विभूति । कामान् दोग्धि । दुह० क्विप ॥ त्रि । का म्यप्रदे ॥ यथा । एकः शब्दः सुज्ञातः सुप्रयुक्तः स्वर्गेलोकेकामधुग भवती तिश्रुतिः ॥

कामदूतिः । पुं । कामदूतिकायाम् ॥

कामदूतिका । स्त्री । नागदन्त्याम् ॥ पाटलायाम् ॥

कामदूती । स्त्री । पाटलावृक्षे ॥ काम दूतिकार्थे ॥

कामधेनुः । स्त्री । कामदुघि । स्वर्ग वि ॥ वशिष्ठधेनौ ॥

कामध्वंसी । पुं । शिवे ॥ कामं ध्वंसय ति । ध्वंसु० सुपीतिणिनि ॥

कामनः । त्रि । कामुके ॥ अनुदात्तादे श्चेतियुच्त्वात्कामेर्युच् ॥

कामना । स्त्री । इच्छायाम् ॥ टाप् ॥

कामन्धमी । पुं । कांस्यकारे ॥

कामपत्नी । स्त्री । रतौ ॥ कामस्य पत्नी ॥

कामपरीत । त्रि । कामातुरतया विपरीतबुद्धौ ॥

कामपाल । पु । बलदेवे ॥ कामान् पालयति । पालरक्षणे । कर्मण्यण् ॥

कामप्रदः । पु । भगवति । वासुदेवे ॥ कामानां पुरुषार्थानांप्रदः ॥ रतिबन्धविशेषे । यथा । द्वौ पादौ स्कन्धसंस्थौ चिह्नालिङ्गभगे तथा । कामयेत् कामुक प्रीत्या बन्धः कामप्रदो ह्यसं इति ॥

कामप्रवेदनम् । न । स्वाभिप्रायाविष्करणे ॥

कामफल । पुं । महाराजाम्रवृक्षे ॥

कामभाक् । त्रि । कामार्हे ॥

कामम् । अ । अनुमतौ ॥ प्रकामे ॥ पर्य्याप्ते ॥ असूयायाम् ॥ अनुगमने ॥ अकामानुमतौ । स्वच्छन्दार्थे । आदावनिच्छायां पश्चादङ्गीकारे ॥ काम्यते । कर्मणिडन्तादम् ॥

कामम्महः । पु । चैत्र्याम्पूर्णिमायाम् ॥

कामयमान । त्रि । उशति । वाञ्छति ॥

कामयान । त्रि । अर्थिनि ॥ कामुके ॥

कामयाना । स्त्री । गर्भिण्याम् ॥

कामयिता । त्रि । कामुके ॥ कामयते । कमु० । णिजन्तात् तृन् ॥

कामरूप । पु । काँवरू इतिप्रसिद्धे देशे । प्रागज्योतिषे ॥ कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्वतम् । कामरूपाभिधो देशो गणेशगिरिमूर्द्धनि ॥ तत्र कामगिरौ योनिपीठे कामाख्या देव्यस्ति । यथा । योनिपीठं कामगिरौ कामाख्या तत्र देवते त्युपक्रम्य सर्वत्र विरला चाच कामरूपे गृहे गृहे इतितन्त्रचूडामणौ पीठमाला ॥ त्रि । मनोज्ञरूपे ॥ स्वेच्छारूपे ॥

कामरूपिणी । स्त्री । अश्वगन्धावृक्षे ॥

कामरूपी । पुं । विद्याधरे ॥ जाहकजन्तौ ॥ त्रि । मनोज्ञरूपिणि ॥ स्वेच्छारूपिणि ॥ सर्वं भाशु विचेतव्य हरिभि कामरूपिभिरितिरामायणम् ॥ कामतोरूपाण्यस्य । इनि ॥

कामरेखा । स्त्री । वेश्यायाम् ॥

कामल । पु । वसन्तकाले ॥ मरुभूमौ ॥ त्रि । कामुके ॥ पु । स्त्री । रोगविशेषे ॥ तस्यनिदानसम्प्राप्तिलक्षणानियथा । पाण्डुरोगीच योऽत्यर्थं पित्तलानि निषेवते । तस्य पित्तमसृङ्मांसंदग्ध्वारोगाय कल्पते ॥ । हारिद्रनेत्र स भृशंहारिद्रत्वङ्नखाननः । रक्तपीतशकृन्मूत्रोभेकवर्णोहतेन्द्रियः ॥ दाहाविपाकदौर्बल्यसदनारुचिकर्षितः । कामला बहुपित्तैषाकोष्ठशाखाश्रयामता ॥

अक्षेोपधर्मयथा । कथचित्कामलतावा सातिक्ताभूनिम्बनिम्बजं । काथ. चौद्रयुतोहन्यात् पाण्डुरोगसकाम लमिति । कालान्तरात् खरीभूता कृच्छ्रास्यात् कुम्भकामला ॥ तस्या रिष्टलक्षणम् । कृष्णपीतशकृन्मूत्रो भृशंशूनश्चमानव. । सरक्ताक्षिमुखच्छर्दि विण्मूत्रो यश्चताम्यति ॥ दाहारुचितृषानाहतन्द्रामोहसमन्वित । नष्टाग्निसंज्ञ. क्षिप्रंहि कामलावान् विपद्यते इति ॥ मरीचतिलपुष्पाभ्यामञ्जन कामलापहमिति गारुडे १८७ अध्याय. ॥

कामलता । स्त्री । शिश्ने ॥ इतिहेमचन्द्र ॥

कामला । स्त्री । कामले रोगे ॥

कामलायनः । पुं । उपकोसलाख्यमुनौ ॥ कमलस्यापत्यम् । नडादित्वात फक् ॥

कामलिका । स्त्री । कङ्गुधान्ये ॥

कामवती । स्त्री । दारुहरिद्रायाम् ॥

कामवल्लभः । पुं । आम्रे ॥

कामवल्लभा । स्त्री । ज्योत्स्नायाम् ॥

कामवृक्षः । पुं । वन्दाके ॥

कामवृद्धि । पुं । कामज इतिकर्णाट देशप्रसिद्धे क्षुपविशेषे । मदनायुधे । कन्दर्पजीवे ॥

कामवृन्ता । स्त्री । पाटलायाम् ॥

कामशर. । पुं । आम्रे ॥

कामसख. । पुं । वसन्तकाले ॥

कामसुत । पु । अनिरुद्धे ॥

कामसूत्रम् । न । वात्स्यायनादिकामतन्त्रप्रतिपादकशास्त्रे ॥

कामहैतुकम् । न । कामातिरिक्तकारणशून्ये ॥

कामाख्या । स्त्री । कामरूपदेशे देवीस्थाने ॥ सतीदेहेनावतीर्णाया कामदेव्या यत्रयोनिमण्डलं पतितम् कालिकापुराणेच यस्मिन्नवर्णितं तत् त्रिपुरभैरव्याः स्थानम् । यथोक्तं देवीगीतायाम् । श्रीमत्त्रिपुरभैरव्या कामाख्यायोनिमण्डलम् । भूमण्डले क्षेत्ररत्नं महामायाधिवासितम् ॥ नातः परतरं स्थानं क्वचिदस्ति धरातले । प्रतिमासं भवेद्देवी यत्र साक्षाद्रजस्वला ॥ तत्रस्था देवताः सर्वा पर्वतात्मकतां गताः । पर्वतेषु वसन्त्येव महत्यो देवता अपि ॥ तत्रत्या पृथिवी सर्वा देवीरूपा स्मृता बुधैः । नातः परतरं स्थानं कामाख्यायोनिमण्डलादिति ॥ कामकाख्यां

यथा। श्रीभगवानुवाच। कामार्थमागता यस्मात् मया सार्द्धं महागिरौ। कामाख्या प्रोच्यते देवी नीलकूटे रहोगता ॥ कामदा कामिनी कामा कान्ता कामाङ्गदायिनी॥ कामाङ्गनाशिनी यस्मात् कामाख्या तेन चोच्यत इति कालिकापुराणम् ॥

कामाङ्कुश । पु । नखे ॥ शिश्ने ॥ व्या अमलदययुक्ते वा कानाम्भूषणे ॥

कामाङ्ग । पु । आम्रवृक्षे ॥

कामातुर । त्रि । कामार्ते ॥

कामात्मज. । पु । अनिरुद्धे ॥

कामात्मता । स्त्री । फलाभिलाषशीलत्वे ॥ कामात्मनो भाव । तल् ॥

कामात्मा । पु । कामस्वभावे । कामाकुलचित्ते ॥ काम्यमान विषयशताकुलचित्तत्वेन काममये ॥ कामेफलतृष्णाया आत्मा यस्य स ॥

कामाधिष्ठानम् । न । इन्द्रियमनोबुद्धिषु ॥ इन्द्रियाणि मनोबुद्धि रस्याधिष्ठान मुच्यते ॥

कामानशनम् । न । अनाशके । तपसि ॥ तपोनानशनात् परम् । कामानामनशनम् । रागद्वेषरहितैरिन्द्रियैर्विषयाणां सेवनं यदृच्छालाभसन्तुष्टत्वमित्यावत् ॥

कामान्ध । पुं । कोकिले ॥ त्रि । कामेनविवेकहीने ॥

कामान्धा । स्त्री । कस्तूर्याम् ॥

कामायुध । पुं । महाराजाम्रवृक्षे ॥ न । कामदेवास्त्रे ॥

कामायुः । पुं । गरुडे ॥

कामारिः । पुं । विटमाक्षिकधातौ ॥ श्री सदाशिवे । महादेवे ॥

कामार्त्तः । त्रि । कामपीडिते । कामातुरे ॥

कामालु । पुं । रक्तकाञ्चनवृक्षे ॥

कामावशायिता । स्त्री । शिवस्याणिमाद्यष्टधैश्वर्यान्तर्गते ऐश्वर्यविशेषे । सत्यसङ्कल्पतायाम् ॥ कामान् अवशेते । शीङोणिनि । कामावशायिनो भाव । तल् प्रत्ययः ॥

कामावसायिता । स्त्री । कामावशायितायाम् ॥ कामान् अवस्यति तिष्ठतीत्यर्थे स्यतेर्णिनिः । भावेतल् ॥

कामावसायित्वम् । न । अष्टैश्वर्यान्तर्गतैश्वर्यविशेषे । सत्यसङ्कल्पतायाम् ॥ यथास्यसङ्कल्पो भवति भूतेषु तथैव भूतानि भवन्ति । अन्येषां निश्चयानिश्चेतव्यमनुविधीयन्ते योगिनस्तु निश्चेतव्या पदार्था निश्चयमिति । कामान् स्वेच्छया अवसाययितुं निश्चेतुं शीलमस्य । स्यतेर्णिनिः

। भावे त्व ॥

कामाङ्ग । पुं । राआम्रे

कामि । पुं । कामुके ॥ स्त्री । रत्याम् ॥

कामिक. । पु । कारण्डवेखगे ॥ न । काम्ये । काम्यमानभोगमोक्षप्रयोजने विधिपूर्वके कर्मणि ॥ त्रि । कामदे । अभीष्टफलप्रदे ॥

कामित. । त्रि । इच्छिते । वाञ्छिते ॥ कामः सञ्जातोऽस्य । ता° इतच् ॥

कामी । पु । परमात्मनि ॥ पूर्णकामत्वात् कामोऽस्यास्ति । इनि. ॥ कामुके ॥ चक्रवाके ॥ पारावते ॥ चटके ॥ संसारिणि ॥ चन्द्रे ॥ ऋषभौषधौ ॥ सारसखगे ॥ अवश्यं काम्यते । कमुकान्तौ । आवश्यकेति ग्रहादित्वात्णिनिः ॥

कामिनी । स्त्री । अतिशयकामयुक्तायांनार्याम् । सवर्णासवर्णयो रतायाम् ॥ भीरुस्त्रियाम् ॥ स्त्रीसामान्ये ॥ वन्दायाम् ॥ दारुहरिद्रायाम् ॥ मदिरायाम् ॥ अवश्यं काम्यते । कमेः पूर्ववण्णिनि. ॥ भूयान् कामोऽस्याः । अतइनिर्वा ॥

कामिनीपुष्प. । पु । दूर्वाविशेषे ॥ न । आर्त्तवे ॥ कामिन्याः पुष्पम् ॥

कामिनीश. । पुं । शोभाञ्जनवृक्षे ॥ विदग्धनायके ॥

कामिवत्. । पु । सरोत्सवे ॥

कामील. । पुं । रामपूगे । सुरेवटे ॥ त्रि । कामानुरूपिणि ॥

कामुक. । पु । अशोकपादपे ॥ अतिमुक्तके । माधवीलतायाम् ॥ चटके ॥ त्रि । कमने । कामयितरि । कामिनि । स्त्रीसुखासक्ते ॥ कामयते तच्छील. । लषपतपदस्थादिनाक मेरुकञ् प्रत्यय. ॥

कामुककान्ता । स्त्री । अतिमुक्तकलतायाम् ॥

कामुका । स्त्री । इच्छावत्याम् । धनादीच्छायुक्तायाम् ॥ कामयते तच्छीला । उकञन्ताट्टाप् ॥

कामुकी । स्त्री । मैथुनेच्छायुक्तायाम् । वृषस्यन्त्याम् ॥ जानपदकुण्डगोणेत्यादिनाङीष् ॥

कामेषु । पु । फलकामे । सकामे ॥ कामम्-आत्मन इच्छतीति तथा ॥

कामेश्वरी । स्त्री । कामाख्यापञ्चमूर्त्यन्तर्गतमूर्त्तिविशेषे ॥

कामोदकम् । न । स्नेहादेशेन(?)मृतमुद्दिश्य दत्तोदके ॥

कामोदा । स्त्री । रागिणी विशेषे ॥

काम्पिल्य. । पुं । गुण्डारोचनिकायाम् । कबीला इति भाषा ॥ उत्तरदेशविशेषे ॥ काम्पिल्याया अदूरभव. ।

सङ्गाशादित्वात् यय. ॥

**काम्पिल्ल** । पुं । काम्पिल्यार्थे ॥ काम्पिल्ल कफपित्तास्रकक्रमिगुल्मोदरव्रणान । हन्तिरेची कटुष्णश्च मेहाना हविषाश्मजित् ॥

**काम्पिल्लक.** पु । } काम्पिल्यार्थे ॥
**काम्पिल्लका** । स्त्री । } उत्तरजनपद विशेषे ॥

**काम्पील.** । पु । } काम्पिल्यार्थे ॥
**काम्पीलक.** । पुं । }

**काम्बल:** । पु । कम्बलावृतरथे ॥ कम्बलेन परिवृतो रथ. । परिवृतो रथ इत्यण् ॥

**काम्बविक.** । पु । शङ्खवलयादि कर्त्तरि । शाङ्खिके । शङ्खकारे ॥ कम्बुशिल्पमस्य । शिल्पमितिठक् । शाम्बतिक इतिनिर्देशात् कादेशोऽनित्य. ॥ कम्बोर्विकारो ऽस्यास्तीतिठन्वा ॥

**काम्बुका** । स्त्री । अश्वगन्धायाम् ॥

**काम्बोज:** । पु । कम्बोजदेशजे ऽश्वे ॥ सोमवल्के ॥ पुन्नागवृक्षे ॥ कम्बोजदेशोद्भवे प्रथमत क्षत्रिये पश्चाद्विच्छिन्नक्रियालोपादिना शूद्रत्वमापन्ने दस्युपदवाच्ये । सतुयवनतुल्योम्लेच्छजातिविशेष. । अस्य सगरराजेन सर्वशिरोमुण्डनङ्कृतम् । यथा । अर्द्धं शकानां शिरसोमुण्डयित्वा व्यसर्जयत् । यवनानाशिर सर्वं काम्बोजानां तथैवचेति ह० ॥ पु । न । श्वेतखदिरे । पपरियाखैर इतिभाषा ॥ कम्बोजेषु देशेषुभव । तत्रभवइत्यर्थे । कच्छाद्यण् । कम्बोजो ऽभिजनो ऽस्यवा । सिन्ध्वाद्यण् ॥

**काम्बोजी** । स्त्री । माषपर्ण्याम् । श्वेतगुञ्जायाम् ॥ दुष्खदिरे ॥ गुञ्जायाम् ॥ वाकुच्याम् ॥ कम्बोजेषुभवा । अण् । ङीप् ॥

**काम्यम्** । न । अन्त करणशुद्धावनुपयोगिनि कर्मविशेषे । फलकामनया चोदिते ॥ यथा । यत्किञ्चित्फलमुद्दिश्य यज्ञदानजपादिकम् । क्रियते कायिकं यच्च तत्काम्यं परिकीर्त्तितमिति ॥ त्रि । कमनीये । सुन्दरे ॥ कामनाविषये स्वर्गादौ ॥ कामोऽस्त्यस्य । अन्यत्रापीति यत् ॥ यद्वा । काम्यते । कमु० । अचोयत् ॥

**काम्यकर्म्म** । न । स्वर्गादीष्ट साधने ज्योतिष्टोमादौ । फलोद्देशेनविधीयमाने कर्मणि ॥ काम्यञ्च तत्कर्मं चेतिविग्रह. ॥

**काम्यदानम्** । न । प्रवारणे ॥ फलकामनयादाने ॥ यथा । अपत्यविजयैश्वर्यस्वर्गार्थं यत् प्रदीयते । दानं तत्काम्यमाख्यातं ऋषिभिर्धर्मचिन्तकैरि

ति गरुडपुराणम् ॥ काम्येनेच्छया कामस्य सुहृदादीष्टस्य वरस्त्रीरत्न स्वादेर्वा दानम् ॥

काम्यफलम् । न । आर्थिक्यां शुद्धौ ॥ प्राधान्येन फलं शुद्धिरार्थिकी काम्य कर्मणः । आर्थिकी शुद्धिः काम्यकर्म णः प्राधान्येन फलम् ॥

काय' । पु । कद्दैवते । ब्राह्मतीर्थे ॥ मूर्त्तौ । देहे ॥ सङ्घे ॥ लक्ष्ये ॥ स्वभावे ॥ मूलधने ॥ प्राजापत्यविवाहे । सहनौ धर्म्मञ्चरतामिति नियमनकृत्या कन्यादाने ॥ न । मनुष्यतीर्थे । प्रजापतितीर्थे ॥ तत्तु स्वल्पाङ्गुल्योर्मूले कनिष्ठानामिकयो रधोभागे प्रसिद्धम् । कायमङ्गुलिमूले इति वचनात् ॥ प्रजापतिर्देवताऽस्य । कस्येदित्यण् इदन्तादेशश्च । यस्येतिलोपात् परत्वादादिवृद्धिः ॥ चीयतेऽन्नादिभिः चीयतेऽस्मिन्नस्थ्यादिकमिति वा । चिञ् चयने । निवासचितीत्यादिना घञ् ।

कायचिकित्सा । स्त्री । वैद्यविद्याङ्गविशेषे ॥ यथाह सुश्रुतः । कायचिकित्सानाम सर्वाङ्गसंश्रितानां व्याधीनां ज्वरातीसाररक्तपित्तशोषोन्मादापस्मारकुष्ठमेहादीनामुपशमनार्थमिति ॥

कायबन्धनम् । न । कवचे । तनुत्रे ॥ इति हारावली ॥

कायमानम् । न । तृणकुट्याम् ॥ शरीरपरिमाणे ॥

कायस्थ' । पु । परमात्मनि ॥ नरेषु धूर्त्ते कृपाहीने नरजातिविशेषे । स च लेखजीविके । कूटकृति । पञ्जीकारे । कायथ इति भाषा ॥ अस्योत्पत्तिर्ब्रह्मवैवर्त्ते कृष्णजन्मखण्डे ८५ ऽध्याये । विश्वैकलिपिकर्त्तारं यत्नात्तु सं नं हरेत् । कायस्थेनोदरस्थेन मातुर्मांसमभक्षितम् । तत्र नास्ति कृपा तस्य दन्ताभावोऽत्र केवलमिति ॥ वह्निपुराणेऽपि । चाटचारणचौरेभ्यो वधबन्धभयादिभिः पीड्यमानाः प्रजा रक्षेत् कायस्थेभ्यो विशेषतः इति ॥ काये तिष्ठति । स्था । सुपिस्थ इति कः ।

कायस्था । स्त्री । हरीतक्याम् ॥ आमलक्याम् ॥ कायस्तिष्ठत्यनया । घञर्थे कः ॥ एलाद्वये ॥ तुलस्याम् ॥ कायस्थभार्यायाम् ॥

कायिकः । त्रि । शारीरिके । कायनिष्पन्ने ॥

कायिका । स्त्री । }<br>
कायिकावृद्धिः । स्त्री । } गवादिबलीवर्द्दादिकर्म्मयुतायां वृद्धौ ॥ यथा । दोह्यवाह्यकर्म्मयुता का

यिकासमुद्राह्वेतिव्यासः ॥ मूलध
नाऽविरोधिन्या प्रत्यब्दं देयपणात
दर्शादिरूपायां वृद्धौ ॥ यथा । काया
विरोधिनी शश्वत् पणार्द्धाद्यातु कायि
केति नारदः ॥ हलायुधस्तु पणार्द्धा
द्या इत्यत्र पणाद्वाद्येति पठित्वा पण
स्य मूलधनस्य यावद्वस्थानं तावत्
शश्वत्वर्षसहस्रमपि उत्तमर्णेन या
वाह्यते प्राप्यते सा कायिकेति व्याख्या
तवान् । तव्याख्या भोगलाभान्तर्गता
अपराच तद्भिन्ना । इति मिश्राः ॥

कार. । पुं । वधे ॥ निश्चये ॥ बलौ ॥
यत्ने ॥ यतौ ॥ तुषारशैले । हिमा
द्रौ ॥ क्रियायाम् ॥ यथा । स्वाहा
कारवषट्कारनमस्कारा दिवौकसा
म् । हन्तकारो मनुष्याणां स्वधाका
रः स्वधाभुजामिति ॥ करणम् कार'
॥ कर्मोपपदे कर्तृवाचक । यथा । क
र्मकार. स्वर्णकार इत्यादि ॥ वि
चिते धान्यादिराशौ ॥ यथा । द्वौ
कारौ ॥ करण व । प्रत्यायन ॥ ह्ल
विच्छेपे । परिमाणाख्यायां सर्वेभ्यइ
तिकर्मणि घञ । सर्वेभ्य इति पञ्च
मीनिर्द्देशात् प्रकृत्याश्रयएव कदा
रविति प्राप्तोऽप् बाध्यते नत्वर्थाश्र
या स्त्रीप्रत्यया ॥

कारक. । त्रि । कर्त्तरि । क्रियाजनके



॥ भाष्ये करोति क्रियां निर्वर्त्तयती
ति व्युत्पत्तिदर्शनात् । खुल ॥ न ।
क्रियोपाधिके ॥ साक्षात् क्रियानि
मित्ते । कर्माद्यन्यतमे । तानितु ।
कर्त्ता कर्म च करणञ्च सम्प्रदानं त
थैव च । अपादानाधिकरणे इत्याहुः
कारकाणिषट् ॥ कर्त्ता १ यथा पु
रुषे शिवोदृष्ट । कर्म २ यथा रा
मं प्रणमति । करणं ३ यथा नेत्रै.
शिवोदृष्ट. । सम्प्रदानम् ४ यथा ह
रि. सज्ञः सुखं ददाति । अपादानम्
५ यथा विभीषण पदाद्भ्रष्ट. । अधि
करणम् ६ यथा रेमे शरदि गोवि
न्द ॥ सर्वत्र सर्वकारकशक्तिसम्भवः
। उक्तञ्च । अनेकशक्तियुक्तस्य विश्व
स्यानेककर्मण' । सर्वदा सर्वथाभावा
त् क्वचित् किञ्चिद्विवक्ष्यतइति । य
था । सर्वप्रयत्नेन च भूमिपालास्त
स्मिन् प्रजायुद्धे सर्वएवेत्यत्र कर्मणो
धिकरणविवक्षायां सप्तमीति ॥ कार
कोद्भवजले ॥

कारकदीपकम् । न । अलङ्कारविशेषे
। यथा । क्रमिकैकगतानान्तु गुम्फः
कारकदीपकम् । गच्छत्यागच्छ
तिपुन. पान्थः पश्यति पृच्छति ॥
यथावा । निद्राति स्नाति भुङ्क्ते चल
ति कचभरान् शोषयत्यन्तरास्ते दी

व्यस्यचेनेवाय गदितुमवसरो भूय
आयाहियाहि । इत्युक्ते प्रभुणा
मसकृद्धिकृतैर्वारितान् हारिद्री
नान् पश्यास्मानभ्रिकन्येसरसि वक्र
चामर्भिरक्रैरपाङ्गैः ॥ कारणादावरणो
श्रुतस्यपान्यस्यकर्तृकारकस्य गमना
दिष्वन्वयः ॥ द्वितीये त्वध्याहृतस्य
प्रभोः कर्तृकारकस्य निराद्विष्वन्वयः
इत्येकस्यानेकवाक्यान्वयेन दीपक
त्वाच्छायापत्याकारकदीपकम् ॥

कारणकारणीयः । पु । सारदेशे ॥ तद्दे
शीयजने बहुवचनान्त ॥

कारणम् । न । करणे ॥ साधने ॥ वधे
॥ इन्द्रिये ॥ देहे ॥ कर्मणि ॥ का
यस्थे ॥ वाद्यप्रभेदे ॥ गीतप्रभेदे ॥
अव्यक्ते । बीजभावे ॥ ईश्वरे । अ
भिन्ननिमित्तोपादाने ॥ वेदान्ति
नोमुखादीश्वरस्याभिन्ननिमित्तोपा
दानकारणतां श्रुत्वा पातञ्जलीयः-
सक्रोधमाह । भोः पाप कथमीश्वर
मेवविकारिणं कृत्वा विनाशधर्मि
णमुपपादयसि । अस्यायम्भावः वेदा
न्तीहि भगवतः सकलकार्योपादान
त्वं मन्यते तत्रस्वद्रवविकारितया
सङ्गच्छते । यथाहि मृत् स्वयं विकुर्वा
णा घटशरावाद्युपादानं भवति तथा
स्वयंविकुर्वन्नीश्वरो जगदुपादानमि



त्यभ्युपगन्तव्यम् । तथाच भगवतो
मद्द्रवविकारित्वाद्विनाशित्व सिद्ध
तीति ॥ सांख्यस्तदाह ननु प्रकृते
र्विश्वोत्पत्ति पुरुषस्तूदासीन इति
। एतच्छ्रुत्वा वेदान्ती सखेदमाह ।
दुर्बुद्धी भो मतदपि नजानीत य
त सर्वप्रमेयजातं घटादिवत् कार्य
मिति प्रधानोपादानकारणमप्यपेक्ष
णायमेवेति अतद्यविकारमङ्गामु
ग्धवधूविकल्पविलसितमिव । तथाहि
। आत्मज्योतिः कथ मनुदितानन्त
नित्यप्रकाशं विश्वोत्पत्तौ व्रजति वि
कृतिं निष्कलं निर्मलञ्च । मन्त्री
वेत्पश्यद्वलया मन्नुवाहावलीनां-
प्रादुर्भावे भवति नभसः कीदृशो वा
विकारः इति ॥ कृतौ । बीजे । येनविना
यन्नभवति तस्मिन ॥ तच्च निमित्तो
पादानभेदाद्द्विविधम् । कारणत्व
माह । अन्यथासिद्धिशून्यत्वे सति नि
यतपूर्ववर्त्तित्वम् । तच्चसमवाय्यस
मवायिनिमित्तभेदात् त्रिविधम् ।
परमाणु परिमाणभिन्नानां कारण
त्वमिति भाषापरिच्छेदः ॥ अणुपरिमा
णन्तु नकस्यापि कारणमिति सिद्धान्त
मुक्तावली ॥ कार्येते ऽनेन । णिजन्ता
त् करणे ल्युट् ॥

कारणकारणम् । न । प्रकृतेरधिष्ठानभू

ते ब्रह्मणि ॥

कारणगुणोद्भवगुण । पु॰ कारणगुण पूर्वकगुणे ॥ तद्यथा । रूपम् १ रसः २ गन्ध ३ अपाकजस्पर्श ४ द्रवत्वम् ५ स्नेहः ६ वेग. ७ गुरुत्वम् ८ एकत्वम् ९ पृथक्त्वम् १० परिमाणम् ११ स्थितिस्थापकसंस्कार १२ । इति भाषा परिच्छेद ॥

कारणता । स्त्री । } हेतुत्वे । पश्य
कारणत्वम् । न । }

कारणे कारणत्वम् ॥ सततत्त्वादि रूपायां सर्वविकाराधिष्ठानतायाम् ॥

कारणमाला । स्त्री । अलङ्कारविशेषे । यथोत्तरञ्चेत पूर्वस्य पूर्वस्यार्थस्य हेतुता । तदाकारणमालास्यात् ॥ उत्तरमुत्तर प्रति यथोत्तरम् । उदाहरणम् । जितेन्द्रियत्व विनयस्य कारण गुणप्रकर्षोविनया दवाप्यते । गुणप्रकर्षणजनो ऽनुरज्यते जनानुरागप्रभवाहिसम्पद ॥ अपिच । गुम्फ कारणमालास्याद्यथा प्राक्तनकारणै. । नयेन श्री श्रियात्त्या ग स्त्यागेन विपुल यश ॥ उत्तरोत्तरकारणभूतपूर्वपूर्वै पूर्वपूर्व कारणभूतोत्तरोत्तरैर्वा वस्तुभि.कृतो गुम्फः कारणमाला । आद्योदाहृता द्वितीया यथा । भवन्तिनर-का पापात पापद्दारिद्र्य सम्भवम् । दारिद्र्यमप्रदानेन तस्माद्दानपरो भव ॥

कारणशरीरम् । न । सत्वप्रधानेऽज्ञाने । आनन्दमयकोषे । सुषुप्तौ ॥ अनाद्यविद्यानिर्वचनीय शरीरद्वय कारणमात्रं सत्स्वरूपाऽज्ञानं यद स्तितत्कारणशरीरमित्याहु. ॥

कारणा । स्त्री । यातनायाम् । गाढवेदनायाम् ॥ नरकवशा यमयातनेति केचित ॥ णिजन्तात् कृणोतर्युक्त्व न्येतियुच् । टाप् ॥

कारणिक । त्रि । परीक्षके ॥ करणेश्वरति । चरतीतिठक ॥

कारणोत्तरम् । न । प्रत्यवस्कन्दने ॥ सत्यत्वेनाङ्गीकृत्य ततप्रतिकूल रूपकारणंब्रूयात तदा तदुत्तरकं कारणोत्तरम् । तत् त्रिविधम् । वलवत् १ तुल्यवलम् २ दुर्बलम् ३ । आद्य यथा । मयात्वत्त शतङ्क गृहीतमितिसत्यम् किन्तु तत परिशोधितम् । द्वितीय यथा । मदीये यम्भूनि क्रमागतत्वादिति वादिनुक्ते प्रतिवादिनोपि तथोत्तरम् । तृतीय यथा । ममेयम्भूमिः क्रमागतत्वात इतिवादुक्ते ममैवभूमिः द्दशवर्षोपभुज्यमानत्वात इति प्रत्युत

रम ॥

कारण्डव* । पु । खडहांस इति गौडे षु प्रसिद्धे हंसविशेषे ॥ अमरमालाउड इति रमेशे । ईषत् रण्ड । ईषद र्थेचेतिको: कादेश. । कारण्डवांति । धां० । आतोनुपेतिक ॥

कारण्डव्यूह. । पु । व्यूहभेदे ॥

कारन्धमी । पुं । कांस्यकारे । धौमिल के । धातुवादरते ॥

कारम्भिका । स्त्री । कर्पूरे ॥

कारम्भा । स्त्री । प्रियङ्गुवृक्षे ॥ ईषत् रम्भा । ईषदर्थेचेतिको. कादेश:॥

कारव: । पुं । काके ॥ का इतिरवो ऽस्यस: ॥

कारवल्ली । स्त्री । कारवेल्ले ॥ कारवी रे ॥

कारवी । स्त्री । शतपुष्पायाम् । मधु रायाम् ॥ बड़जटा इति गौडभाषा प्रसिद्धे दीप्ये । मयूरशिखायाम् ॥ मुषव्याम् । कलजीरी इति भाषा ॥ त्वक्पत्र्याम् ॥ कृष्णजीरके ॥ यु ग्मीरवेल्याम् ॥ कैवल्येमरीति । कवाव्दे । यथाच कारवस्य मयूरस्ये मुम् । तस्येदमित्यण ॥ कारवाति वा । कागतिगन्धनयो: । आतोनुपे तिक: । गौरादित्वान्ङीष् । यद्वा । कार वम् । हार्ष० । णहना । सं० क्विप् । कारमवति । अव रक्षणादौ । क र्मण्यण् । ङीप् ॥

कारवेल्ल । पु । करेला इतिप्रसिद्धे शा के । कठिल्लके । सुषव्याम् ॥ कार वेल्लंहिमभेदि लघु तिक्तमवातलम् । ज्वरपित्तकफास्रघ्नं पाण्डुमेह कृ मीन् हरेत् ॥ कारवेल्लति वेल्लचल ने । कर्मण्यण् ॥

कारवेल्लक । पुं । कारवेल्ले ॥ स्वार्थेक ॥

कारवेल्ली । स्त्री । क्षुद्रकारवेल्ले ॥ स हुवा कारवेल्लीखा विशेषादीपनी लघु: । तद्वत्काकारवेल्ल गुणा ॥ का रवेल्ली फलतकैस्वेदितंभिन्नमर्दित म् । भर्जितंनवनीतेन सैन्धवेन स- मन्वितम् ॥ विदूषितमुखमीषत्का रवेल्लीकठोरं पुनरपितमिवतैलेसा धितंरामठेन । रचितमरिचचूर्णं सैन्धवेनातिपूर्णं सुकृतिरसनायां लोलतामातनोति ॥ कारवेल्ली फलम्भेदि लघुतिक्तंसुशीतलम् । पि त्तासृक्कामवातपाण्डुकफमेहं कृ मीन् जयेत् ॥

कारस्कार: । पुं । किम्पाकद्रुमे । विष तिन्दौ ॥ कारकरोति । डुकृञ० । कृञोहेतुताच्छील्यानुलोम्येषु इति ट: । कारस्करोवृक्ष इति निपात- नात्सुट् ॥

कारस्करादिका । स्त्री । कर्णजलौकायाम् ॥

कारा । स्त्री । वन्धनालये । कारागारे ॥ दूत्याम् ॥ प्रसेवके । वीणाधःकाष्ठभाण्डे ॥ सुवर्णकारिकायाम् ॥ बन्धने ॥ पीडायाम् ॥ कीर्यते । कृवि° । भि° अङ् । ऋदृशोऽङीतिगुणे दीर्घत्वंनिपात्यते ॥

कारागारम् । न । वन्धनशालायाम् ॥ कारैव आगारम् । कारायै वन्धाय वा आगारम् ॥

कारागुप्तः । त्रि । वन्धनागारस्थे ॥ कारायां गुप्त ॥

कारापथ. । पु । देशविशेषे । लक्ष्मणात्मजयो रङ्गदचन्द्रकेत्वोर्विषये ॥

कारावरः । पु । पारशवाद्वैदेह्यामुत्पन्ने । चर्मकारे ॥ कारावरोनिषादात्तु चर्मकार प्रसूयते ॥

कारावेश्म । न । वन्धनालये । वधाङ्के ॥ कारैव कारायै वावेश्म ॥

कारि । स्त्री । क्रियायाम् ॥ त्रि । शिल्पिनि ॥ करोति । डुकृञ्° । कृञउदीचांकारुष्विति इञ ॥

कारिका । स्त्री । नटयोषिति ॥ कृतौ ॥ स्वल्पाक्षरदृष्ट्यावह्वर्थप्रापिका- ग्रन्थविताम् । विवरणश्लोके ॥ शिल्पे ॥ यातनायाम् ॥ नापिताद्विकम शि ॥ करणम् । धात्वर्थनिर्देशे करोते र्ण्वुल् । शिल्पादृत्ति' ॥ यद्वा । करोति । ण्वुल । प्रत्ययस्थादितीत्वम् ॥

कारित. । त्रि । कुर्वन प्रेरित. कारित इत्युच्यते । कराया इतिभाषा ॥

कारिता । स्त्री । कारिकायाम् । कारिताख्यौ । अधिकवृद्ध इतिभाषा ॥ यथा । ऋणिकेनतुयावृद्धिरधिका सम्प्रकीर्त्तिता । आपत्कालकृतानित्यं दातव्या सा तुकारिता ॥ इति कात्यायन. ॥

कारी । स्त्री । कारिकायाम् । कटुपत्रिकायाम् ॥ कारटकारी आकर्षकारी त्येषाद्विधा ॥

कारीरम् । न । भस्मनि ॥ करीरस्यावयवे । काण्डे ॥ टीट इतिप्रसिद्धे करीरफले । तत्पुष्पे॥ फलंकरीरस्य हि वीजवर्जितं संस्कारितं सोदकभाजनेषु । सुचिक्कणेष्वद्भिर्तं सुसन्धितं सन्धानरीत्यासुधियाविपाचितम् ॥ कारीरकटुकंरुच्यं हि फलमुष्णं रुचिप्रदम् । कफपित्तकरञ्च- ष्णतकषायंवातकृद्धरम् ॥ अस्यकुसुमस्याकस्तु । कारीरकुसुमंसुघर्मं निक्षिप्तंसद्यःप्रिया सघृतं सप्ताहेन विप्रक्षिप्तं सलवणं हि [illegible]

कम्। चिरसंततकासरक्तकाधिकमर्थो सदैसकारान्वित भोक्ता तेनसमर्थित: प्रतिदिनश्रीपार्वतीश: स्वयम्॥ कारीरकुसुमम्भेदि कटुक कफनाशनम्। पित्तकृद्रुचिरं भव्यं कषायंप थ्यदम्मतम्॥ कारीरकुसुमंकथभी तलकृष्णनाशनम्॥ करीरस्तावक वेति कारोवा। अव। पलाशाय अक॥

कारीरी। स्त्री। पुष्पादिपाले नाग विशेषे॥

कारीषम्। न। शुष्कगोमयसमूहे। बिठौरा उपलों कावेर इतिभाषा॥ करीषाणां समूह:। भि० अव॥

कारु:। त्रि। शिल्पिनि॥ कारयित्वात् कर्माणि कारुं पक्षाजनश्चयेदिति कू र्मपुराणम्॥ कारके॥ पुं। विश्वक र्मणि॥ शिल्पे॥ करोति। डुकृञ्० कृवापेत्युण्॥

कारुक.। त्रि। सूपकारादिशिल्पिनि॥ स्वार्थेक:॥

कारुककर्म। न। सूपकारादीनाङ्कर्म णि॥ यै: कर्मभि: प्रचरितै: शुश्रूष्य न्तेद्विजातय:। तानिकारुककर्माणि शिल्पानिविविधानिच॥

कारुचौर:। पुं। सन्धिचौरे॥

कारुज:। पुं। करभे। गजार्भके॥ फे

ने॥ वल्मीके॥ नागकेशरे॥ गैरि के॥ शिल्पिनां चित्रे॥ स्वयञ्जात तिले॥

कारुणिक.। त्रि। दयालौ॥ करुणाशी लमस्य। शीलमिति ठक्। करुणा-प्रयोजनं अस्यवा। प्रयोजनमिति ठक्॥

कारुवी। स्त्री। अजमोदायाम्॥

कारुण्यम्। न। परदुःखदु.खित्वे। क रुणायाम्॥ करुणा: करुणायाम् त स्य भाव:। ष्य०ष्यञ्॥

कारुष:। पुं। क्षुत्रवर्णायाम्। विश्वकर्मणि॥

कारूषा:। पु। कारूषदेशवासिषु। नृ पतिषु॥ बहुवचनान्तोयम्॥

कारोत्तर:। पुं। सुराग्रभागे। सुराम ण्डे॥ कूपे॥ त्रि। कार्यकर्मे॥ कारे ण क्रियया उत्तर:॥

कार्कन्धवम्। न। कर्कन्ध्वाविकारे॥ त दवयवे॥ बिल्वादयण्॥

कार्कश्यम्। न। कठोरतायाम्॥ कर्क शस्यभाव। ष्यञ्॥

कार्णाट:। पुं। कर्णाटदेशे॥ स्वा० अ ण्॥

कार्तवीर्य:। पुं। चन्द्रवंशीयकृतवीर्य राजपुत्रे। अर्जुने। हैहये। हरेरा वतारे॥ अस्यध्यानम्। उद्यत्सू र्यसहस्रकान्तिरखिलक्षोणीधवैर्वं-

न्दितो हस्तानांशतपञ्चकेनतु इध्वस्तापानिष्टस्तावता । कार्त्तवीर्यमाह्लयापरिवृतश्चक्रावतारो हरेः पायात्तन्नन्दनगेहवधा भवसन श्रीकार्त्तवीर्यान्वप इति ॥ जैनराजचक्रवर्त्तिविशेषे । सुभूमे ॥ कृतवीर्यस्यापत्यम् । अण् ॥

कार्त्तस्वरम् । न । स्वर्णे । हेमनि ॥ कृतस्वरे आकारविशेषे भवम् । अण् ॥ कृता. पठिता. स्वरायेन तस्यैवा इदम् । शेषइत्यण् ॥ धुस्तूरे ॥

कार्त्तान्तिक । पु । दैवज्ञे । मौहूर्त्तिके । ज्योतिर्विदि ॥ कृतान्तंवेत्ति । क्रतूक्थादिसूत्रान्ताट्ठक ॥

कार्त्तिक । पु । स्कन्दे । कार्त्तिकेये ॥ ऊर्ज्जे । शरद्द्वितीयेमासे । बाहुले ॥ अत्रजातस्यफलम् । दच क्रये विक्रयणो धनाढ्य स्याद्वावदूको ऽखिलकोशलश्च । य कार्त्तिके कार्त्तिकरूपधारी जातो भवेद्युद्धविशारदश्चेति ॥ वर्षविशेषे । सचकृत्तिकारोहिण्योरेकतरस्मिन् वृहस्पतेरस्तोदयेकतरसम्बन्धे भवतीति मलमासतत्त्वम् ॥ कार्त्तिकी पौर्णमास्यस्मिन । विभाषा फाल्गुनीति पाणिनिःसूत्रा ॥

कार्त्तिकिक । पु । कार्त्तिकमासे ॥ कार्त्तिकी पौर्णमास्यस्मिन । विभाषाफाल्गुनी श्रवणा कार्त्तिकी चैत्रीभ्यः । इतिठक ॥

कार्त्तिकी । स्त्री । कार्त्तिकपौर्णमास्याम् ॥ कृत्तिकया युक्ता पौर्णमासी । नक्षत्रेण युक्तः कालः इत्यण् । ततोङीप् ॥

कार्त्तिकेय । पुं । कुमारे । महासेने ॥ कृत्तिकानामपत्यम् । तत् पोषितत्वात । स्त्रीभ्योढक ॥ अस्यध्यानं यथा । कार्त्तिकेयं महाभागं मयूरोपरि संस्थितम् । तप्तकाञ्चनवर्णाभं शक्तिहस्तंवरप्रदम् ॥ द्विभुजं शत्रुहन्तारं नानालङ्कार भूषितम् । प्रसन्नवदनं देवं सर्वसेनासमावृतमिति ॥

कार्त्तिकेयप्रसू. । स्त्री । दुर्गायाम् ॥

कार्त्तिकेयवनम् । न । शरवणे ॥

कार्त्तिकोत्सव । पुं । कौमुद्याम् । कार्त्तिक्या पूर्णिमायाम् ॥ दीपोत्सवतिथौ ॥

कार्त्स्न्यम् । न । साकल्ये ॥ कृत्स्नस्यभाव । ष्यञ् ॥

कार्प्पट । पुं । जतुनि । लाक्षायाम् ॥ कार्य्यिणि । कार्यार्थिनि । उमेदवार इत्यपि इति पारस्यभाषा ॥ इतिहेमचन्द्र ॥ वस्त्रे ॥ स्वा० अण् ॥

तार्किकमते प्रागभावप्रतियोगिनि घटपटादिरूपे विकारे ॥ कार्यंप्रति कारणंत्रिविधम् । समवायिकारणम् १ यथा घटकार्यंप्रतिकपालम् । असमवायिकारणम् २ यथा घटकार्यंप्रतिकपालसंयोगादि । निमित्तकारणम् ३ यथा घटंप्रतिदण्डचक्रादीति ॥ कार्य्याणां नियोगविकल्पसमुच्चया भवन्ति । अनेनैवोपायेन साध्यते तन्नियोग । अनेनवाऽनेनवेतिविकल्प' । अनेनचेतिसमुच्चयः ॥ विवादे ॥ यथा । यस्मात्कार्यंसमारम्भ स्विशात्तेन विनिश्चित । तस्मात्सभते कालमभियुक्तस्सकालभाक् ॥ इति कात्यायन ॥ अपूर्वं ॥ यथा । विधिप्रत्ययस्य कार्यंमपूर्वमिति मीमांस - का. ॥ त्रि । सम्पादनीये । कर्त्तव्ये ॥ क्रियते इति । डुकृञ् ० । विभाषा कृटपोरितिक्यवभावे ऋहलोर्ण्यत् । इति ॥

कार्य्यकुशल. । त्रि । कर्मक्षमे । कर्मठे ॥

कार्य्यता । स्त्री । कार्यत्वसङ्गतौ ॥ भावे तल ॥

कार्य्यत्वम् । न । कार्यतासङ्गतौ ॥ अभूत्वाभावित्वे ॥ भावे त्व' ॥

कार्य्यपुट' । पु । क्षपणे ॥ उन्मत्ते ॥ अनर्थकरे ॥

कार्य्यप्रद्वेष' । पुं । आलस्ये ॥

कार्य्या । स्त्री । कारीवृक्षे ॥

कार्य्यी । त्रि । यस्य निर्दिश्यतेकार्यंतस्मिन ॥ कर्मार्थिनि ॥

कार्शानव । त्रि । आग्नेये ॥ कृशानोरिदम् । अण ॥

कार्श्मरी । स्त्री । काश्मरीवृक्षे । गम्भार्याम् ॥

कार्श्य' । पु । कार्श्ये । सालवृक्षे ॥ कर्चूरे ॥ शठ्याम् ॥ न । कृशत्वे ॥ कृशस्य भाव. । वर्णदृढादिभ्य ष्यञ्चेतिष्यञ् ॥

का.र्ष. । पु । कर्षके ॥ कृषि' शीलमस्य । छत्रादिभ्योण ॥

कार्षक । पु । कर्षके ॥ कर्षति । कृष० । कृषेर्वृद्धिश्चोदीचामिति क्वुन ॥

कार्षापण । पुं । न । कार्षिके । रजतरूप्ये ॥ षोडशपणे ॥ ताम्रिकेपणे ॥ कार्षापणस्तु विज्ञेयस्ताम्रिक' कार्षिक पण । इतिमनूक्ते ॥ कर्षस्यायम् । तस्येदमित्यण् । आपणनम् । पण० । नित्यपण. परिमाणे इत्यप । गोचरसञ्चरेतिघो धा कार्षस्य कार्षेण वा आपण ॥

कार्षि: । स्त्री । कृषिकर्त्तरि ॥ कृषति । कष० कृषेर्वृद्धिश्चेति इञ् ॥

कार्षिक: । पुं । कार्षापणे । रूप्यकाने

भूतभविष्यद्वर्त्तमानात्मक कालाइति वैयाकरणा ॥ कालोहि भगवद्विभूतिः । काल कलयतामहम् । कलयतां सङ्ख्यानं कुर्वतामध्ये ॥ क्रियामत्युपहितः सर्वस्य संहर्त्तापरमेश्वरः कालः ॥ अहमेवाक्षयः कालः । अक्षयकालाभिमान्यक्षय परमेश्वराख्यःकालः ॥ कलनात् सर्वभूतानां ब्रह्मादीनामिमेषतः । कालश्शब्देन निर्दिष्टो ह्यखण्डानन्दअद्वयः ॥ कलयन्त्यायु । कलसङ्ख्याने । पचाद्यजन्तात् प्रज्ञाद्यण् ॥ कल्यते । कलसङ्ख्याने शब्दे च । कर्मणिघञ् ॥ कालयति सर्वमिति वा । कलप्रेरणे । ण्यन्तात्पचाद्यच ॥ यद्वा । काल्यते । कालउपदेशे । घञ् ॥ यस्याऽह'प्रथमं रूपमरूपस्ततथानिशा । सन्ध्याच परमेशस्य तस्मै कालात्मनेनमः ॥

कालक' । पु । जटुले । जतुके । पिप्ला । देहस्थचिह्न विशेषे । लसन इति भाषा ॥ जलगर्दे ॥ न । कालशाके ॥ यकृति ॥ अनित्ये वर्णे रक्तेचार्थे कालाच्छ तिकन् ॥ कालक पट कालिकाशाटी कालकम्मुखम् ॥ कालयति । कलक्षेपे ॥ ण्वु० । वुन् ॥

कालकटङ्कटः । पु । शिवे ॥

कालकण्ठ । पु । शिवे ॥ पीतसारे ॥ मयूरे ॥ खञ्जने ॥ कलविङ्के ॥ दात्यूहे ॥ कालःकृष्णवर्णः कण्ठो यस्य सः ॥ काले प्रावृषिकण्ठो ध्वनिरस्यवा ॥

कालकण्ठक । पु । दात्यूहपक्षिणि ॥ कालकण्ठे ॥ काल कण्ठोऽस्य । कप् ॥ स्वा० कन्वा ॥

कालकन्दक. । पु । जलसर्पे ॥

कालकन्या । स्त्री । जरायाम् ॥ कालस्यकन्या ॥

कालकर्णिका । स्त्री । अलक्ष्म्याम् ॥ कालस्यकर्णिका ॥

कालका । स्त्री । कालकेयनाम्नोऽसुरगणस्यजनन्याम् ॥

कालकाल । पु । सदाशिवे । देवदेवे ॥

कालकील: । पु ।<br>
कालकीलक' । पु ॥ } कोलाहले ॥

कालकुष्ठम् । न । पर्वतीयमृत्तिकाविशेषे । कङ्कुष्ठे । विरङ्गे ॥

कालकूटम् । न । विषे ॥ वोले ॥ पु । न । स्थावरेतीव्रविषविशेषे ॥ देवासुररणे देवैर्हतस्यपृथुमालिनः । दैत्यस्यरुधिराज्जातस्तरुरश्वत्थसन्निभः ॥ निर्यासःकालकूटोऽस्यमुनिभिः परिकीर्त्तितः । सोऽहिक्षेत्रेशृङ्गवेरे कोङ्कणे मलये भवेत् ॥ कालमपि

कूटयति । कूटपरिदाहे । चु० कर्म यप्रय ॥ कालस्यकर्मसो मण्योर्वाकू टोराग्निरिवेति वा ॥

कालकृत । पुं । सूर्ये ॥ कालकरोति । डुकृञ्० । क्विप् । तुक ॥

कालकृत. । पु । सूर्ये ॥ त्रि । कालजाते ॥ यथा । सर्वज्ञकालकृतमन्ये कालेऽपि बलवत्तर. । इतिपु ॥

कालकेशी । स्त्री । नील्याम् ॥

कालखञ्जनम् । न । यकृति ॥ इतिहेमचन्द्र ॥

कालखञ्ज. । पुं । महानरकविशेषे ॥

कालखण्डम् । न । दक्षिणकुक्षिस्थेमांसखण्डे । यकृति ॥ कालञ्चततखण्डञ्च ।

कालग्रन्थिः । पुं । वत्सरे ॥

कालघटः । पु । योगविशेषे ॥ यथा । षष्ठींशीतांशुवारे परिहर दशमीं सप्तमीम्भार्गवेपि अष्टम्यादित्यपूर्व्वां बुधदिननवमीं सौरिवारे दशम्याम् । एकादश्याञ्चभौमे दशशतकिरणेव चंयेद्वादशीञ्च सर्व्वारम्भं न कुर्य्याज्जनयति विपद कालघटोऽपियोग इति ॥

कालङ्कतः । पुं । कालकासुन्दे इतिगौडभाषाप्रसिद्धे कासमर्दे । कसौंदी इतिभाषा ॥

कालचक्रम् । न । कालस्वरूपे चक्रे ॥ यथा । कालोद्विविधे ऽवसर्पिण्युत्सर्पिणीप्रभेदत । सागरकोटिकोटो नांविंशत्यास समाप्यते ॥ अवसर्पिण्यांषडरा उत्सर्पिण्यांतएवविपरीता । एवंद्वादशभिररैर्विवर्त्ततेकालचक्रमिदम् ॥ इतिहेमचन्द्र. ॥ वत्सरस्वरूपे ॥

कालचिन्तक. । पुं । ज्योतिर्विदि । दैवज्ञे ॥

कालज्ञ. । पुं । कुक्कुटे ॥ त्रि । अध्याय ज्ञाइतिविदुषि ॥ यद्देदभिर्नस्वान्धे नयावत्कालविपर्यय । तमेवचागते काले भिन्द्याद्घटमिवाश्मना ॥ कालं जानाति । ज्ञा० । क० ॥

कालञ्जरः । पुं । योगिचक्रस्यमेलके ॥ भैरवे । शिवे ॥ पर्वतविशेषे ॥ देशविशेषे ॥ कालञ्जरस्थाने सिद्धपीठे ॥

कालञ्जरा । स्त्री । } चण्ड्याम् ॥
कालञ्जरी । स्त्री । }

कालताल । पु । तमालवृक्षे ॥

कालतिन्दुक । पुं । काकेन्दौ । कुपीलुके ॥

कालदण्ड. । पुं । योगविशेषे ॥ कालदण्डे ॥

कालधर्म्मा. । पुं । मृत्यौ ॥ समयस्वभावे ॥ कालस्य धर्मे ॥

कालनियोगः । पुं । दैवाज्ञायाम् ॥ कालस्य नियोगः । कालकृतोवा नियोग ॥

कालनिर्य्यासः । पुं । गुग्गुलै ॥

कालनेमि. । पु । राक्षसविशेषे ॥ हिरण्यकशिपुपुत्रे । दैत्यविशेषे ॥

कालनेमी । पुं । कालनेमै ॥

कालनेमिनिहा । पुं । श्रीपतै । विष्णै ॥ कालनेमिंनिजघानेति ॥

कालनेमिरिपु. । पु ।
कालनेमिहा । पुं ।
कालनेम्यरि । पुं । } विष्णै ॥

कालपर्णं. । पुं । तगरवृक्षे ॥

कालपालकम् । न । कङ्कुष्ठसदृि ॥

कालपाश । पुं । यात्रायावर्जनीयविशेषे ॥ उत्तरादिषु पूर्वान्तदिक्षु सूर्यादित क्रमात् । काल स्तत्सम्मुखे पाशो निशायान्तु विपर्यय ॥ सम्मुखस्थो कालपाशो यात्रायान्वविवर्जयेत ॥

कालपीलुक । पु । कुपीलै ॥

कालपुच्छ. । पु । मृगविशेषे ॥ गुणे रेवासम. कालपुच्छो मुनिभि रीरित ॥

कालपुरुष । पु । यमसहाये ॥ ज्योतिश्शास्त्रे ॥ यथा । किन्त्वस्य कालपुरुषाख्यमहार्णवस्य गच्छेत् कदाचि द्रब्धिर्मनसापि पारम् । इति ॥ नराणां शुभाशुभज्ञानार्थं जन्मलग्नादिद्वादशराशिकल्पिते ज्योतिश्शास्त्रप्रसिद्धे पुरुषाकारे ॥

कालपृष्ठः । पुं । मृगविशेषे ॥ कङ्कपक्षिणि ॥ न । कोदण्डमात्रे । धनुर्मात्रे ॥ कर्णचापे । कर्णस्य पृथातनयस्य धन्वनि ॥ कालो यम इव पृष्ठ मस्य । कालवर्णं वा पृष्ठ मस्य ॥

कालपेषी । स्त्री । श्यामलतायाम् ॥

कालप्रभातम् । न । शरदृतै ॥ इति त्रिकाण्डशेष ॥

कालभाण्डिका । स्त्री । मञ्जिष्ठायाम् ॥

कालमान. । पु । कृष्णार्जके । कृष्णतुलस्याम् ॥ राजनिर्घण्टे कालमाल इ ति पाठः ॥

कालमुष्क' । पुं । घण्टापाटलिवृक्षे ॥

कालमूलः । पुं । रक्तचित्रके ॥

कालमेघः । पु । श्यामलोल्बणमेघे ॥

कालमेशिका । स्त्री । कालमेश्याम् ॥ काले मिश्यते । मिशशब्दे । कर्मणिघञ् । गै० ङीष् । स्वार्थे कन् ॥

कालमेषी । स्त्री । कालमेषिकायाम् । मञ्जिष्ठायाम् ॥ चिहति ॥ सोमराज्याम् ॥ कालंवर्णं मिषति । मिष स्पर्द्धायाम् । कर्मण्यण् । गैारा

दिक्चान डोष॥

कालयुक्त । पु । वत्सरे ॥ यथा । गोमि स्त्र्योविनश्यन्ति येचान्यनटनर्त्तका । वासवोवर्षते देवि शस्यञ्च न हि जायते ॥ तिलसर्षपमाषादिकार्पासानां महार्घता । गोमहिष्य सुवर्णानि कांस्यताम्राश्मशेषम ॥ तत्सर्वं देवि विक्रीय कर्त्तव्योधान्यसञ्चयः । तेन धान्येन लोकोयं निस्तरिष्यति दुर्दिनम् ॥ पार्थिवामोपका दीनाः कालयुक्ते प्रपीडिताः ॥ इति ॥

कालरात्रि. । स्त्री । सर्वभूतापहारिण्यां मृत्युदेव्याम् ॥ सर्वमारकस्यापि कालस्य रात्रिर्नाशिका । प्रलयेकालस्यापिनाशात् ॥ कालरात्रिर्यमभगिनीतिभावप्रकाश. ॥ कल्पान्तरात्रौ ॥ भीमरथ्याम् ॥ निशाविशेषे । दीपावल्याम् ॥ दीपावलीतुयाप्रोक्ता कालरात्रिश्च सामतेत्यागम वचनात् ॥ दुर्गाया. शक्तिविशेषे ॥ दैनन्दिनप्रलयेऽपीतिकश्चित् ॥ कालः संहारोमरणं तदुपलक्षिता रात्रिः ॥

कालरुद्रः । पु । कालाग्निरुद्रे ॥

काललवणम् । न । विड्लवणे ॥

काललौहम् । न । तिखा इति गौड भाषाप्रसिद्ध कृष्णायसे । हक्मे । तीक्ष्णे ॥



कालवित् । पु । ज्योतिर्विदि ॥ ज्योतिर्विद्धि काल. परमार्थ इत्याह । तत्र । कालैक्ये मुहूर्त्तादिव्यवहारायोगात । तज्ज्ञानात्त्वपि न स्वातन्त्र्यम् । अन्यविषयत्वेन प्रतीते.। उदयकालइत्यादिनाक्रियाधर्मत्वेन प्रतीते. स्फुटत्वात् । नचक्रियाधर्मत्वं कालेपितदुत्पत्तिदर्शनात् । अन्यथाकाशानवच्छिन्नत्वेनक्रियानित्यत्वापातात् ॥ त्रि । अवसरज्ञे ॥

कालविभक्ति । स्त्री । मासर्त्त्वयनादौ ॥

कालहन्त. । पु । कुलत्थवृक्षे ॥

कालहन्ती । स्त्री । पाटलावृक्षे ॥

कालवेला । स्त्री । क्रियानर्हकालविशेषे ॥ यथा । पञ्चद्विषड्वह्निनगेन्द्रवेदद्विदन्तिनश्चापिदिवाऽथरात्रौ । षट्सूर्यरामाद्रिशराग्निचन्द्रनागाः स्तुव्यादिषु कालवेला इति ॥ कालश्चनेक्षत्वशामर्द्धरूपावेला ॥ इतिदीपिका ॥

कालशाकम् । न । नाडिकम् श्राद्धशाकम् कालकमितिपर्यायप्रसिद्ध शाकविशेषे । नरिका नरचा इतिगौडभाषा ॥ कालशाकंसरं रुच्यं वातकृत्कफशोफहृत् । बल्यरुचिकरं मेध्यं रक्तपित्तहरं हिमम् ॥

कालशालि. । पुं । कृष्णशालौ ॥

कालशेयम् । न । गोरसे । घोले ॥ कलश्याम् मन्थनपात्रे भवम् । इति कुक्षिकलशिवस्य ढञ्॥

कालसरोध । पुं । चिरकालावस्थाने ॥

कालसर्प्प । पु । कृष्णसर्पे । महाविषे ॥

कालसार । पु । कृष्णसारे मृगे ॥ न । पीतचन्दने । कालानुसार्य्ये । कालिया इतिगौडभाषा ॥

कालसूत्रम् । न । अयुतयोजनपरिमण्डले ताम्रमयेतप्तसमदेशे उपर्यधस्तादग्न्यर्काभ्यामतितप्यमाने नरके ॥ कुलालचक्रसूत्रच्छेदनरूपेण रके ॥

कालसेयम् । न । घोले ॥

कालस्कन्ध । पु । तमालवृक्षे ॥ तिन्दुकवृक्षे ॥ जीवकद्रुमे ॥ दुष्खदिरे ॥ उदुम्बरे ॥ काल स्कन्धो यस्य ॥

कालहानि । स्त्री । विलम्बे ॥

कालहीन । पुं । लोध्रे ॥

काला । स्त्री । कृष्णत्रिवृतायाम् ॥ कालयति । कलविक्षेपणे । ण्यन्त । पचाद्यच ॥ मञ्जिष्ठायाम् ॥ नीलिकायाम् ॥ कल्यते । कलक्षेपे । कर्मणि घञ् ॥ कृष्णजीरके ॥ अश्वगन्धायाम् ॥ पाटलावृक्षे ॥ कालियाकडा इतिगौडभाषाप्रसिद्धे कुलिकवृक्षे ॥ कालोवर्णोऽस्यास्ति । अर्शआद्यच ॥ गौर्य्याम् ॥ वर्णस्याविवक्षाया जानपदेतिन ङीष ॥

कालाचरिक । त्रि । शिक्षिताचार्य्ये ॥

कालाख्या । स्त्री । नवविधासु तुष्टिषु तृतीयायाम् ॥ यथा । प्रव्रज्यापिन सद्योनिर्वाणदेति सैवकालपरिपाकमपेक्ष्यसिद्धिंविधास्यति अलमुत्तलतयेत्युपदेशे यातुष्टि साकालाख्या ओघ उच्यते ॥

कालागुरु । न । कृष्णागुरुणि ॥ कालवनत अगुरुच ॥ अयंप्राग्ज्योतिषे भवतीतिप्रसिद्धि ॥

कालाग्निरुद्र । पुं । संहारकारिरुद्रे ॥

कालाग्नि । । पञ्चमुखे रुद्राक्षे ॥

कालाङ्ग । पु । काद्रवेयप्रभेदे ॥

कालाङ्गम् । न । कालपुरुषस्याङ्गे ॥ यथा मेष शिरोवृषोवक्त्रंमिथुनंबाहुयुग्मकम् । कर्कटोहृदयञ्चैवसिंहस्तूदरमेवच ॥ कन्याकटिस्तुलावस्तिर्वृश्चिकोगुह्यमेवच । धनुरूरूमृगोजानूकुम्भोजङ्घेप्रकीर्त्तिते ॥ मीनपादद्वयञ्चैव कालाङ्गानियथाक्रमम् ॥ इतिकालनरस्याङ्गेसदसद्ग्रहयोगत । पुंसामपितदङ्गेषु शुभाशुभफलंवदेदिति ॥

कालाञ्जनी । स्त्री । नीलाञ्जन्याम् । रेचन्याम् ॥

कालातीतः । पुं । कालात्ययापदिष्टे ॥ कालातिक्रमणे ॥ कालस्यअतीतम् ॥ त्रि । अतीतकाले ॥

कालात्ययापदिष्ट । पु । कालातीते । बाधितहेतौ । कालस्यसाधनकालस्य अत्यये अभावे अपदिष्टः प्रयुक्तोहेतु एतेनयस्यहेतोः साध्याभाव प्रमाणान्तरेण सिद्धः सकालात्ययापदिष्ट । यथा । वह्निरनुष्णः कृतकत्वात । अत्रानुष्णत्वसाध्यतदभावउष्णत्वम् तत्स्पर्शेन प्रत्यक्षेणगृह्यते इति ।

कालानल । पुं । प्रलयाग्नौ ॥

कालानुनादी । पु । भ्रमरे । रोदम्बे ॥ कलविङ्के ॥ कपिञ्जले ॥

कालानुसारिवा । स्त्री । तगरपादिके । तगरमूल इति भाषा ॥ शीतलाम् । शिउलीछोप इति गौडभाषा ॥

कालानुसारकम् । न । तगरे ॥ पीतचन्दने ॥

कालानुसारि । पुं । शैलेये । शैलज नामगन्धद्रव्ये ।

कालानुसार्य । पु । न । शैलेये ॥ कालीयके । गौडभाषया कालियाकाम पीतवर्णसुगन्धिकाष्ठे ॥ शिंशपावृक्षे ॥ तगरे ॥ कालेनअनुस्त्रियते । स्व गतौ । कर्मणिण्यत ।

कालानुसार्य्यकम् । न । शैलेये ॥

कालान्तरविष । पु । मूषिकादौ ॥

कालाप । पु । सर्पभोगे ॥ राक्षसे ॥ त्रि । कलापव्याकरणज्ञे ॥

कालापकम् । न । चतुर्णा छात्रानाम् समूहे ॥

कालायसम् । न । लौहे ॥ कालञ्चतत् अयश्च । अनोश्माय सरसांजातिसंज्ञयोरितिटच् ॥

कालायोनम् । न । कलायानाङ्क्षेत्रे ॥ कलायानाम् भवनंक्षेत्रम् । धान्यानाम्भवनेक्षेत्रेखञ् ॥

कालाशुद्धि । स्त्री । शुभकर्मानर्हसमये ॥ सायथा । शुक्रास्तिचारस्तुशशाङ्कलेगुरुशुक्रयोः । गुरौसकरसिंहस्थे क्षयमास धिमासयोः ॥ चयोदशादिनेपक्षेगुर्वादित्येतथैवच । लुप्ताब्दे विविधोत्पाते कालाशुद्धिरुदाहृतेति ॥

कालिक । पुं । क्रौञ्चविहगे ॥ न । कालीये । कृष्णचन्दने ॥ न । वैरे ॥ प्रकृष्टोदीर्घ कालोऽस्य । प्रकृष्टेठञ् ॥ त्रि । कालसम्बन्धिनि ॥ सामयिके ॥ कालेननिर्वृत्त । निर्वृत्तेऽक्षद्यूतादिभ्य इतिठक् ॥ कालेभवोवा । कालाट्ठञ् ॥

कालिका । स्त्री । गौर्य्याम् ॥ चण्डिकाभेदे ॥ काष्ठर्यै ॥ वृश्चिकपत्रवृक्षे ॥ क्रमदेयवस्तु मूल्ये ॥ धूसर्य्याम् ॥ नवमेघे ॥ पटोलशाखायाम् ॥ रोमाल्याम् ॥ मांस्याम् ॥ काक्याम् ॥ शिवायाम् ॥ मेघावलौ ॥ स्वर्णादिदोषे ॥ सुरायाम् ॥ क्षीरकीटे ॥ काकोल्याम् ॥ श्यामाख्यविहगे ॥ प्रतिमासीयवृद्धौ ॥ यथा । प्रतिमासंस्रवतिया वृद्धिः साकालिकामतेतिनारद ॥ कुज्झटिकायाम् ॥ हिमाचलभवायां त्रिशिरायां हरीतक्याम् । सागन्धयोगकरणे प्रशस्ताभवति ॥ कालोवर्णः समयश्चास्त्यस्या । अत इनिठनाविति ठन् ॥ स्वा० कन्वा । केण इति ह्रस्व ॥

कालिकापुराणम् । न । उपपुराणविशेषे ॥

कालिकाव्रतम् । न । अमावास्यायां स्त्रीकर्त्तव्येभविष्यपुराणोक्ते व्रतविशेषे ॥

कालिङ्ग । पु । भूमिकर्क्कारौ ॥ हस्तिनि । द्विपे ॥ सर्पे ॥ लोहविशेषे ॥ अस्यलक्षण यथा । कालिङ्गोलिङ्गवान् य स्यात घन'स्वच्छाङ्गकोमत इति ॥ कलिङ्गानां राजनि ॥ ह्यस्म गधकलिङ्गस्वरमसादृश ॥ न । कलिङ्गदातरबूज इतिख्यातेफलविशेषे । सुवर्त्तुले । कालिन्दके ॥ गुणा यथा । कालिङ्गं ग्राहिदृक्पित्तशुक्रघ्न च्छीतल गुरु । पक्वन्तु सोष्ण सक्षारं पित्तलं कफवातजिति ॥ कालिङ्गाः पुं भूम्नि । नीवृति ॥ कलिङ्गदेशमारभ्यपञ्चाष्टयोजनशिवे । दक्षिणस्याम हेशानिकालिङ्गा परिकीर्त्तिता. ॥

कालिङ्गिका । स्त्री । त्रिवृति ॥

कालिङ्गी । स्त्री । राजकर्कट्याम्

कालिदास । पु । विक्रमादित्यसभाया नवरत्नमध्यगणिते प्रसिद्धकविविशेषे । मेधारुद्रे ॥ काल्या दासः । ङ्यापो संज्ञाछन्दसोर्बहुलमिति ह्रस्व ॥

कालिनी । स्त्री । आर्द्रानक्षत्रे ॥ इति हेमचन्द्र. ॥

कालिन्दम् । न । } कलींदा इतिप्र-
कालिन्दकम् । न । } सिद्धे फलविशेषे । कालिङ्गे ॥

कालिन्दी । स्त्री । यमुनायाम् ॥ कलिन्दस्येयम् । तस्येदमित्यण् । ङीप् ॥ रक्तत्रिवृति ॥

कालिन्दीभेदन । पु । कालिन्दीकर्षणे । बलदेवे ॥ कालिन्द्या. भेदन' ॥

कालिन्दीसू । स्त्री । सूर्यपत्न्याम् । यमुनामातरि ॥

कालिन्दीसोदरः । पु । यमे ॥ कालि

॥ त्रि । प्राप्तकाले ॥ कालःप्राप्तोऽस्य । कालाद्यत् ॥

कालक । पु । कर्चूरे । द्राविडके ॥ कालेसाधु । तत्रसाधुरितियत् । स्वार्थे कन ॥

काल्यमान । त्रि । विचाल्यमाने ॥

काल्या । स्त्री । उपसर्याायाम् । गर्भग्रहणप्राप्तकालायाङ्गवि ॥ कालःप्राप्तोऽस्य । तदस्यप्राप्तमिति वर्त्तमाने कालाद् यत् ॥

कावचिकम् । न । तनुत्रिवाङ्गये ॥ कवचिनांसमूहः । ठञ्कवचिनश्च ॥

कावादः । पु । वाक्कलहे ॥ ईषद्वाद ईषदर्थेचेतिको कादेश ॥

कावारम् । न । शैवले ॥ आसमन्तात् वार्य्यते आच्छाद्यतेऽनेन । हलश्चु रादेः पुंसीतिघ. । यद्वाआवारयति व्रियते वा । हल० । अच । घञ्वा । कस्यजलस्य आवारम् ॥

कावारी । स्त्री । छत्रादिच्छत्रके । अमलत्वाम् । वारित्रायम् ॥ छत्राइति भाषा ॥

कावृक । पु । कुक्कुटे ॥ चक्रवाके ॥ पीतमुण्डखगे ॥

कावेरम् । न । कुङ्कुमे ॥

कावेरी । स्त्री । वेश्यायाम् ॥ हरिद्रायाम् ॥ सरिद्विशेषे ॥ कस्य जलस्य वेरं शरीरम् । तस्येयम् । तस्यद्दमित्यण् । ङीप ॥ ईषद्वेरमस्या वा ॥

काव्यः । पु । शुक्रे । दैत्यगुरौ ॥ न । ग्रन्थे । कविकृतौ ॥ अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमितिवामन ॥ तत्त्रिविधं यथा । सव्यङ्ग्यमुत्तमं काव्यं मध्यङ्ग्यमधमं स्मृतम् । किञ्चिद्व्यङ्ग्यसमायुक्तं मध्यम परिकीर्त्तितमितिकाव्यचन्द्रिका ॥ कवेरपत्यम् । कुर्वादिभ्योण्य. ॥ कवेरिदं कर्मभावो वा । ष्य० । ष्यञ् ॥ कु धातो. ओरावश्यके इति ण्यद्वा ॥

काव्यचौर । पु । चन्द्ररेखा ॥

काव्यलिङ्गम् । न । अर्थालङ्कारप्रभेदे ॥ अस्यलक्षणं यथा । हेतोर्वाक्य पदार्थत्वे काव्यलिङ्गमुदाहृतमिति ॥ काव्यलिङ्ग हेतोर्वाक्यपदार्थतेतिच ॥ यथा । वपु प्रादुर्भावा दनुमितमिद जन्मनि पुरा पुरारे न प्राय. क्वचिदपि भवन्तं प्रणतवान् । नमन्मुक्त सम्प्रत्यऽह मतनु रग्रेप्यनति भाग् महेश क्षन्तव्यं त दिदमपराधद्वयमपि ॥ अनेकपदार्थता यथा । प्रण यिसखीसलीलपरिहासरसाधिगतै र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् । वपुषि वधाय तत्र तव शस्त्र मुपक्षिपतः प

तत् शिरस्यऽकाण्डयमदण्ड इवैष भुज. ॥ एक पदार्थता यथा । अस्त्रो द्रुतनभड्गमस्तु भवते वक्त्राश्रमाले शुभं वा सोपानपरम्पराञ्च गिरिश्च ताकान्ताश्चयाञ्चकृतिम्। श्रवाराध नतोषितेन विभुना युष्मत्त पर्यासु खालोके च्छेदिनि मोक्षनामनि शवामोहे निधीयामहे ॥ एषु च पराधवये पूर्वापरजन्मनोरननमम् भुजपाते मक्षोपक्षेपो मवामोहे-सुखालोके च्छेदित्वस्व यथाक्रम-मुत्तरूपोहेतु' ॥

काव्या । स्त्री । पूतनायाम् ॥ बुद्धो ॥

काव्यार्थापत्तिः । स्त्री । अर्थालङ्कारप्र भेदे ॥ कैमुत्ये नार्थ संसिद्धि' काव्यार्थापत्तिरिष्यते । स जित स्वन्मुखेनेन्दु का वार्त्ता सरसीरुहाम् ॥ अत्र त्वन्मुखेन पद्मानि येन जितानि इति विवक्षितम् । तथाच सो-पिचेनजित स्तेन पद्मानिजितानीति किमुवक्तव्यमितिदण्ड। पूपिकान्यायेन पद्मजयरूपस्यार्थस्य संसिद्धि. काव्यार्थापत्तिः ॥ तान्त्रिकार्थापत्तिव्यावर्त्तनाय काव्यविशेषणम् । यथा वा । अधरोयमधीराक्ष्याबन्धुजीवप्रभाहरः । अन्यजीवप्रभाहन्तहरतीति किमद्भुतम् ॥ स्वकीयहृदयं भित्त्वा निर्गतौ यौ पयोधरौ । हृदयस्यान्यदीयस्य भेदने का कृपानयोः ॥

काशः । पुं । रोगविशेषे ॥ क्षुते ॥ पु । कण्ठकण्डूयने ॥ काँस इति प्रसिद्धे तृणविशेषे । इक्षुगन्धायाम् ॥ काशः क्षाम्नमधुरस्तिक्त' स्वादुपाकोहिम-सरः । मूत्रकृच्छ्राश्मदाहास्त्रक्षयपित्तजरोगजित् ॥ न । काशपुष्पे ॥ काशते । काशृदीप्तौ । पचाद्यच् ॥

काशक । पु । काशे । काँस इतिभाषा ॥

काशाल्मलि । स्त्री । कूटशाल्मलिवृक्षे॥

काशिः । स्त्री । देशविशेषे । काश्याम् ॥ काशते । काशृ° । सर्वधातुभ्य इन् ॥

काशिका । स्त्री । काश्याम् । नगराश्रयाने ॥ प्रकाशिकायाम् ॥ काश्येव । । स्वार्थे कन ॥ काशिकायाम् । काश्यादिभ्याष्ठञ्. । इकारउच्चारणार्थं ॥

काशिकाप्रिय । पुं । दिवोदासे । धन्वन्तरौ ॥

काशिकी । स्त्री । काश्याञ्जातायाम् ॥ काश्यांजाता तत्रभवा तत आगता इर्वा । काश्यादिभ्यष्ठञ्ञिठाविति ठञ् । ङीप् ॥

काशिराजः । पुं । नृपतिविशेषे । धन्व

न्तरौ। सुषोङ्गबे ॥ काश्या राजा । राजाहः सखिभ्यष्टच् ॥

काशी। स्त्री। वाराणसीम्। तप स्थ स्याम्। अविमुक्ते। आनन्दवने॥ मुने प्रलयकालेऽपि न तत् क्षेत्र कदाचन। विमुक्तं न शिवाभ्यां यद् विमुक्तं ततोविदुः॥ न यदाभूमिवलय न यदापां समुद्भव। तदा विहर्तुं मीशेन क्षेत्र मेत द्विनिर्मितम्॥ इत्यगस्त्यम्प्रतिस्कन्दवचनम्॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका। पुरीद्वारावती चैव सप्तैता मोक्षदायिका॥ एतास्तु पृथवीमध्ये न गण्यन्ते कदाचन। पुरीद्वारावतीविष्णो पाञ्चजन्यो परिस्थिता॥ एताश्च मुक्तिदा सर्वा एकचगणिता.सुरै। यानि यानिच क्षेत्राणि काशीप्राप्तिकराणिषट॥प्राणिना मिह मोक्षार्थं महाकारुणिक.शिव.। तारोपदेशं कुरुते इत्याहु शास्त्रकोविदा। यथोक्तं रुद्रयामले। काशीपुरीपरिसरे सुरसिन्धुतीरे कर्णे जपत्यनुदिनकिल देहभाजाम्। मोक्षार्थमेव दयया शशिखण्डमौलि श्रीशक्तिबीजमघ सुरसंघसेव्यमिति॥ तत्र वैष्णवेभ्योराममन्त्रस्तथैवेभ्यःपञ्चाक्षरस्य

बृहज्जाबालोक्तया शाक्तेभ्य शक्तिवीजस्त्रभुवनेश्वरीमन्त्रस्य यतिभ्य प्रणवस्येतिव्यवस्था॥सदा कृतयुगञ्चास्तु सदा चास्तूत्तरायणम्। सदा महोदयश्चास्तु काश्यां निवसतां सताम्॥लोलार्ककेशवौ कोटी गङ्गा ज्या नगरधनु। कलि र्लक्ष्य शरो धर्म्मं शिवोधन्वी पुनातु माम्॥ अथवा सर्वक्षेत्राणि काश्या सन्ति नगोत्तम। तत्र नित्यं वसेन नित्यं देवीभक्तिपरायण.॥ तानि स्थानानि सम्पश्यन जपन् देवीं निरन्तरम्। ध्याय स्तच्चरणाम्भोजं मुक्तोभवति बन्धनादितिदेवीगीता देवीभागवते॥ काशते। काशृदीप्तौ। पचाद्यच। गौरादित्वान् ङीष्॥

काशीनाथ.। पु। विश्वेश्वरे। शिवे॥

काशीराज। पु। शिवे॥ धन्वन्तरौ॥ काश्या राजा। टच॥

काशीशम्। न। धातुकाशीशे। काशीकसीति प्र० उपधातुविशेषे॥ तद्द्विविधम्। हरिद्वर्णं लोहितञ्च धातुकाशीशमिष्यते। शुक्लवर्णं तथाकृष्णम्पुष्पकाशीशमुच्यते॥

काशूकार। पु। गुवाके॥

काश्मरी। स्त्री। गम्भार्याम्॥ काशते। काशृ०। अन्येभ्योपीतिमनिन्। व

रमति शुष्कं यत मुष्टिमध्येसमेष्य ति। तत् काष्ठङ्काष्ठमित्याहु खदि रादिसमुद्भवम् ॥ काशते। काशृ० । हनिकुषीत्यादिना क्थन। शश्चेति षत्वम् । तितुत्रेतिनेट ॥

काष्ठकम् । न । अगुरुणि ॥

काष्ठकदली। स्त्री। वनकदल्याम्। शि लारम्भायाम्। काठकेला इतिभाषा॥

काष्ठकीटः । पु । घुणे ॥

काष्ठकुट्ट । पु । शतच्छदखगे। खुटक बढैया इति भाषा ॥

काष्ठकुद्दालः । पुं । अभ्याम् । नौकादेर्मलापनयनार्थंकाष्ठघटितकुद्दाले ॥ कमुद्दालयति । दलविदारणे। कर्मण्यण्। शकन्ध्वादि । काष्ठस्य कुद्दाल. ॥

काष्ठजम्बू । स्त्री । भूमिजम्ब्वाम् ॥

काष्ठातट् । पु । वर्णसङ्करजातिविशेषे। रथकारे। वर्द्धकौ। बढइ इति भाषा ॥ काष्ठं तक्षति। तक्षूतनूकरणे क्विप। काष्ठतक्षौ। काष्ठतड्भ्यामि त्यादिरूपाणि ॥

काष्ठतक्षक.। पुं। रथकारे। तक्षणि॥ काष्ठंतक्षति। तक्षू०। ण्वुल् ॥

काष्ठतन्तु।पु।कोषकारे। काष्ठकृमौ॥

काष्ठदारु.। पु। देवकाष्ठे ॥

काष्ठद्रु'। पुं। पलाशवृक्षे ॥

काष्ठधात्रीफलम् । न । आमलके ॥

काष्ठपाटला।स्त्री। सितपाटलिकाया म्॥

काष्ठमठी। स्त्री। चितायाम्॥ इति त्रिकाण्डशेष' ॥

काष्ठमल्ल । पु। शवयाने। अर्थी इति भाषा॥

काष्ठमौनम् । न । इङ्गितेनापिस्वाभिप्रायाऽप्रकाशने॥

काष्ठलेखक । पु। घुण॥

काष्ठलोही । पु। काष्ठलोहमयगदे। वातर्द्दौ ॥

काष्ठवल्लिका। स्त्री। कटुकायाम् ॥

काष्ठशारिवा। स्त्री। शारिवायाम्। अनन्तमूल इतिगौडभाषा ॥

काष्ठा। स्त्री। दारुहरिद्रायाम्॥ स्थितौ। स्थानमात्रे॥ दिशि । आशायाम्॥ उत्कर्षे। प्रकर्षे ॥ मर्यादायाम्। सीमनि ॥ निष्ठायाम् ॥ पर्यवसानभूमौ ॥ अष्टादशनिमेषात्मके काले ॥ दशक्षणपरिमितेकाले ॥ काशते। काशृ०। हनिकुषिनीरमिकाशिभ्य' क्थन्। शश्चेतिषत्वम्। टाप् ॥

काष्ठाम्बुवाहिनी। स्त्री। द्रोण्याम्। काष्ठादिकृतच्छिद्राशनौकाकृतिजलसेचन्याम् ॥ पुन' पुनरम्बु वहति। व

कुलमाभीषणद्रतिमिति: । काष्ठस्य भग्नवाचिनी । काष्ठेत्युपलक्षणम् । शिलामथ्या अपिद्रोणीत्वात् ॥

काष्ठालुकम् । न । काठिन्ययुक्ते कन्दविशेषे ॥

काष्ठील' । पु । राजार्के ॥

काष्ठीला । स्त्री । कदल्याम् ॥ काष्ठिला इत्यत्रे । इत्यत्रमक्षेपणवो' । यज् ॥ काईपत् अष्ठीलमस्यावा ॥

काष्ठोदुम्बरिका । स्त्री । काकोदुम्बरिकायाम् ॥

कासः । पु । खाँसीति प्रसिद्धे रोगे । भवयो ॥ पञ्चकासा स्मृतावातपित्तश्लेष्मक्षतक्षयैः । क्षयायोपेक्षिता: सर्वेबलिनश्चयथोत्तरम् ॥ कासते अनेन । काशृशब्दकुत्सनयोः । हलश्चेतिघञ् ॥

कासकन्दः । पु । कोकयादेश प्रसिद्धे । कासाखेर । विग्रहवपत्रे ॥

कासघ्नः । पुं । मोदकविशेषे ॥ यथा । हरीतकीकणाशुण्ठीमरिचंगुडसयुतम् । कासघ्नोमोद्कः प्रोक्तस्तृष्णारोचकनाशनइति ॥

कासघ्नी । स्त्री । कण्टकार्याम् ॥

कासजित् । स्त्री । भार्ग्याम् ॥

कासनाशिनी । स्त्री । कर्कटशृङ्ग्याम् ॥

कासन्दीवटिका । स्त्री । वेसवारविशेषे ॥

कासमर्दः । पु । कासकासुन्दा इतिगौडभाषाप्रसिद्धे गुल्मप्रभेदे । अरिमर्दे । जरणे ॥ पु । न । कासुन्दी इतिगौडभाषाप्रसिद्धे वेसवारे ॥ पेषितजलसिक्तसर्षपगन्धितवेसवार इतिभाकराजेन्द्रः ॥

कासमर्दृदलम् । न । कसौन्दी इतिख्यातशाके ॥ कासमर्दृदलंवल्यंवृष्यं कासविषास्रनुत् । मधुरंकफवातघ्नंपाचनंकण्ठशोधनम् ॥ विशेषतः कासहरंपित्तघ्नंग्राहकंलघु ॥

कासमर्दन' । पुं । पटोले ॥

कासरः । पु । महिषे ॥ केमलंसरति खगतौ । अच् ॥ यद्वा ॥ कुईषत्सरति । स्थूलकायत्वात् । ईषदर्थेकेतिको, कादेशः ॥

कासवा । पुं । काथविशेषे ॥ यथा । कण्टकारीकृतः काथः सकृष्णः सर्वकासहेति ॥

कासारः । पुं । सरोवरे । सप्तोशिष्यप्रोक्तसप्ताक्षराश्रये ॥ कुत्सितेपथ्याकरे ॥ कासते । काशृशब्दे । तुषाराद्वित्वेप्यारन् ॥ यद्वा ॥ कुईषत्सारोऽस्य । ईषदर्थेतिकोः कादेशः । अर्शआद्यच् ॥ यद्वा । केकलो

नसार । अन्येषामपीति दीर्घः । आड प्रश्लेषो वा ॥ कासयत्यन्यति । कासृ गतौ । कर्मण्यण् वा ॥

कासारम् । न । कसार इतिख्याते प क्वान्नविशेषे ॥ तत्प्रकारो यथा । घृतेतप्ते विनि क्षिप्य कनिक्का माच येन्मनाक् । ततस्तत्रविनि क्षिप्य ख ण्डभागसम पचेत् ॥ ततश्चाकृष्यत न्त पात्रे क्षिप्ता सम्यक्सुक्षिप्ते । च तुरस्रीकृतंश्चेतत् भवेत् कासार सञ्ज्ञकम् ॥ कासारं रुचिदं श्रेष्ठं नाति रूक्षमपिच्छिलम् । कृश्वासकफपित्त घ्नं विष्टम्भरुचिकारकम् ॥ प्रक्षिप्य माषशृङ्गाटकगोधूमा पृथक् पृथक् । शालूकश्चचकर्त्तव्य कासार खण्डस र्पिषा ॥

कासारि । पु । कासमर्दे ॥ आलूके ॥

कासालु । पु । कोकणादेशप्रसिद्धे आ लुविशेषे । कासकन्दे ॥

कासीसम् । न । हीराकसी इतिगौड भाषा प्रसिद्धे उपधातुविशेषे । भस्म वन्मृत्तिकाख्याकासीसमितिपरीचि ते धातुकासीसे । खेचरे । धातुशेख रे ॥ कासीस धातुकासीस पांशुका सीसमित्यपि । तदेवकिञ्चित्पीत स्तुपुष्पकासीसमुच्यते ॥ कासीस म म्लमुष्णञ्च तिक्तञ्च तुवर न्तथा । वातश्लेष्महर केश्य नेत्र्य कण्डूविषप्र णुत । मत्र कृच्छ्राश्मरी श्वित्र नाशनम रिकीर्तितम् ॥

काहू । स्त्री । विकलवाचि ॥ शक्त्याख्ये ॥ बृहती ॥ कजि ॥ कसति । कसग तौ । शितकसिपद्यर्त्तेरिच्यू ॥

काहूतरी । स्त्री । शक्त्याख्ये आयुधे ॥ ह्रस्वाकाहू ॥ काहूगोणीभ्याष्टरच । ङीष् ॥

काहका । स्त्री । काहलावाद्ये ॥

काहल । पु । कुक्कुटे ॥ शब्दमात्रे ॥ रु द्रकुक्कावाम् । महानादे ॥ बिडाले ॥ न । अव्यक्तवाक्ये ॥ त्रि । शुष्के ॥ भ्रष्टे ॥ खले ॥

काहला । स्त्री । वाद्यभाण्डविशेषे । काहली इति हिमगिरौप्रसिद्धा या ध्वनिनालायाम् ॥ अप्सरःप्रभे दे ॥

काहलापुष्प । पु । धुस्तूरे ॥ काहले वपुष्पाण्यस्य ॥

काहली । स्त्री । तरुण्याम् । दिक्कर्थ्याम् ॥

काहारक । पु । कहार इति प्रसिद्धे शिविकावाहकजातिविशेषे ॥ यथा । तथा गारुडिका वीरा. क्षुरकर्मोप जीविका. । व्याधा काहारका पुष्टाः कृष्णा संवाहयन्ति ये इति जैमिनि भारते आश्वमेधिके पर्वणि १० अध्या

य ॥

किंवदन्ति । स्त्री । जनश्रुतौ ॥ कोपि वाद । किम्पुरोद्वदे भुवोभिच । बाहुलकाद्वदेरपि । ततोङीषविकल्प ॥

किंवदन्ती । स्त्री । जनश्रुत्याम् । सन्ये असत्येवालोकवादे ॥ कोपिवाद । किम्पुरोवदे तूभूर्वाश्वसीति बाहुलकाज्झच् । भोन्त । गौ० ङीष् ॥

किंवा । अ । विकल्पे । अथवा ॥

किंशारु । पुं । सस्यशूके । धान्याग्रभागे ॥ वाणे ॥ कङ्कपक्षिणि ॥ किञ्चित् कुत्सितं वा । शृणाति । शृहिंसायाम् । किञ्जरयोःश्रिण इतिञ्जुण् ॥

किंशुक । पुं । पलाशवृक्षे ॥ नन्दीवृक्षे ॥ किञ्चित् शुकइव । शुकतुण्डाभपुष्पत्वात् ॥

किंशुलुक । पुं । पलाशवृक्षविशेषे ॥

किंसखा । पुं । कुत्सिते सखौ । दुर्मन्त्रिणि ॥ कुत्सितः सखा । किमःक्षेपइ समासः । नसमासप्रतिषेधः ॥

किकि । पुं । किकिदिवे । चाषे ॥ नारिकेले ॥

किकिदिव । पुं । }
किकिदिवि । पुं । } चाषखगे ॥

किकिदीव । पुं । चाषविहगे ॥ मोक्ष कराठे ॥

किकिदीवि । पु । नीलकण्ठ इति गौड भाषाप्रसिद्धे स्वर्णचातके । चाष पतत्त्रिणि ॥ बाहुलकाद्ध्रस्वदीर्घयोर्विनिमय ॥

किकीदिव । पु । किकिदिवो ॥ किकिदीविकिकीदिवाविति द्विरूपकोषादकारान्तोपि ॥

किकीदिवि । पु । चाषे ॥ किकीति दीव्यति वासते । दिवुक्रीडादौ । कृविघृष्विच्छविश्वविकिकीदिविरिति साधु ॥

किकीदीव । पुं । }
किकीदीवि । पु । } चाषपक्षिणि ॥

किखि । पुं । वानरे । कपौ ॥ स्त्री । फेरौ । लघुशृगाले । लोमशी इति भाषा ॥

किङ्कर । त्रि । दासे । सेवके ॥ विप्रस्यकिङ्करोभूपो वैश्यो भूपस्यभूमिप । सर्वेषाकिङ्करा शूद्रा ब्राह्मणस्यविशेषत ॥ किञ्चित् कुत्सितंवाकरोति । दिवाविभेत्यत्रकियत्तद्बहुष्वित्यच् ॥

किङ्करा । स्त्री । दास्याम् ॥ अजाद्यतष्टाप् ॥

किङ्करी । स्त्री । दास्याम् ॥ किङ्करस्य स्त्री । पुंयोगादाख्यायामितिङीष् ॥

किङ्किणी । स्त्री । क्षुद्रघण्टिकायाम् । घाघर इति गौडभाषा प्रसिद्धे क्ष्याभरणविशेषे । करधनी कौंधनी इति भाषा ॥ किञ्चित किणाङ् करोति । किणशब्दात् तत् करोतीति णयन्तात् अच । गौ० ङीष् ॥ विकङ्कतद्रुमे ॥

किङ्किणीका । स्त्री । क्षुद्रघण्टिकायाम् ॥ चङ्कणने । कणशब्दे । अस्मात् यङलुगन्तात चङ्किण किङ्किणचेत ईकन । धातो किङ्कणादेशश्च ॥

किङ्कि । पु । कोकिले । भ्रमरे ॥ हये ॥ कामदेवे ॥ न । गजकुम्भे ॥

किङ्किरा । स्त्री । क्षतजे । रुधिरे ॥

किङ्किरात । पु । अशोकद्रुमे ॥ कामदेवे ॥ रक्ताम्लाने ॥ शुके ॥ पिके ॥ पुष्पविशेषे ॥ हेमगौरे । पीताम्लाने ॥ अस्य गुणा । किङ्किरातो हिमस्तिक्त कषायश्च हरेद्ध्वे । कफपित्तपिपासास्रदाहशोषवमिकृमीनिति ॥

किङ्किराल । पुं । वर्वुरवृक्षे ॥

किङ्किरी । पु । विकङ्कते । स्रुवावृक्षे । बुइचि इतिगौडभाषा ॥

किञ्च । अ । आरम्भे ॥ साकल्ये ॥ सम्भावनायाम् ॥ किम्च चचेति विग्रह ॥

किञ्चन । अ । अकात्स्न्ये । असाकल्ये । कल्पे ॥

किञ्चन । पु । हस्तिकर्णपलाशे ॥

किञ्चित । अ । स्वल्पे । ईषत् । मनाक् ॥ इदन्तयानिर्देष्टुमशक्ये ॥ किञ्चिच्च अनयो. समाहार ॥

किञ्चिलिक । पुं । } किञ्चुलुके ॥
किञ्चुलिका । स्त्री । }

किञ्चुलुक । पु । केचुआख्ये कीटविशेषे । गण्डूपदे ॥ किञ्चिच्चुलुम्पति । कास्यनेकाजग्रहणाच्चुलुम्पाद्यर्थमितिवार्त्तिकनिर्दिष्टश्चुलुम्पधातु. । अन्येभ्योपीतिड । टेरिति डकार लकारपकाराणा लोप । तत. स्वार्था कन् ॥

किञ्जम् । न । } किञ्जल्के ॥
किञ्जल । पु । }

किञ्जल्क । पु । केसरे । पुष्परेणौ ॥ किञ्जल्क शीतलो रूक्ष कषायो ग्राहकोपिस: । कफपित्ततृषादाहरक्तार्शोविषशोथजित् ॥ पद्मकिञ्जल्क इतिशेष. ॥ किञ्चिज्जलति । जलअपवारणे । बाहुलकात्क ॥ न । नागकेशरपुष्पे ॥ पद्माभ्यन्तरस्थे केशाकारे कण्टकवेष्टने केसर इतिख्याते । पीतपरागे ॥

किञ्जल्कविभेद । पु । केसरापगमे ॥

म्भावितानाम् । इति प्राचीनाः ॥

किन्तुघ्न । पु । ववाद्येकादशकरणान्तर्गतशेषकरणे ॥ तत्रजातस्य फलम् । मित्रामित्रे नैवकिञ्चिद्विशेषो धर्माधर्मे तुल्यता मानवस्य । लोके वादे सर्वदाप्रीतियुक्तः किन्तुघ्नाख्येयस्य नूनं जनि स्यादितिकोष्ठीप्रदीप ॥

किल्की । पुं । } घोटके । अश्वे ॥ ना
किल्थी । पु । } लावेतौ ॥

किन्नर । पु । किम्पुरुषे । मयौ । अश्वमुखदेवयोनिनरविग्रहे देवगायने ॥ किञ्चिन्नरः अश्वमुखत्वात् । कुत्सितोवा नरः किन्नरः । किंक्षेप इति समास । कुत्साच कस्यचिन्नरमुखाश्वकायत्वात् कस्यचिदश्वमुखनरशरीरत्वात् ॥ अर्हदुपासकविशेषे इति हेमचन्द्र ॥

किन्नरेश । पु । वैश्रवणे । कुबेरे ॥ किन्नराणामीश ॥

किन्नरेश्वर । पु । कुबेरे । नरवाहने ॥

किन्नु । अ । प्रश्ने ॥ वितर्के ॥ स्थाने ॥

किम् । अ । कुत्सायाम् । गर्हणे ॥ वितर्के ॥ निषेधे । प्रश्ने । प्रकारे । क्रूयते कायति । शब्दे । बाहुलकात् डिम् । कायतेर्डिमिर्वा ॥ ईषदर्थे ॥ अतिशये ॥

क । चि । क्षेपे ॥ वितर्के ॥ निन्दायाम् ॥ परिप्रश्ने ॥ कानम् कायति वा । कै शब्दे । कायतेर्डिमि ॥ स्त्री । का । न । किम् ॥

किमिच्छक । पुं । मार्कण्डेयपुराणोक्ते व्रतविशेषे ॥

किमु । अ । सम्भावनायाम् ॥ विमर्शे ॥ किम् च उच ॥

किमुत । अ । किमुतार्थे ॥

किमुत । अ । प्रश्ने ॥ वितर्के ॥ विकल्पे अतिशये ॥ किञ्च तदुत च । समाहारोवा ॥

किमूत । अ । वितर्के ॥ किम् च ऊतच अनयो समाहार ॥

किम्पच । त्रि । किम्पचाने ॥ किम्पचति । पचाद्यच । किंक्षेप इतिसमास ॥

किम्पचान । त्रि । कृपणे ॥ किञ्चित् पचति । औणादिकआनजितिस्वामी ॥ किम्पचति । ताच्छील्येति चानशानत्वा । अनिन्त्यमागमशासनमितिनमुक् । किंक्षेपइतिसमास ॥

किम्पाक । पु । माकाल इतिगौडभाषाप्रसिद्धमहाकाललतायाम् ॥ तत्फले ॥ त्रि । अज्ञे ॥ मातृशासिने ॥

किम्पुरुष । पु । किन्नरे ॥ किञ्चित् कुत्सितो वा पुरुष । किंक्षेपइतिसमा

ऽन्योनैपाल सोऽऽइंतिकोऽन्वराऽन्तक. ॥ किरातएव । स्वार्थेक. ॥

किराततिक्त । पु । चिरायता इतिप्रसिद्धे वृक्षे । भूनिम्बे । अनार्यतिक्ते ॥ किरातदेशे अस्ति जन्मस्थान मस्य । अर्शआद्यच । किरातस्यावैाति क्तश्च ॥

किराताशी । पु । गरुडे ॥

किराति । स्त्री । गङ्गायाम् ॥ इतिजटाधर ॥

किरातिनी । स्त्री । जटामांस्याम् ॥

किराती । स्त्री । दुर्गायाम् ॥ गङ्गायाम् ॥ कुट्टन्याम् ॥ चामरधारिण्याम् ॥

किरि. । पु । भूदारे । शूकरे ॥ किरति । कृविक्षेपे । कृगॄशॄपॄकुटिभिदिच्छिदिभ्यश्चेति इप्रत्यय ॥ इकृकृष्यादिभ्य इति भावे इग्वा ॥

किरिटि । न । तिन्ताकफले ॥

किरीट । पु । न । मुकुटे ॥ किरति कीर्यतेऽनेनवा । कृ० । कृतॄकृपिभ्य. कीटन । शिरोवेष्टने ॥

किरीटी । पु । अर्जुनपाण्डवे ॥ चि । किरीटवति ॥ किरीटोऽस्यास्ति । इनि: ॥

किरीटमाली । पु । अर्जुने ॥

किर्म्मी । स्त्री । पलाशे ॥ शालायाम् ॥ हेमपुत्त्याम् । स्वर्णपुत्तलिकायाम् ॥ लोहपुत्तलिकायाम् ॥

किर्म्मीर. । पु । नागरङ्गवृक्षे ॥ राक्षसविशेषे ॥ कर्बुरे ॥ चि । कर्बुरवर्णवति ॥ कीर्यते । कृवि० । बाहुलकात कृशॄपॄकटिपटिशौटिभ्यईरन्निति ईरन मुडागमश्च ॥

किर्म्मीरजित् । पु । भीमसेने ॥

किर्म्मीरत्वक् । स्त्री । नारङ्गवृक्षे ॥

किर्म्मीरभित । पु । भीमसेने ॥ किर्म्मीरम् भिनत्ति । भिदिर० । क्विप ॥

किर्म्मीरसूदन । पु । भीमसेने ॥ किर्म्मीर सूदयति सूदितवान वा । सूदक्षरणे । नन्द्यादित्वात् ल्यु ॥

किल । अ । वार्त्तायाम् ॥ सम्भाव्ये ॥ अनुशयार्थे ॥ निश्चये ॥ प्रसिद्धामभावद्योतके ॥ सत्ये ॥ हेतौ ॥ अरुचौ ॥ अलीके ॥ न्यक्करणे ॥ किलति । किलश्वैत्ये । इगुपधेति क. ॥

किलकिञ्चितम् । न । स्त्रीणाविलासविशेषे । इष्टजनदर्शनहर्षवशात शुष्करुदितहसितत्रसितक्रोधश्रमाभिलापाना सङ्करकारकरूपे भावे । शृङ्गारमात्रजातक्रियायाम् ॥ तल्लक्षण यथा । हर्षाद्रुदितगीतादिभ्याभि श्रंकिलकिञ्चितमिति ॥ क्रोधाश्रुह

करम् ॥

किशल: । पु । न । पल्लवे ॥

किशलय । पुं । न । पल्लवे ॥ किञ्चित् शलति । शलचलने । वा० कयन् । पृ० ॥

किशोर । पु । अश्वशिशौ ॥ तैलपर्णौषधौ ॥ सूर्ये ॥ तरुणावस्थे । दशवर्षोर्द्धं आपञ्चदशवर्षके ॥ यथा । किञ्चिच्छूर. किशोर.स्यात्ततो हि दृगमात् परम् । शूरश्चंद्रश्यते किञ्चिदनुरुद्धंदिने दिने इति ॥ चि । कैशोरावस्थायुक्ते ॥ कशति । कशशब्दे किञ्चित् शवतिवा शुगतौ शवगतौवा किञ्चित् शृणातिवा । शृहिंसायाम् । किशोरादयश्चेति साधु ॥

किशोरी । स्त्री । किशोरावस्थायुक्तायाम् ॥ तरुण्याम् ॥ किशोरात् वयसिप्रथम इतिङीप ॥

किष्कन्द । पु । ओड्रदेशस्थशैलविशेषे । स्त्री । तत्रस्थगुहायाम् ॥

किष्किन्धा । स्त्री । गन्धमादनगुहायाम् ॥ पुरीविशेषे ॥ सापूर्वं वालिवानरस्य राजधान्यासीत् । श्रीरामो वालिनं हत्वा तां सुग्रीवायदत्तवान् ॥ किङ्किन्दधाति । डुधाञ्० । आत इति क । पारस्करादित्वात् पूर्वस्य किमो मलोप सुट् षत्वञ्च निपात्यते ॥

किष्कन्धाधिप । पु । वालिवानरे ॥

किष्कु । पु । स्त्री । वितस्तौ । द्वादशाङ्गुलपरिमाणे ॥ प्रकोष्ठे । कफोणिरघोमणिबन्धपर्यन्ते ॥ करे । हस्ते ॥ चतुर्विंशत्यङ्गुलेमाने ॥ त्रि । कुत्सिते ॥ कायतेऽनेन । कैशब्दे । मृगय्वादित्वात् कु । पारस्करादित्वात् साधु ॥

किष्कुपर्वा । पु । वृक्षौ ॥ वंशे ॥ पोटगले ॥

किसरम् । न । सुगन्धिद्रव्यविशेषे ॥

किसरिक । त्रि । वणिग्विशेषे । किसरवणिजि ॥ किसरपण्यमस्य । किसरादिभ्यष्ठन । षित्वात् ङीष् । किसरिकी ॥

किसलय । पु । न । पल्लवे । नवीनपत्रे ॥ नवपत्रादियुक्तशाखाग्रपर्वणि नवपत्रस्तवके ॥ किञ्चित्सलति । षलगतौ । वा० कयन् । पृ० ॥

की । अ । कुत्सायाम् ॥

कीकट । पु । अश्वे । घोटके ॥ कीकटा । गयाप्रदेशे ॥ यथा । चरणाद्रि समारभ्य गृध्रकूटान्तकं शिवे । तावत्कीकटदेश.स्यात् तदन्तर्मागधोभवेत् ॥ पश्यमगधम् । बिहारनाम्ना प्रसिद्धे देशे इति केचित् ॥ त्रि । कृपणे ॥ निर्धने । निःस्वे ॥

कीकश । पु । चण्डाले ॥ की इति क शति कशशब्दे ॥ पचाद्यच् ॥

कीकस. । पु । कृमिजातौ ॥ न । अ स्थिनि ॥ त्रि । कर्कशे ॥ कीतिकसति कसगतौ ॥ पचाद्यच् ।

कीकसास्यः । पु । पक्षिणि ॥ इतिधारा वली ॥

कीचक. । पु । दैत्यविशेषे ॥ राक्षसवि शेषे ॥ द्रुभेदे ॥ नखे ॥ केकयनृपात्म जे । विराटराजश्यालके ॥ विपुलाकारा चगर्भे तेणुजातौ ॥ अनिलयोगात् शब्दायमानवंशे ॥ चीकति शब्दायते । चीकमर्दने । वु० । चीकयते रा न्ध्रविपर्ययश्चेति वुन् ॥ यद्वा । की चयस्त शब्दं चकति । चकतृप्त्यादि ' अच् ॥ कीचेत्यव्यक्तं कायति वा । । मू० कः । अन्येष्वपीति डः वा ॥

कीचकजित् । पु । भीमसेने ॥ कीच कमजैषीत् । जी० । क्विप् । तुक् ।

कीचकभित् । पु । वृकोदरे । भीमसे ने ॥ कीचकम भिनत्ति । भिदिर्०। सत्सूद्विषेति क्विप् । तुक् ॥

कीटः । पु । कृमिः । शिखितत्सूक्ष्मचुर अनुमाने ॥ कीटति । कीट० । अच् ॥

कीटक । पुं । कृमिजातौ ॥ मागधजा तौ ॥ त्रि । निष्ठुरे ॥ स्वार्थे क. वा [illegible] ।

कीटघ्न । पु । गन्धके ॥ कीटहन्ति । हन् ० । अमनुष्यकर्तृकेचेतिटक् ॥

कीटजा । स्त्री । अतुनि । लाक्षायाम् ॥ कीटेभ्योजाता । जनी० । ड ॥

कीटपादिका । स्त्री । हंसपदीवृक्षे ॥

कीटमणि । पुं । खद्योते ॥ कीटेषुम णिरिव ॥

कीटमाता । स्त्री । हंसपदीवृक्षे ॥

कीटमारी । स्त्री । हंसपदीवृक्षे ॥

कीटमेष । पुं । मगधिका इतिप्रसि द्धे कीटे । अयंनदीतीरेसिकतास्व वतिष्ठति ॥

कीटसंज्ञक । पुं । राशिविशेषस्य संज्ञा याम् । मकरान्ताद्धं कर्कटमीन वृश्चि काश्च कीटाख्याः ॥

कीटेर । पुं । तपस्वीयशाके ॥

कीदृक्ष । त्रि । }
कीदृश । त्रि । } किंप्रकारे ॥

कीनाशः । पुं । यमे । कृतान्ते ॥ यथा । किङ्कीनाश पाशधर गर्जसि मामु पगम्य शासभर गर्जसि । हरिचरणं शरणं नहि पश्यसि यन्नामस्मरणा दपिनश्यसीति ॥ वानरविशेषे ॥ त्रि । कर्षके ॥ क्षुद्रे ॥ पशुघातिनि ॥ की ष्यव्ययक् कुत्सायाम् । की कुत्सितं नाशयति । पचाद्यच् ॥ यद्वा । क्लिश्ना ति क्लिश्यतेवा । क्लिशूविबाधने क्लि

शवर्चेवा । क्लिशेरीत्त्वोपधाया' कन् लोपश्चलोनाम् चेतिकन् उपधाया ईत्त्वम् ललोपोनामागमश्च ॥

कीर । पु । शुके । मेधाविनि । फला शने ॥ कीरा' । पुभूम्नि । कश्मीरदेशे ॥ न । मांसे ॥ कीति ईरयति । ईर० । णिजन्त । अच् ॥

कीरकः । पु । वृक्षविशेषे ॥ चपलके ॥ प्रापणे ॥ शुकशावके ॥

कीरवर्णकम् । न । स्थौणेयकनामनि सुगन्धिद्रव्ये ॥

कीरेष्ट । पु । अक्षोटवृक्षे ॥ आम्रद्रुमे ॥ जलमधूकवृक्षे ॥ कीराणामिष्ट ॥

कीर्ण. । त्रि । दत्ते ॥ आच्छन्ने ॥ विक्षिप्ते ॥ हते । हिंसिते ॥ कीर्यतेस्म । कॄ० । क्त' । नत्त्वणत्वे ॥

कीर्त्तनम् । न । उक्तौ । कथने ॥ का लायास्तुयुत्तमपीच्छन्तीति जातियूतीच्चप्रसादकार' ॥

कीर्त्तना । स्त्री । यशसि ॥

कीर्त्तयन् । त्रि । कथयति ॥ कृतेर्लट. शत्रादेश ॥

कीर्त्ति' । स्त्री । प्रसादे ॥ विस्तारे ॥ कर्दमे ॥ शब्दे ॥ दीप्तौ ॥ मातृकाविशेषे ॥ यशसि । समज्ञायाम् ॥ धार्मिकत्वनिमित्तायां प्रशस्तत्वेन नानादिग्देशीयलोकज्ञानविषय - ताद्रूपायांख्यातौ ॥ परोक्षख्यातौ । मृतख्यातौ ॥ यस्य कीर्त्तिर्हता लोके धिक् तस्यैव कुजीवितम् । दानादिप्रभवा कीर्त्तिः शौर्यादिप्रभवं यश. ॥ कीर्त्तिं स्वर्गफलामाहुरासंसारं विपश्चित । अकीर्त्तिन्तु निरालोकनरकोद्देशदूतिकाम् ॥ तस्मात्कीर्त्तिमुपादद्यादकीर्त्तिञ्च - व्यपोहयेत ॥ सुकर्मपत्नी संसिद्धा कीर्त्तिर्धन्यैश्चपूजिता । ययाविना जगत्सर्वंयशोहीनंमृतंयथा ॥ कीर्त्यते । कृतसंशब्दने । ऊतियूतीतिनिपातनात् साधु । कीर्त्तनम् । कीर्त्ति. धीम । कृपिशिकर्क्त्यादिमेनि ॥

कीर्त्तितः । त्रि । कथिते ॥

कीर्त्तिभाक् । पु । द्रोणाचार्ये ॥ त्रि । कीर्त्तियुक्ते ॥

कीर्त्तिमान् । पु । वसुदेवस्य ज्येष्ठपुत्रे ॥ त्रि । कीर्त्तिसंयुक्ते ॥

कीर्त्तिशेष. । पु । मरणे ॥ यशसोऽवशेषो ॥

कीलः । पु । स्त्री । अग्निशिखायाम् । ज्वालायाम् ॥ शङ्कौ ॥ शस्त्रे ॥ कफोणौ ॥ कफोणिकाघाते ॥ स्तम्भे ॥ लेशे ॥ कीलति बध्नाति । कील बन्धने । इगुपधेतिक ॥ कील्यते

अन्नानेन वा । कर्मणिघञ् पुंसीति घोषा ॥

कीलक । पुं । शिवके । गवांस्तम्भे । यन्नबद्धागौर्दुह्यते तस्मिन् । खूटा इति भाषा ॥ गवां गात्रकण्डूयनार्थं गोष्ठे निखातस्तम्भे ॥ कीलशब्दार्थे ॥ वत्सरविशेषे । यथा । आयन्ते सर्वसस्यानि सुभिक्षं निरुपद्रवम् । सौम्यदृष्टिर्भवेद्राजा कीलके च शुभं वदेदिति ॥ कील्यते । कील० । क सञ्ज्ञेति घञ । स्वा० कन ॥

कीलसस्पर्श. । पुं । गाव इति गौड भाषा प्रसिद्ध वृक्षविशेषे ॥

कीला । स्त्री । पुं । कीले ॥ स्त्री । रतब सौ । रतौ प्रतिहतिविशेषे ॥ यथा वात्स्यायन. । कीला उरसि कर्त्तरी शिरसि विद्धा कपोलयोरिति ॥ कीलति । कील० । इगुपधेति क । टाप् ॥

कीलालम् । न । रुधिरे ॥ जले ॥ अमृते ॥ मधुनि ॥ कीलां वह्निज्वालां अलति वारयति । अलभूषणादौ । कर्मण्यण् ॥ कीलाभिः कीलां लाति वा । कीलेन प्रतिबन्धेन अल्यते वार्यते । अल० । घञ् । कीलम् प्रतिबन्धम् अलति वा । कर्मण्यण् ॥ पुं । पशौ ॥ कीलबन्धनम् अलंयोग्यम स्येति ॥

कीलालधिः । पुं । समुद्रे ॥ कीलालानि धीयन्तेऽस्मिन् । डुधाञ्० । अधिकारणेकि ॥

कीलालप । पुं । राक्षसे ॥ कीलालं पिबति । पा० । आतोनुपसर्गे इति क. ॥

कीलित. । त्रि । बद्धे ॥ निखातकीले ॥ कील्यतेस्म । कील० । क्त ॥

कीश । पुं । कपौ । वानरे ॥ सूर्ये ॥ पक्षिणि ॥ त्रि । दिगम्बरे । नग्ने ॥ की इति शब्दमीष्टे । ईश० । मू० क ॥ यथा । कच्छवायोरपत्यम् । अतरन् । कः हनूमान् ईशो यक्षस. ॥

कीशपर्ण । पुं । अपामार्गे ॥

कीशपर्णी । स्त्री । अपामार्गे ॥ कपिलोमतुल्यानि लोमयानि पर्णान्यस्या. । पाककर्णेतिङीष् ॥

कीशफलम् । न । कक्कोले । गन्धद्रव्यविशेषे ॥

कु । अ । पापे ॥ कुत्सायाम् ॥ ईषदर्थे ॥ निवारणे ॥ कवते । कूयते वा । कुङ् शब्दे । मित० डुः ॥

कुः । स्त्री । अवन्यायाम् । धरायाम् । भूमौ ॥ प्रश्नमाह १ ॥ कवते । कुङ्० । मित० डु. ॥

कुकः । त्रि । समर्थे ॥ कोकते आदत्ते

। कुक॰ । इगुपधेतिक ॥

कुकभम् । न । मद्ये ॥ इति शब्दच न्द्रिका ॥

कुकर । त्रि । रोगकुब्जितकरे । कुणौ ॥

कुकील' । पु । पर्वते । शिलोच्चये ॥

कुकुट । पु । स्वस्तिके । सितावरे । सु निषण्णशाके ॥

कुकुद । पु । कूकुदे । सत्कृत्यकन्या दातरि ॥

कुकुन्दर' । पु । कुक्कुरद्रुमे ॥ न । कूप के । नितम्बस्थकूपकद्वये । स्त्रिया पृष्ठवंशादधोगर्त्ते ॥ कुमभूमि दर यति । दूभये । यद्यन्त । कर्मण्यण । शीलोपस्यस्यानिवर्त्तामरद्धि । त त्पुरुषेकृतीति वाहुलकादलुक । कुत्सित कुन्दरम् ईषत्कुन्दरमचे तिवा ॥ यद्वा । स्कुन्द्यते कामिना । स्कुदिआप्रवणे । मद्गुरादयश्चेति साधु ॥

कुकुभा । स्त्री । रागिणीविशेषे ॥

कुकुर । पु । यदुवंशीयान्धकराजस्य तनये ॥ कुक्कुरे ॥ न । ग्रन्थिपर्णीवृ क्षे ॥ कोकते । कुकआदाने । को कतेर्वाकुगित्युरच ॥

कुकुरा' । पुभूम्नि । देशविशेषे । यदुषु । दाशार्हेषु । सात्वतेषु ॥ नित्यंब हुवचनान्त ॥

कुकूटी । पु । शाल्मलीपादपे ॥

कुकूल । पु । तुषानले ॥ शिरीषा द पिमृद्वङ्गी क्वेय मायतलोचना । अ य क्व च कुकूलाग्निकर्कशो मदना नल ॥ न । शङ्कुभि सङ्कीर्णविले ॥ तनुत्रे । दंशने ॥ कोभूमे कूलम् । कुत्सितवाकूलम् ॥ यद्वा । कवते । कुङ्शब्दे । पिञ्जादित्वादूलच् । धा तो कुगागम. ॥

कुकोलम् । न । कोलिवृक्षे ॥

कुक्कुट । पु । कालज्ञे । ताम्रचूडे । च रणायुधे । कुकुडा इतिभाषा ॥ अ स्यमासगुणायथा । कुक्कुटो वृंहणा स्निग्धो वीर्योष्णो ऽनिलहृद्गुरु । च क्षुष्य शुक्रकफकृ द्बल्यो वृष्य कषा यकइति ॥ कुक्कुटलक्षणयथा । कु क्कुटस्वृजुतनूरुहाङ्गुलि स्ताम्रवक्त्रन खचूलिक सित । रौति सुस्वर मु षात्यये च यो वृद्धिद स नृपराष्ट्र वाजिनाम् ॥ यवग्रीवो यो वा वदर सदृशो वा पि विहगो वृहन्मूर्द्धा व र्णै भवति वहुभिर्यश्चरुचिर । स श स्त सङ्ग्रामे मधुमधुपवर्णो श्च ज यकृन्न शस्तो योतो ऽन्य कृशतरर व खञ्जचरण ॥ इति वाराहीस हिता ॥ निषादपुत्रे ॥ शूद्रपुत्रे ॥ तृ णोल्कायाम् ॥ कुक्कुभपक्षिणि ॥ व

कृकवाकौ। स्फुलिङ्गे॥ वनकुक्कुटे॥ यथा। सुरासमण्डपानाय भोजने चरणायुधाः। तित्तिराविष्किराः पथ्या कुक्कुटा विषमज्वरे इत्यत्रिवेद्य.॥ अत्र चरणायुधो गृहकुक्कुटः। कुक्कुटो वनकुक्कुट इति व्याख्यानात्॥ कोकनम्। कुकआ०। सं० क्विप्। कुटति। कुटका०। इगुपधेतिक। कुकाकुट। कर्म्मकरणयोरिति समास॥ कुत्सित. कुट को पृथिव्या. कुटो वा। पृ०॥

कुक्कुटमण्डप। पु। काश्याम्प्रसिद्धे मुक्तिमण्डपे॥

कुक्कुटक.। पु। कुक्कुटार्थे॥ शूद्राज्जातो निषाद्यान्तु सवै कुक्कुटक. स्मृत। इति मनु.॥

कुक्कुटमस्तकम्। न। चव्ये। चे. इ इति गौडभाष॥

कुक्कुटव्रतम्। न। सन्तानार्थं स्त्रीकर्त्तव्ये व्रतविशेषे। ललितादृसप्तमीव्रते॥ भाद्रेमासि सिते पक्षे सप्तम्यां नियमेनया। स्नात्वा शिवं लेखयित्वा मण्डलेषसहाम्बिकम्। पूजये न्न सदातस्याः दुष्प्रापं नैव विद्यते॥

कुक्कुटशिखः। पुं। कुसुम्भवृक्षे॥

कुक्कुटाभः। पु। ⎫
कुक्कुटाहिः। पुं। ⎭ कुक्कुटतुल्यवर्णे सर्पविशेषे॥



कुक्कुटि। स्त्री। दम्भचर्यायाम्॥

कुक्कुटी। स्त्री। अन्नतचर्यायाम्॥ ज्येष्ठायाम्। छिपकली इति भाषा॥ शाल्मलीवृक्षे॥ कुक्कुटयोषिति॥ अस्याल० कुक्कुटी च मृदुवाग्भाषिणी स्निग्धमूर्त्तिं रुचिराननेक्षणा। सा ददाति खुचिरं मनोऽर्चितां श्रीयशोविजयवीर्यसम्पद॥ जातेरस्त्री विषयादिति ङीष॥

कुक्कुटीव्रतम्। न। भाद्रशुक्लसप्तम्यां कर्त्तव्ये नियमविशेषे। ललिता सप्तम्याम्॥

कुक्कुभ। पु। पानकुका इतिगौडभाषाप्रसिद्धे पक्षिणि॥ वनकुक्कुटे॥ कुगिष्ट्यव्यक्तं शब्दं कौति। बाहुलकात् भक्॥ कुक्कुशब्दं भाषते वा। भाषव्य०। अन्येभ्योपीतिडः॥

कुक्कुर.। पुं। कूकर इतिभाषाप्रसिद्धे कौलेयके। सारमेये॥ कोकते। कुकआदाने। क्विप्. कुरति। कुरशब्दे। इगुपधेतिकः। कुक्चासौ कुरश्च॥ न। ग्रन्थिपर्णे। कुकुरौंदा इति ख्यातौषधौ॥ कुक्कुरोऽस्त्यस्मिन् कुक्कुरशब्दस्तदन्ये वाच्यलिङ्गः। पर्य्यायाश्च। यथा। कोकते। कुक०। कोकतेर्वाकुगिष्ट्युरच्। कुगागमश्च॥

कुक्कुरद्रु। पुं। मदच्छदे। ककुन्द्रे

। कुक्कुरवन्दा कुकुरोद्दा इतिचभाषा ॥ कुक्कुरद्रु कटु स्निग्धो ज्वररक्तकफापह । तन्मूलमार्द्रंनिक्षिप्तं वदने मुखशोषहृत् ॥

कुक्कुरी । स्त्री । शुन्याम् । सारमेय्याम् । कूकरी कुत्ती इतिचभाषा ॥ जातेरिति ङीष ॥

कुक्कुवाच् । पु । सारङ्गमृगे ॥

कुच । पु । कुच्यो । जठरे ॥ गर्भे ॥ कुष्णाति । कुषनिष्कर्षे । उन्दिगुधिकुषिभ्यश्चेति स कित् ॥

कुक्षि । पु । उदरे ॥ कुष्यते निष्काष्यते मलोऽस्मात् । कुष० । प्लुषिकुषिशुषिभ्य क्सि ॥ केतुमालवर्षस्थ देशविशेषे । समुद्रमध्यप्रदेशे ॥ कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्वभेदन मित्यत्रकुक्षिशब्द उदरस्य वामदक्षिणभागद्वयवाचीतिभावप्रकाश । कूख इतिभाषा ॥

कुक्षिम्भरि । त्रि । आत्मम्भरौ । स्वोदरमात्रपूरके ॥ कुक्षिविभर्त्ति इति विग्रहे कुक्षेर्मुमागमो भृञ्दन्प्रत्ययश्चनिपातसिद्ध ॥

कुक्षिरन्ध्र । पु । नले ॥

कुङ्कुमम् । न । कुमकुम् केसर इति चनाम्ना विख्ते गन्धद्रव्ये । काश्मीरज न्मनि ॥ काश्मीरदेशजे क्षेत्रे कुङ्कुम यद्भवेद्धितत । सूक्ष्मकेशर मारक्त पद्मगन्धि तदुत्तमम् ॥ वाह्लीकदेशसजात कुङ्कुमंपाण्डुरं भवेत । केतकीगन्धयुक्त त न्मध्यम सूक्ष्मकेशरम् ॥ कुङ्कुमं पारसीके यन्मधुगन्धि तदीरितम् । ईषत्पाण्डुरवर्णंतदधम स्थूलकेशरम् ॥ कुङ्कुम कटुकस्निग्धं शिरोरुग्व्रणजन्तुजित । तिक्त वमिहर वर्ण्यं व्यङ्गदोषत्रयापहम् ॥ कुमकुम् इतिशब्दोक्ति वा चकत्वेनाख्य। अर्शआद्यच ॥ यद्वा कुक्यते । कुक० । वा० उमकुमप्रत्यय । आच्छीत्यत्र नुमितियोगविभागान्नुम् ॥

कुङ्कुमाद्रि । पु । पर्वतविशेषे ॥

कुङ्कुनी । स्त्री । महाज्योतिष्मत्याम् ॥

कुच । पु । स्तने ॥ कुचति । कुचसङ्कोचे । इगुपधेतिक ॥

कुचत्तिक्ता । स्त्री । मूर्वालतायाम् ॥

कुचण्डी । स्त्री । मूर्वायाम् ॥

कुचन्दनम । न । रक्तचन्दने ॥ बकम् इति भाषाप्रसिद्धे पत्राङ्गे ॥ द्रुमविशेषे ॥ निर्गन्धत्त्व त कुत्सित चन्दनम् । कोचन्दनमिव वा । कुत्सितान्यन्यचन्दनान्यस्माद्वा ॥

कुचफल । पु । दाडिमद्रुमे ॥

कुचर । त्रि । कवादे । परदोषकथन

णीन्द्रो ॥ कुत्सितं संचरति। यथायथं॥

कुत्राग्रम्। न। चूचुके। स्तनाग्रभागे॥ कुचमुखम्॥

कुत्राङ्गेरी। स्त्री। चुक्रिकायाम्। चूकापालक इतिभाषा॥

कुचिकः। पु। ⎫ कुचिया इति गौ
कुचिका। स्त्री। ⎭ डभाषा प्रसिद्धे मत्स्ये॥

कुचितः। त्रि। परिमिते॥ कुचत्रि। कुचसङ्कोचे। कुचिरचिकुचीति कितच॥

कुचेलः। त्रि। कुवाससि॥ कुत्सितं चेलमस्य॥

कुचेला। स्त्री विद्धकर्णाम्॥

कुचेली। स्त्री। अम्बष्ठायाम्। आकनादि इतिगौडभाषा॥

कुच्छम्। न। कुमुदे॥ इतिशब्दच न्द्रिका॥

कुजः। पुं। आरे। भौमग्रहे॥ नरकासुरे॥ कुभे॥ कोः पृथिव्याः जातः। कम्पन्यापित्तड॥

कुजम्भलः। त्रि। सन्धिचौरे॥ इति कल्पतरुः॥

कुजम्भिलः। त्रि। कुजम्भले॥ इतिशब्दरत्नावली॥

कुजा। स्त्री। कात्यायन्यादिकायाम्॥ कात्यायन्याम्॥

कुजाष्टमः। पु। दोषविशेषे॥ सर्वान् गुणान्निहन्त्याशु विलग्नाद्दष्टमः कुजः। अपवादः। अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेपिवा। कुजाष्टमोद्भवोदोषोन किञ्चिदपिविद्यतेइति॥

कुञ्जिशः। पु। मत्स्यविशेषे॥

कुञ्झटि। स्त्री। धूमसहिष्याम्। कुहेलिकायाम्॥

कुञ्झटिका। स्त्री। रत्नाम्ब्याम्। नभोरेणौ॥

कुञ्झटी। स्त्री। कुहेलिकायाम्॥

कुञ्जनम्। न। नेत्ररोगविशेषे॥ तल्लक्षणम्। वाताद्या वर्त्मसङ्कोचं जनयन्ति यदा मलाः। तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुरिति॥

कुञ्चफला। स्त्री। कुष्माण्ड्याम्॥

कुञ्चि। पुं। अष्टमुष्टिमिते धान्यमानभेदे॥ यथा। अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौचपुष्कलमिति॥

कुञ्चिका। स्त्री। कृष्णजीरके॥ कुंचे इति गौड प्रसिद्धे मत्स्यविशेषे॥ यथा। कुञ्चिकयैनं विस्मापयति भाययति॥ कम्बी इतिभाषा प्रसिद्धायां वंशशाखायाम्॥ कुञ्जी ताली इतिच भाषा प्रसिद्धायां कूर्चिकायाम्॥ मेथिकायाम्॥

कुञ्चितम्। न। तगरपुष्पे॥ त्रि। व

सिद्धे वृक्षविशेषे । गिरिमल्लिकायाम् । वतसके ॥ अस्य फलमिन्द्रयव ॥ कुटज कटुको रूक्षो दीपन स्तुवरो हिम । अर्शोतीसारपित्तास्र कफतृष्णामकुष्ठनुत ॥ कलस्यमुनौ ॥ द्रोणाचार्य्ये ॥ कुटे शृङ्गे जायते स । सप्तम्यांजनेर्डः । पृषोदरादि ॥

कुटजबीजम् । न । इन्द्रयवे॥

कुटजा । स्त्री । कलहंसच्छन्दसि ॥ स जसा भवेदिह सगौ कुटजाख्यमिति लक्षणात ॥

कुटन्नट । पु । श्योनाकवृक्षे । शोणके ॥ न । कैवर्त्तीमुस्तके । मोथा इति भाषा ॥ कुटम् वक्रीभवन् नटति । नटस्यन्दने पचाद्यच् ॥

कुटप । पुं । मुनौ ॥ निष्कुटे । गृहसमीपोपवने ॥ कुडवपरिमाणे मान भाण्डे॥ न । कमले ॥ कुटति । कुट० । उषिकुटिदलीत्यादिना कुटे' कपुन् प्रत्ययः ॥

कुटर । पुं । न । कुठरे । मन्थानदण्ड बन्धनस्तम्भे ॥ वा० कुटे. करन ॥

कुटरु । पु । अंशुकगृहे । छोटातम्बू तम्बूटी इति भाषा ॥ कुटति । कु-ट० । कुटः किरुप्रत्यय ॥

कुटरुणा । स्त्री । त्रिवृतायाम् ॥

कुटलम् । न । पटले । छान छप्पर इ- ति भाषा ॥ इति शब्दावली ॥

कुटहारिका । स्त्री । दास्याम् ॥

कुटि । पुं । महीरुहे ॥ शरीरे ॥ स्त्री । स्वल्पगृहे ॥ शालायाम् ॥ कुटति । कुट० । इगुपधात किदिति इन्प्रत्यय ॥ यद्वा । क्षाम्यापकुटिभिद्भिश्छिदिभ्यश्चेति इ सर्वकित् ॥

कुटिचर. । पुं । शिशुमारे । सूंस इति भाषा ॥

कुटिलम् । त्रि । कुटिले ॥ कुटति । कु- ट० । इषिमदिकुषिकुटिभ्य. किलच् ॥

कुटिल । त्रि । अवृजौ । अराले ॥ भङ्गुरे ॥ न । तगरपुष्पे ॥ कुटिलकोटिस्थ काति । वा० । आतोनुपेतिक ॥ कुटति वा । कुट० । मिथिलादित्वात्कुलचकाद्या इलच् ॥

कुटिलक । पुं । नागविशेषे ॥

कुटिलग' । पुं । सर्पे ॥

कुटिलगा । स्त्री । नद्याम् ॥

कुटिला । स्त्री । नदीविशेषे ॥ राधिकासखीविशेषे ॥ तगरपादाम् ॥ स्पृक्कानामगन्धद्रव्ये ॥

कुटिलिका । स्त्री । आघानाकृतिविशेषे ॥ कर्मारोपकरणभूते लौहे ॥ वक्राग्रालौहयष्टिर्या प्रोक्ताकुटिलिका हिसेत्युक्तेः ॥

कुटी । स्त्री । कुम्भदास्याम् । कुटनी

इतिभाषा॥ मुरानामगन्धद्रव्ये॥ चि नगुच्छे॥ स्वल्पनिलये॥ कृदिकारा दक्तिनइतिङीष॥

कुटीचक.। पु। पुत्रान्नादे। पुत्रान्नजी विनि विरक्ते॥

कुटीचर। पु।
कुटीचरक। पु। } यतिविशेषे॥ कुट्या चरति। अच॥ स्वार्थे क॥

कुटीर। पुं। क्षुद्रगृहे। झोंपडी झूं पडी कुटिया इतिचभाषा॥ ह्रस्वा कुटी। कुटीशमीशुण्डाभ्योर॥ न। केवले॥ रते॥ इतिहेमचन्द्र॥ कुटति। कुट०। वा०ईरन्॥

कुटुङ्गक। पु। वृक्षलतागहने॥ छ ति सिं॥

कुटुम्ब। पु। न। पोष्यवर्गे॥ वान्धवे॥ सन्ततौ॥ द्वितीयगृहे॥

कुटुम्बव्यापृत। त्रि। अभ्यागारिके। उपाधौ। पुत्रदारादिपोषणव्यग्रे॥ कुटुम्बे कुटुम्बपोषणे व्याप्रियतेस्म। पृङ्व्यायामे। अकर्मकत्वात क र्त्तरिक्त॥

कुटुम्बहारक। पु। यात्रायोगविशेषे॥ सप्तमे चन्द्रमा लग्नात् सप्तमे नीचखेचर। कुटुम्बहारको योगो यातु प्रियतमां हरेत॥

कुटुम्बी। पु। गृहमेधिनि। गृहस्थे। गार्हस्थ्याश्रमविशिष्टे॥ त्रि। कृषके॥ कुटुम्बविशिष्टे॥ कुटुम्ब पोष्यवर्गोऽस्यस्य। अतइनि॥

कुटुम्बिनी। स्त्री। पतिपुत्रदुहित्रादि युताया प्रतिष्ठिताया स्त्रियाम्। पु रन्ध्राम्॥ इन्नन्तान्ङीप्॥ कुटु म्बानांसमूहे॥ खलादिभ्यइनिर्वक्त व्यइतिइनि॥ क्षुद्रक्षुपविशेषे। पय स्यायाम्। वक्रशल्यायाम्॥

कुटुम्बौकः। न। कुटुम्बवासस्थाने॥

कुट्टक। पुं। गणकाना अङ्कविशेषे॥

कुट्टनम्। न। छेदने। कूटना इतिभा षा॥

कुट्टनी। स्त्री। नार्यासहान्यपतिसंयो गकारिण्याम्। शम्भल्याम्। कुटनी इतिभाषा॥ कुट्टयति। कुट्टच्छेदन भर्त्सनयो। ल्युट। ङीप॥

कुट्टाक। त्रि। कुट्टनशीले॥ कुट्टयति। तच्छील। कुट्ट०। जल्पभिक्षकुट्ट लुण्टवृङ.षाकन इतिषाकन्प्रत्य य॥ स्त्री। कुट्टाकी॥

कुट्टारः। पुं। पर्वते॥ न। केवले॥ रते॥ कुट्टारंकेवलेरते इतिमेदिनी॥

कुट्टितमासम्। न। मांसव्यञ्जनभेदे॥ मासमस्थि सङ्गृह्य सूक्ष्मं कृत्वा सुकुट्टितम्। वेसवारसुगन्धाढ्य स्वेदित म्पाचितम्भवेत्॥ कुट्टित पाचि

त मांसं सुस्वादु लघु दीपनम्। तथापि जाङ्गलं श्रेष्ठं जाङ्गलेष्वपि पक्षिणाम् ॥

कुट्टिम । पु । न । स्वल्पगृहे । कुटीरे ॥ गर्भागारे ॥ मणिभूमौ । रत्नखनौ ॥ सुधाघटितभूतले ॥ बद्धभूमौ । गाँथ इति कुरसी इतिच भाषा ॥ दाडिमद्रुमे ॥

कुट्टिमितम् । न । हावभेदे । स्त्रीणां हृदयाभूत्र-रचेष्टान्तर्गतचेष्टाविशेषे । स्त्रीणां स्वाभाविकहृदयाङ्गारान्तर्गते विलासभेदे ॥ तल्लक्षणं यथा । केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात । प्राहुः कुट्टिमितं नाम शिरःकरविधूननम् ॥ अपिच । केशाधरादिग्रहणे मोदमानेऽपि मानसे । दुःखितेव बहिः कुप्येद्यत्र कुट्टिमितं हितदिति ॥ स्त्रीणामेषस्वभावो यदिष्टमप्यनिष्टतया निवारयन्त्य एव सुरतसुखमुपभुञ्जते इति ॥ अपिच । दुःखोपचारः सौख्येऽपि हर्षात्कुट्टिमितं मतम् ॥ सुरतेषु गाढपरिपीडने केशस्तनादिग्रहणेच हर्षेऽत सुखेऽपि दुःखाभिव्यक्त्या दुःखेऽपि सुखाभिव्यक्त्या कुट्टिमितम् । कुट्टनम् । कुट्ट० घञ् । कुट्टेन निर्वृत्तम् । भावप्रत्ययान्तादिमपवक्तव्य इतीमप् । ततो

यथना द्राभेदः । नारकादिस्थादितजवा ॥

कुट्टहारिका । स्त्री । दास्याम् ॥ इति हलायुध. ॥

कुट्टीर । पु । क्षुद्रपर्वते ॥ इतिशाराबली ॥

कुड्मल. । पुं । मुकुले । विकाशोन्मुखमौढकलिकायाम् ॥ न । नरकान्तरे ॥ यत्ररज्जुभि पीडनम् ॥ कुटति । कुटकौटिल्ये । भूषादित्वात् कलच् तस्यमुटच ॥ यद्वा । कुड्यते कुटतिवा । कुट० । कुटिकुषिभ्यां क्मलच ॥

कुठः । पु । द्रुमे । शाले ॥ कुठति । कुठ० । पचाद्यच् ॥

कुठर । पु । दध्वविष्कम्भे । मन्थानाकर्षरज्जुभि र्युक्ते स्तम्भे ॥ कुठति कुठ गतिप्रतिघाते । बाहुलकात् करन ॥

कुठाकु । पु खुटकुबठैया इति भाषा प्रसिद्धे पक्षिविशेषे ॥

कुठाटङ्क । पु । स्त्री । कुठारे ॥

कुठार. । पु । द्रुमे ॥

कुठार । पु । स्त्री । सुधितौ । परशौ । कुल्हाड़ा इति भाषा । फर्सा इतिच ॥

कुठारी । स्त्री । कुठारे । कुल्हाड़ी इति भाषा ॥ जातित्वात् ङीष् ॥

कुठार । पुं । इच्चे ॥ कोशे । वानरे ॥ शस्त्राकारे ॥

कुठि । पु । क्ष्माभृति ॥ महीरुहे ॥

कुठिक । पु । कुष्ठौषधौ । कूठ इति भाषा ॥

कुठेर । पु । वह्नौ ॥ तुलस्याम् ॥ अर्ज्जके । बाबुइ इति बर्बरी इतिच प्रसिद्धे पर्णासे ॥ कुठति । कुटप्रतिघाते कुठिच । पतिकठिकुठीभ्येरक् । आगमशास्त्रस्या निस्यत्वान्नुम् ॥

कुठेरक. । पु॰ । पर्णासे । तुलस्याम् ॥ श्वेततुलस्याम् । बबुइ तुलसी इति गौड़भाषा ॥ कृष्णार्जके ॥ नन्दीवृक्षे ॥

कुठेरज । पु । श्वेततुलस्याम् । कुठेरके । बर्बरायाम् ॥

कुठेक. । पु । चामरवाते । चौंरकीपवन इतिभाषा । मन्थरौ ॥

कुडव । पु । धान्यमानभेदे । मुष्टिचतुष्टये ॥ प्रस्थचतुर्थांशे ॥ वैद्यकमतेद्विप्रसृतपरिमाणे । द्वात्रिंशत्तोलके । अञ्जलौ ॥ कुपत्यते कुपडतेवा । कुडिदाहे । वा॰कव प्र॰ । आगमस्यानित्यत्वान्नुम् ॥

कुडि । पु । देहे । शरीरे ॥ कुण्डते । कुडि॰ । कुविदुकंप्योर्नलोपश्चेति इ. कित् ॥

कुडिश । पु । कुडचि माच इतिगौड़भाषाप्रसिद्धे मत्स्यविशेषे ॥

कुडुहुञ्ची । स्त्री । क्षुद्रकारवेल्याम् ॥

कुड्मलः । पुं । कुट्मले ॥ न । नरकविशेषे ॥ कुड्यते । कुटतिवा । कुटच्छेदने कौटिल्येवा । कुटिकुषिभ्यांक्मलन् । पृ॰ । कुडति । कुडबाल्ये । बाहुलकात् कुडेरपिक्मलन्वा ॥

कुड्यम् । न । भित्तौ । भींत कन्ध इतिभाषा ॥ विलेपने ॥ कुड्यांसाधु । तत्रसाधुरितियत् । पृ॰ ॥ कुड्यतेवा । कुडुकार्कश्ये । ण्यत् ॥ कौतेरघन्यादित्वात् यकप्रत्ययोडुगागम इत्युज्ज्वलदत्तादय ॥ कौतूहले ॥

कुड्यकम् । न । कुड्यार्थे ॥

कुड्यच्छेदी । पु । सन्धिचौरे ॥ छेदनंछेद । कुड्यस्यछेद । सोस्यास्तिइनि ॥

कुड्यच्छेद्यम् । न । खानिके । भींतकागढा इतिभाषा ॥

कुड्यमत्सी । स्त्री । } गृहगोधिकायाम् । छिपकली ॥
कुड्यमत्स्य । पु । }

कुणक । पु । बालके ॥

कुणञ्ज । पु । } अरण्यावास्तूके । वनबथुवा खरथुवाइतिचभाषा ॥
कुणञ्जर । पु । }

कुणञ्जा । स्त्री । कुणञ्जे ॥

कुणप । पु । न । त्यक्तमाणे । शवे ॥ व

कुण्डलिका । स्त्री । मात्रावृत्तभेदे ॥ यथा । कुण्डलिका सा कथ्यते प्रथमं दोहा यत्र । रोलाचरणचतुष्टयं प्रभवति विमलं तत्र ॥ प्रभवति विमलं तत्र पदस्यति सुललितयमकम् अष्टपदी सा भवति विमलकविकौशलगमकम् । अष्टपदी सा भवति सुललितपण्डितमण्डलिका कुण्डलिनायकभणितविबुधकर्णा कुण्डलिकेति ॥ जलेबी इतिप्रसिद्धे पक्वान्ने॥

कुण्डली । पु । फणिनि । सर्पे ॥ वरुणे ॥ मयूरे ॥ चित्रमृगे । चित्तल इति भाषा ॥ त्रि । कुण्डलयुक्ते ॥ कुण्डलं कुण्डलाकारो वा सोऽस्यास्ति । अत इनि' ॥

कुण्डलिनायक' । पु । पिङ्गलसर्पे ॥

कुण्डलिनी । स्त्री । मूलाधारनिवासिन्याङ् कुलकुण्डलिनीशक्तौ ॥ उरग्याम् ॥ गुडूच्याम् ॥ कुण्डलानां समूहे ॥ खलादित्वादिनि ॥ जलेबीतिख्यातपक्वान्नविशेषे ॥ तस्या पाकप्रकारो यथा । नूतनं घट मानीय तस्यान्त कुशलोजन । प्रस्थार्द्धपरिमाणेन दध्नाऽम्लेन प्रलेपयेत ॥ द्विप्रस्थांसमितां तत्र दध्यम्लप्रस्थसम्मितम् । घृत मर्द्धशरावञ्च घोलयित्वा घटे क्षिपेत ॥ आतपे स्थापयेत्तावद्यावद्याति तदम्लताम् । ततस्तत् प्रक्षिपेत पात्रे सच्छिद्रे भाजनञ्च तत् ॥ परिभ्राम्य परिभ्राम्य तत्सन्तप्ते घृते क्षिपेत । पुन पुन स्तद्दावृत्त्या विदध्या न्मण्डलाकृतिम् ॥ तां सुपक्वां घृता न्नीत्वा सितापाके तनुद्रवे । कर्पूरादिसुगन्धे च स्नपयित्वो द्धरेत्तत ॥ एषाकुण्डलिनी नाम्ना पुष्टिकान्तिबलप्रदा । धातुवृद्धिकरी दृष्या रुच्या चेन्द्रियतर्पणीति ॥ कुण्डलिनो ङीप् ॥

कुण्डली । स्त्री । गुडूच्याम् ॥ काञ्चनद्रुमे ॥ कपिकच्छ्वाम् ॥ सर्पिणीवृक्षे ॥ जलेबीति प्रसिद्धे मिष्टान्नविशेषे । कुण्डलिन्याम् ॥ इतिपाकराजेश्वर ॥ कुलकुण्डलिन्याशक्तौ ॥

कुण्डाशी । त्रि । कुण्डस्यसङ्करविशेषस्यान्नभोजिनि ॥ अमृते जारज कुण्डो मृते भर्त्तरि गोलक: । य स्तयो रन्न मश्नाति स कण्डाशीति कथ्यते ॥ इति देवल ॥ कुटना इति प्रसिद्धे भगभक्षके ॥ महाभारते ८।नधर्मे तथा दर्शनात ॥

कुण्डिका । स्त्री । कमण्डलौ ॥ पिठरे । स्थाल्याम् ॥ कूंड कूडा इतिच प्रसिद्धे पात्रविशेषे ॥ स्वा° क ॥

कुण्डिन । पु । ऋषिविशेषे ॥ न । वि

दर्भनगरे ॥ यथा । अथ भीमसुता वलोकनै सफलं कर्त्तुमह स्व देव स । क्षितिमण्डलमण्डनायितं नगरं कुण्डिनमण्डजोययाविति पूर्व नैषधे २ सर्गे ॥ कुण्डते । कुडि दाहे । बहुलमन्यत्रापीति इनच प्र० ॥

कुण्डी । स्त्री । अमत्रविशेष । कमण्डलौ ॥ कुण्डी कम्बुकपालानि मधुपूर्णानि विभ्रत । कि न पश्यति लोको य ब्रह्मविष्णुमहेश्वरान् ॥ जानपदकुण्डेत्यादिना अमत्रे ङीष् ॥ भर्त्तर्यसति जारजातायाम् ॥ अमत्र मुख्यजातिस्वात् जातिलक्षणो ङीष् ॥ कुणति वा । कुणशब्दोपकरणयो. । अमन्ताडः ॥

कुण्डीर । पु । मनुष्ये ॥ त्रि । बलवति ॥ इति धरणी ॥

कुतनु । पु । कुवेरे ॥ त्रि । कुत्सित शरीरे ॥

कुतप । पुं । सूर्य्ये ॥ वैश्वानरे ॥ द्विजन्मनि ॥ अतिथौ ॥ गवि ॥ भागिनेये ॥ पुं । न । दौहित्रे ॥ वाद्ये ॥ छागलकम्बले, नेपालकम्बले । खारुया इति पर्वतीय भाषा ॥ कुशतृणे ॥ दिनस्याष्टमांशे । अह्नोऽष्टमे मुहूर्त्ते । त्रिशद्दण्डदिनमाने दिनोदयप्रहरमेयदण्डावधितृतीयप्रहरप्र- यमदण्डपर्यन्ते काले । अथ चैको दिष्टश्राद्धारम्भकाल. । यथा । आरभ्य कुतपे श्राद्ध कुर्यादारौहिणं बुध. । विधिज्ञो विधि मास्थाय रौहिणन्तु न लङ्घयेदिति ॥ दिवसस्याष्टमे भागे मन्दीभवति भास्कर. । स काल कुतपो ज्ञेय. पितॄणां दत्तमक्षयम् ॥ अपिच । अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा । तत्राष्टमो मुहूर्त्तो य सकाल. कुतप स्मृत इतिमत्स्यपुराणम् ॥ * ॥ पारिभाषिककुतपास्तु । मध्याह्न खड्गपात्रञ्च तथा नेपालकम्बल । रौप्यदर्भास्तिला गावो दौहित्रश्चाष्टम. स्मृत ॥ पाप कुत्सित मित्याहुस्तस्य सन्तापकारिण. । अष्टावेतेयत स्तस्मात् कुतपा इतिविश्रुता ॥ इतिमिताक्षराया माचाराध्यायः ॥ कुत्सितं तपति । तप० । संज्ञायाभृतृवृजीति खच् । अनव्ययस्येति न मुम् । यद्वा । कुम्भुवं तपति । आगमशास्त्रस्यानित्यत्वान्न मुम् ॥

कुतस् । अ । प्रश्ने ॥ पञ्चम्यर्थे । कस्मादर्थे ॥ निन्दे ॥ कस्मात् किमस्तसिल । कुतिहो: ॥

कुतुकम् । न । कौतुके । फलनिरपेक्षतया चिकीर्षिते ॥ कुतूं चर्म नि

र्मितस्नेहपात्र कायति । कै० । आ-
तोनुपेतिक. । उपपदसमास. । इ
कोह्रस्वोङ गेगालवस्येतिह्रस्व. ॥ य
द्वा । कुत्वाम्भवम् । अध्या०ठक् । इ
सुसुगितिक । केण इति ह्रस्वः । सं
ज्ञापूर्वकत्वात् पत्वे वृद्ध्यभाव' ॥
कुतुप । पु । चर्ममये ऽल्पे स्नेहपात्रे ।
कुप्पो इतिभाषा ॥ ह्रस्वा कुतूः ।
कुत्वाडुपच् ॥
कुतुम्बुरु । न । कुत्सिततिन्दुकीफले ॥
कुतू । स्त्री । चर्मनिर्मिते स्नेहपात्रे ।
कुप्पा इतिभाषा ॥ कुत्सित तन्यते
। तनु० । वा० कू 'टिलोपश्च ॥ कौ
ति वा । कुशब्दे । वा० कृत्सुकश्च ।
कुत्वाडुपजितिनिर्देशाद्वा ॥
कुतूणक । पु । कतुया इति गौडभा
षाप्रसिद्धे बालानां नेत्ररोगे ॥ तल्ल
क्ष० । यथा । कुतूणक' क्षीरदोषा
च्छिशूना मेव वर्त्मनि । जायते तेन
तन्नेत्र कण्डूरञ्च स्रवेन् मुहुः ॥
शिशु' कुर्याल्ललाटाक्षि कूटना
साव घर्षणम् । सूर्य्यालोकप्र
भा द्रष्टु न वर्त्मोन्मीलनक्षम
इति ॥
कुतूहलम् । न । अपूर्ववस्तुदिदृक्षाद्य
तिशये चेष्टाविशेषे । कौतुके । कौ
तूहले ॥ कुतूहलं रम्यदृष्टौ चाप
ल्यं परिकोर्त्तितम् ॥ फलनिरपेक्ष
चिकीर्षिते ॥ त्रि । प्रशस्ते ॥ अद्भुते
॥ कुतूहलति । हलविलेखने । मू०
क ॥ यद्वा । हलति । पचाद्यच्
कुत्सा हलम् ॥
कुतूहली । त्रि । विनोदार्थिनि ॥
कुटणम् । न । कुम्भिकायाम् । वारिप
र्ण्याम् । जलपर्णी काई इतिच भाषा
। पाना इति गौडभाषा ॥
कुत्र । अ । देशप्रश्ने ॥ कस्मिन् । सप्त
म्याश्वल ॥
कुत्रचित । अ । कुत्र । किसीठिकाने
इति भाषा ॥
कुत्सनम् । न । निन्दने ॥ कुत्स० । ल्युट् ॥
कुत्सला । स्त्री । नीलीहक्षे ॥
कुत्सा । स्त्री । निन्दायाम् ॥ कुत्सन
म् । कुत्स अवक्षेपणे । गुरोश्चहलइति
स्त्रियामः । टाप् ॥
कुत्सितम् । न । कुष्ठनामौषधे ॥ त्रि ।
निन्दिते । निकृष्टे । प्रतिकृष्टे । रेफे
॥ कुत्सा सञ्जातास्य । ता० इतश्च ॥
कुथ' । पु । वर्हिषि । दर्भे ॥ पु । स्त्री ।
आस्तरणकम्बले । गजपृष्ठस्थितचि
त्रकम्बले । प्रवेण्याम् । वर्णो । हा
थीकीझूल इति भाषा ॥ कुथ्नाति
। कुन्थसंश्लेषणे । अच् । इगुपधेति'
निर्देशात् क्वचित्किच्चपि नलोपः ।

यद्वा । कुत्स्यस्य शोभा । कुर्थिहिंसा सक्लेशनयो । आगमशास्त्रस्यानित्य त्वात् न । इगुपधेति कपि अव्या । ॥ कुथ्यति वा । कुथ पूतीभावे । इ गुपधेति क ॥ कुथा कन्या समास्या ता कुथ स्या त्वरि कम्बलम् । कुथ कुश. कुथ' कीट. प्रात सार्यो हिज कुशस्याक्ष कश्चिन् ॥

कुथा । स्त्री । आस्तरणे ॥ टाप ॥

कुथोदरी । स्त्री । कल्किपुराणप्रसिद्धा यां कुम्भकर्णपौत्र्यां निकुम्भदुहित रि ॥ साकल्किनाहतेति पुराणे प्र- सिद्धि ॥

कुदृष्टि. । स्त्री । वेदबाह्यतार्किकसम्प मायाम् ॥ यावेदबाह्या. स्मृतयो या श्च काश्च कुदृष्टय. । इतिमनु ॥

कुद्दाल: । पुं । कोविदारे । काञ्चनारे ॥ भूमिदारणास्त्रे । कुदाल इति भाषा ॥ कुम् भूमि मुद्दालयति । दलविदा रणे । कर्मण्यण् । अकल्वादि ॥

कुद्रङ्ग: । पु । गृहविशेषे । मञ्चोपरिम ण्डपे । उद्घाटे । पिठरे ॥ इतिचि काण्डशेष' ॥

कुद्रङ्क । पु । पिठरे । कुद्रङ्के ॥

कुद्रव. । पु । कोद्रवे ॥

कुद्रवन. । पु । कोद्रवे ॥

कुधान्यम् । न । क्षुद्रधान्ये ॥

कुधी । त्रि । विपरीतबुद्धिमति ॥

कुध्र । पु । पर्वते ॥ कुधरति । धृञ् । मूलविभुजादित्वात्क ॥

कुनख । पु । क्षुद्ररोगविशेषे ॥ तत्र० यथा । नखमांस मधिष्ठाय वात पि त्तश्च देहिनाम् । कुर्वाते दाहपा कौच न व्याधिश्चिप्य मादिशेत ॥ तदेवाभ्यतरैर्दोषै पक्ष कुनखं वदेदिति ॥ त्रि । कुत्सितनखयुक्ते ॥

कुनखी । त्रि । कुनखरोगयुक्ते ॥ स्त्रू चितनखे ॥

कुनट । पु । श्योनाकभेदे ॥ कुत्सि तनटे ॥

कुनटी । स्त्री । नैपाल्याम् । मनशि लायाम ॥ धन्याके ॥ कौनटति । न टअवस्यन्दने । अच् । गौरादित्वात् ङीष ॥ कुत्सिता नटी इव वा ॥

कुनणी । पु । बकदण्डे ॥

कुनाभि. । पुं । निधौ ॥ वातसमूहस्या म् । बबूला बवण्डर इतिच भाषा ॥

कुनाशक । पु । दुरालभायाम् । यवा से ॥ कुंनाशयति । णश० । ण्यन्त । अच । स्वा० कन् ॥

कुन्त । पु । गवेधुकायाम् ॥ प्रासायुधे । भल्ले । भाला इति भाषा ॥ प्रा योऽयंसप्येयमस्ये इति स्वामी ॥ कु शरीरमुनत्ति । उन्दी० । बाहुलका

न्त । शकन्ध्वादि ॥

कुन्तलः । पु । केशे । चिकुरे । वाले ॥ ह्रीवेरे ॥ चषके ॥ जवे ॥ हले ॥ कुन्तं कुन्ताग्राकारं लाति । ला० । आतोनुपेतिक ॥ कुन्तला । पुभूम्नि । जनपदविशेषे ॥ यथा । कामगिरिं समारभ्य द्वारकान्तं महेश्वरि । श्रीकुन्तलाभिधो देशो वर्णितः शक्तिसङ्गमे इति ॥

कुन्तलवर्द्धन. । पु । भृङ्गराजे । भंगरा इति भाषा ॥

कुन्तलिका । स्त्री । दध्यादिच्छेदन्याम् । पालिकायाम् । दहीकाटनेकी छुरी वा कठोरी इति भाषा ॥

कुन्तलोशीरम् । न । वालके । वाला इति भाषा ॥

कुन्ति. । स्त्री । युधिष्ठिरादिपाण्डवानां मातरि ॥ वा० कमेर्भिच् । प्रत्ययादिलोपे कुगुन्दादेश ॥ देशविशेषे ॥

कुन्ती । स्त्री । युधिष्ठिरादीनां जनन्याम् । शूरसेनसुतायाम् । पृथायाम् ॥ गुग्गुलुवृक्षे ॥ शल्लक्याम् ॥ इतो मनुष्यजातेरिति ङीष् ॥

कुन्तीपुत्र । पुं । युधिष्ठिरादिषु ॥ कुन्तीच शूरसेनराजस्य कन्या पृथानाम्नाख्याता । तत्पिता तां कुन्तिभोजराजायदत्तवान् । अत. कुन्तीति विश्रुता । साच मृगीभूतस्य मुनेः शापान्मैथुनरहितस्य स्वामिन आज्ञया धर्मात् युधिष्ठिरं पवनाद्भीमं मिन्द्रात् दर्जुनं मश्विनीकुमाराभ्यां नकुलसहदेवौ जनयामास ॥ साच कन्यावस्थाया मादित्यात् कर्णञ्च जनयामास । अत । कर्णोपि कुन्त्या पुत्र. ॥

कुन्थु । पु । बौद्धविशेषे ॥ जिनचक्रवर्त्तिविशेषे ॥

कुन्द । पु । अच्युते । मुकुन्दे ॥ सर्वपापविनाशाय वाजिमेधेन चेष्टवान् । तस्मिन् यज्ञे महादाने दक्षिणां भृगुनन्दन. । मारीचाय ददौ प्रीत कश्यपाय वसुन्धरामितिहरिवंशोक्ते ॥ कुंधरां कश्यपायददाति । ड्दाञ्० । आतोऽनुपसर्ग इतिकः । पृषोदरादित्वाद्वर्णागम. । कुद इति गौड भाषाप्रसिद्धे भ्रमियन्त्रे । चक्रभ्रमौ ॥ कुवेरस्य निधिविशेषे ॥ कुन्दुरुनामगन्धद्रव्ये ॥ करवीरवृक्षे ॥ पालङ्क्यशाके ॥ पु । न । पुष्पविशेषे । माघ्ये ॥ कुन्द शीत लघु श्लेष्मशिरोरुग्विषपित्तहृत् ॥ कुम्भुं वंदायति द्यति वा । दैप्शोधने दो अवखण्डने वा । आत इतिक । तत्पुरुषे इतिद्वितीयायाअलुक् ॥ य-

रा । कुम् भूमिम् उनत्ति । उन्दी॰ । कर्मण्यण् । अ॰ ॥ यद्वा । कौति । कुशब्दे । भृव्यादित्वात् कौतेर्नुमि तिदन ॥

कुन्दक । पु । कुन्दुरुके ॥

कुन्दम: । पु । मार्जारे ॥ इति त्रिकाण्डशेष ॥

कुम्बर । पु । कुम्बरा इति कश्चित्प्रसिद्धे वृक्षविशेषे दीर्घपत्रे । स्वरशब्दे ॥ कुम्बरंराति । रा॰ । आतोनुपसर्गे इतिक. ॥

कुम्बिनी । स्त्री । पद्मसमूहे । पद्मिन्याम् ॥

कुन्दु । पुं । मूषिके ॥ स्त्री । कुन्दुरुनामगन्धद्रव्ये ॥

कुन्दुरु । पु । स्त्री । स्वनामख्यातेसुगन्धिद्रव्ये । यस्य निर्यासे कुन्दुरुखोटि इतिगौडजनाख्याति । पालङ्क्यायाम् । सौराष्ट्रे । बहुगन्धे ॥ कुन्दुरुर्मधुर स्तिक्त स्तीक्ष्ण स्त्वच्यः कटु र्हरेत । ज्वरस्वेदग्रहालक्ष्मीमुखरोगकफानिलान् ॥ कुंभूमि मुनत्ति उदयति वा । अन्यादयश्चेति साधु ॥ पालङ्क्यामपीतिकश्चित् ॥

कुन्दुरुक । पुं । कुन्दुरुनाम्नि सुगन्धिद्रव्ये ॥

कुन्दुरुकी । स्त्री । शल्लकीवृक्षे ॥ कुन्दुरिवप्रतिकृति. । इवेप्रतिकृताविति कन् । गौरादित्वात ङीष् ॥

कुपथ: । पु । कदध्वनि । कापथे ॥

कुपाणि । त्रि । कुकरे । वक्रहस्त । टुण्डा इतभाषा ॥

कुपित । त्रि । रुषिते । रुष्टे ॥

कुपिनी । पु । कैवर्ते । आलिया मक्षुवा इतिचभाषा ॥

कुपिनी । स्त्री । माचुर इतिगौडभाषाप्रसिद्धायां मत्स्यधानभाण्डाम् ॥

कुपिन्द: । पु । तन्तुवाये ॥ कुप्यति । कुप॰ । कुपेर्वाबन्धेतिकिन्दच् ॥

कुपीलु । पु । कारस्करवृक्षे । काकेन्दौ । कुचला इतिभाषा ॥ कुपीलु शीतलस्तिक्तो वातलो मदकृल्लघु: । पर व्यवायिरो ग्राही कफपित्तास्रनाशन ॥

कुपुरुष । पु । कुत्सितनरे ॥ कुत्सित.पुरुष. । कुगतीति समास ॥

कुपूय । त्रि । कुत्सिते । आत्माचारादिनिन्दिते ॥ कुत्सितं पूयते । पूयीविसरणे । पचाद्यच् ॥

कुप्यम् । न । स्वर्णरूप्याभ्या मन्यस्मिन् तैजसे ताम्रादिधातौ ॥ अष्टधातुमध्येऽन्यतमा इतिख्याते धातौ ॥ गुप्यते । गुपूरक्षणे । राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्ट पच्याऽव्यथ्या इतिक्यप

त्तोनिपातित कुप्यशब्द । तन्त्रगुपे रादे कत्त्वञ्चसञ्ज्ञायाम् ॥

कुप्यशाला । स्त्री । स्वर्णरजतभिन्नतैजसपात्रादिनिर्माणगृहे । सन्धान्याम् । ठठेरहट्टा इतिभाषा ॥

कुप्रिय । त्रि । जघन्ये ॥

कुप्लव । पु । तृणादिनिर्मिते कुत्सितो डुपादौ ॥

कुबेर । पुं । धनदे । यक्षराजि ॥ नन्दीवृक्षे ॥ अर्हदुपासकविशेषे ॥ त्रि । कुदेहे ॥ मन्दे ॥ कुत्सित बेर शरीर मस्य कुत्सितत्वात् । यथाहु । कुत्सायां क्विति शब्दोय शरीरं बेर मुच्यते । कुबेर, कुशरीरत्वान्नाम्ना तेनैवसोङ्कित ॥ इतिवायु पुराणम् ॥ यद्वा । कुम्बति धनम् । कुविश्च्छादने । कुम्बेर्नलोपश्चेत्येरक् । श्चोपध्वमध्य ॥

कुबेरक । पु । नन्दिवृक्षे ॥ कुबेरे ॥ स्वार्थेक ॥

कुबेराक्षी । स्त्री । पाटलावृक्षे ॥ लताकरञ्जे । सितपाटलिकावृक्षे ॥ कुबेरस्येवाक्षियस्या । अक्ष्णोदर्शनादिच्च् । गौरादित्वान ङीष् ॥

कुबेराचल । पु । } कैलासपर्वते ॥
कुबेराद्रि । पु । }

कुब्ज । पु । खड्गे ॥ अपामार्गे ॥ त्रि । गडुले । कुबडा इतिभाषा ॥ अस्यलक्षण । यथा । हृदय यदि वा पृष्ठ मुन्नत क्रमश सरुक । क्रुद्धो वायु र्यदा कुर्यात्तदा तं कुब्जमादिशेत् । इति ॥ कुरीषत् उब्जमार्जवमस्य । श० ॥

कुब्जक । पु । पुष्पविशेषे । भद्रपुष्पे ॥ महासहे । कण्टकाढ्ये । कुब्ज कूजा कूजे इतिचभाषाप्रसिद्धे सेवतीप्रभेदे । यथा । चम्पकात् पुष्पशतकादशोकपुष्प मुत्तमम् । अशोकात पुष्पसाहस्रात् सेवतीपुष्प मुत्तमम् । सेवतीपुष्पसाहस्रात कुब्जक पुष्पमुत्तममितिनारसिंह पुराणम् ॥ अस्यगुणा यथा ॥ कुब्जक सुरभि स्वादु कषायानुरस सर । त्रिदोषशमनो हृष्य शीतहृत्तोचसम्मृतइति ॥ कौ उब्जति । उब्जआर्जवे । अच् । यद्वा । कुरीषत् उब्जमार्जवमस्य । श० । स्वार्थेक ॥

कुब्जकण्टक । पु । श्वेतखदिरे ॥

कुब्रम् । न । वने ॥ कुम्बति । कुविश्च्छादने । कुञ्जेन्द्रेतिरन ॥

कुभृद्रेखिक । पु । सप्तशलाकचक्रे ॥

कुमनीष । त्रि । कुत्सितबुद्धिमति ॥ कुत्सिता मनीषाऽस्य ॥

कुमार । पु । शुके ॥ कार्त्तिकेये । स्कन्दे ॥ नाट्योक्त्यायुवराजे ॥ अश्ववार

के ॥ पञ्चवर्षीयबालके ॥ वत्सादुमे ॥ अर्हदुपासकविशेषे ॥ सिन्धुनदे ॥ न । जाग्यशाल्मने । उत्तमस्वर्णे ॥ कुमारयति क्रीडति । कुमारक्रीडायाम् । पचाद्यच् ॥ कुत्सितो मारोऽस्येतिवा ॥ कौमारयति दुष्टान् । अच ॥ सदाबालत्वाद्वाकुमारः ॥ यद्वा । कामयते । कम० । कमेः कि दुश्चोपधायाश्चारन प्रत्यय. ॥

कुमारक. । पुं । वत्सतरे ॥ कुमारस्सिरतत्वात् ॥ कुमारयति । पचाद्यच् । कुमारइव । इवेप्रतिकृताविति कन् ॥ बालके ॥ जात कु पृथिवीं पश्चात् मारयेत् तत् कुमारकः ॥

कुमारपालः । पुं । शालिवाहनन्नपे ॥ इति हेमचन्द्र ॥

कुमारभृत्या । स्त्री । गर्भिण्याःपरिचर्यायाम् । बालतन्त्रे ॥

कुमारयु. । पु । युवराजे ॥

कुमारव । त्रि । कुमार वति ॥ कुमारोऽस्यास्य । अन्येभ्योपिदृश्यते इति व. ॥

कुमारवाणी । पु । मयूरे ॥

कुमारहृ । स्त्री । गङ्गायाम् ॥ दुर्गायाम् ॥ कुमारंहरते । पृ० । क्विप ॥

कुमारहा । त्रि । बालघातिनि ॥

कुमारिकः । त्रि । कुमारीमति ॥ कुमार्योऽस्यास्य । त्री०ठन ॥

कुमारिका । स्त्री । कुमार्यर्थे ॥ नवमल्लिकायाम् ॥ भारतवर्षस्यनवखण्डविशेषे । भरतखण्डे ॥ यथा । वर्णव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजनानिवसन्ति सर्वे इति ॥ स्थूलैलायाम् ॥

कुमारिणी । स्त्री । चपलाम् ॥ कुत्सितान दैत्यान् मारयति तच्छीला ॥

कुमारी । स्त्री । गैरसनवायाम् । पार्वत्याम् ॥ नवमल्लिकायाम् ॥ नदीप्रभेदे । शुक्तिमत् पादोद्भवायांसरिति ॥ सहायाम् । घृतकुमार्याम् ॥ यथा । कुमारी भेदिनी शीता तिक्ता नेत्र्या रसायनी । मधुरा बृंहणी बल्या वृष्या वातविषप्रणुत् ॥ गुल्मप्लीहयकृद्वृद्धिकफज्वरहरी हरेत् । ग्रन्थ्यग्निदग्धविस्फोटपित्तरक्तत्वगामयानिति ॥ अपराजितायाम् ॥ जम्बुद्वीपविभागे ॥ रामतरुण्याम् ॥ वन्ध्याकर्कोटक्याम् ॥ स्थूलैलायाम् ॥ मोहिनीपुष्पे ॥ तरणीपुष्पे ॥ श्यामापक्षिणि ॥ कन्यायाम् ॥ द्वादशवर्षीयायांकन्यायाम् ॥ यथा । अष्टवर्षा भवेद्गौरी दशवर्षा च कन्यका । सम्प्राप्ते द्वादशेवर्षे कुमारीत्यभिधीयते । इत्युक्तोभेदः ।

कन्याकुमारीत्यमरे तूपचाराद
भेद ॥ आगमेतु कुमारीपूजने अ
जातपुष्पाचेत तदाषोडशवर्षपर्यन्त
वयस्कापि कुमारीत्युच्यते। तस्या व
योभेदेन नामभेदा'। यथा। एक
वर्षा भवेत सन्ध्या द्विवर्षाच सर
स्वती। त्रिवर्षातु त्रिधामूर्त्ति श्चतु
र्वर्षातुकालिका ॥ सुभगा पञ्चवर्षा
च षड्वर्षाचउमाभवेत्। सप्तभि र्मा
लिनी साक्षात् अष्टवर्षाच कुब्जिका
॥ नवभि कालसङ्कर्षा दशभि श्चा
पराजिता। एकादशेतु रुद्राणी द्वा
दशाब्देतुभैरवी ॥ त्रयोदशेमहाल
क्ष्मी द्विसप्तापीठनायिका ॥ क्षेत्र
ज्ञापञ्चदशभि षोडशेचान्नदामता
॥ एवंक्रमेण सम्पूज्या यावत पुष्पन
जायते। पुष्पितापिचसम्पूज्या तत्
पुष्पादानकर्मणीति ॥ कुमारयति
। कुमारक्रीडायाम्। अच्। गौरा
दि ॥ यद्वा। कामयते। कमु०।
कमेऽकिदुच्चोपधायाह्रस्वारन। वय
सिप्रथम इतिङीप् ॥ काम्यतेवा॥
कुत्सितोमारोऽस्यस्या वा ॥

कुमालकः। पु। सौवीरदेशे ॥

कुमुत। न। कैरवे। कुमुदे ॥ रक्तो
त्पले ॥ त्रि। कृपणे ॥ अप्रीते ॥

कुमुदम्। न। कुमुदि। कैरवे। क
ह्लारे। इन्दुकमले। कोइ इतिभा
षा ॥ कुमुद पिच्छिल स्निग्ध मधुर
ह्लादि शीतलम् ॥ रूप्ये ॥ रक्तप
द्मे ॥ पु। नैर्ऋतकोणस्थदिग्गस्ति
नि ॥ रक्तोत्पलतुल्यवर्णत्वात ॥ ना
गविशेषे। तक्षकस्यपञ्चमेपुत्रे ॥ य
स्य वाला बहुश्यामा दीर्घलाङ्गलमा
श्रिता। ताम्रा पीता शितापश्चैव
प्रकीर्णाघोरकर्मण इतिरामायणप्रसि
द्धे वानरविशेषे ॥ दैत्यविशेषे ॥
सितोत्पले ॥ कर्पूरे ॥ कौमोदते।
मुदहर्षे। इगुपधेतिक ॥ पर्वतवि
शेषे ॥ भुवकविशेषे ॥

कुमुदखण्डम्। न। कुमुदानासमूहे
॥ कमलादिभ्य खण्ड ॥

कुमुदबान्धव। पु। चन्द्रे। शशिनि ॥
कुमुदानांबान्धव ॥ कर्पूरे ॥

कुमुदवती। स्त्री। कुमुद्वत्याम् ॥

कुमुदबीजम्। न। कुमुदतीबीजे।

कुमुदा। स्त्री। कुम्भिकायाम्। वारि-
पर्ण्याम्। कार इति भाषा। पाना
इति गौडभाषा ॥ गम्भारीवृक्षे ॥
शालपर्णीवृक्षे ॥ धातकीवृक्षे ॥ क
टफले ॥ अजाद्यतष्टाप् ॥

कुमुदाभिख्यम्। न। रूप्ये ॥ कुमुदमि
व अभिख्या शोभायस्य ॥

कुमुदावास। पु। कुमुदप्रायदेशे ॥ कु

मुदाना आवासो यस्मिन ॥

कुमुदिका । स्त्री । कटफले ॥ कैाम्भा इते । मुदीडर्थे । इगुपधेतिक । स्वार्थे कन ॥

कुमुदिनी । स्त्री । कुमुदयुक्तपुष्करिण्या दैा ॥ कुमुदलतायाम् ॥ उत्पलि न्याम् । काठो के । ा इतिभाषा ॥ कुमुदान्यत्र देशे सन्ति । पु० इनि ॥ कुमुदगणडे ॥ कुमुदानांसमूह' । ख ला० इनि ॥ पद्मिन्यां ये गुणा प्रो क्ता. कुमुदिन्याश्च ते स्मृता' । सातु मृणालादिसर्वेषु रक्तासमुदितागुणै. ॥

कुमुदिनीनायक । पु ।
कुमुदिनीपति । पु । } चन्द्रमसि ॥

कुमुदी । स्त्री । कटफले ॥

कुमुदेश. । पु । चन्द्रे । इन्दौ ॥

कुमुद्वान् । त्रि । कुमुदप्रायदेशे ॥ कुमु दानि प्रायाण्यत्र । कुमुदनडवेतसे भ्यो ड्मतुप् । आयड् च ॥

कुमुद्वती । स्त्री । कुमुदिन्याम् ॥ उगि तश्चेति ङीप् ॥ रामपुत्रस्य कुशस्य पत्न्याम् ॥ कुमुदनागस्य कनिष्ठा याम् ॥

कुमुद्वतीबीजम् । न । वेरा इतिप्रसिद्धे कैरविणीफले ॥ भवेत् कुमुद्वतीबी जं स्वादुरूक्षंहिमंगुरु ॥

कुमोदक । पु । विष्णौ ॥ इतिहेमच न्द्र ॥ को पृथिव्यामोदक पालक स्यात ॥

कुम्ब' । त्रि । बाहुकुण्ठे । दोर्मेढो । टुण्डा । इति भाषा ॥

कुम्बा । स्त्री । सुगहनायामाहतौ । नि विडवेष्टने । अस्पृश्यादिदर्शनवारणा यवेष्टने ॥ कुम्बति अनयावा । कुबि आच्छादने । चितिपूजिकथिकुम्बि चर्चश्चेत्यङ् । टाप ॥

कुम्भ । पु । एकादशे राशौ । कुम्भयोगे ॥ अस्मकालिकचन्द्राश्रितैसद्राशिफल म् । यथा । अथससतासहितो ऽन्य शुभप्रिय' कुम्भता कथितो ऽतिवि चक्षण । कलभगामिनि भोतक- रैनर. सदसि सज्जनमान सुरो चन. इति ॥ तल्लग्नेजातस्यफलम्तु । कुम्भलग्ने समुत्पन्नश्चलचित्तोतिसौ हृद । परदाररतो नित्यं सत्यकायोम हासुखी ॥ हस्तिमूर्द्धांशे । गजशिर स. पिण्डद्वये ॥ यथा । ते क्षत्रिया. कुम्भशिनो युवान परस्परं सात कविश्वताङ्गा. । कुम्भेषु लग्ना. सुपु पु गजानां कुम्भेषु लग्ना इवकामि नीनामिति ॥ राघवसारे । कुम्भ कार्ष्मपुत्रे ॥ वेश्यापतौ ॥ प्राणा यामाङ्गकुम्भके ॥ परिमाणान्तरे ॥ सत्र विंशच्छतं द्रोणो विंशतिद्रोण

स्वकुम्भ इति धान्यदशम्य कुम्भेभ्य इत्यत्राह कुल्लूकभट्टः ॥ अन्यच्च । द्रग्रहोणोभवेत खारी कुम्भस्तु द्रोण विंशतिरिति प्रायश्चित्ततत्त्वेकाव्याख्यानवाक्यम् ॥ वैद्यक परिभाषयात् द्रोणद्वयपरिमाणे । ६४ सेर इति भाषा ॥ कलशे । घटे । अस्य परिमाणं । यथा । षट्त्रिंशदङ्गुलायामं षोडशाङ्गुलमुच्यके । चतुरङ्गुलक कण्ठं मुखं तस्य षडङ्गुलम् ॥ पञ्चाङ्गुलिमित मूलविधानं घटनिर्मिताविति ॥ कलावतीदीर्घोक्तमान यथा । पञ्चाशदङ्गुलव्याम उत्सेध षोडशाङ्गुल । कलसानां प्रमाणन्तु मुखमष्टाङ्गुलं स्मृतम् ॥ षट्त्रिंशदङ्गुलकुम्भ विस्तारोन्नतिशालिनम् । षोडशं द्वादशं वा पि ततोन्यूनं न कारयेदिति ॥ न । गुग्गुलौ ॥ चित्रूति ॥ कुम्भूर्मिं कुतसितं वा उम्भति । उम्भपूरणे । कर्मण्यण् । पचाद्यच्वा । शकंध्वादि ॥

कुम्भक । पु । दक्षिणहस्तेन नासापुटद्वयंधृत्वा प्राणायामाङ्गे वायुस्तम्भने । पूरकेण पूरितस्यवायोरन्तरेव निरोधे ॥ कुम्भको निश्चलश्वास इति याज्ञवल्क्यः ॥ सद्वृत्तिनैश्चल्ये ॥ आत्मानुसन्धानदार्ढ्ये ॥ त्यागसङ्कल्पे छित्वा निरोध' कुम्भक' स्मृत रोधयन्ति स्तदभ्यासा द्युक्ति मे स्थैर्य निवारिता ॥

कुम्भकर्ण । पु । रावणानुजे ॥

कुम्भकार । पुं । शूद्रागर्भे विश्वकर्मैरसजाते जातिविशेषे । कुलाले । त्रिक्रिणि ॥ कुम्भ करोति । डुकृञ्० । कर्मण्यण् । उपपदसमास ॥ कुकुभपक्षिणि ॥

कुम्भकारिका । स्त्री । कुलत्थायाम् ॥

कुम्भकारी । स्त्री । कुलत्थिकायाम् ॥ मनशिलायाम् ॥ कुलत्थाञ्जने ॥ कुम्भकारस्य योषिति ॥ अषान्तात् टिड्ढेति ङीप् ॥

कुम्भतुम्बी । स्त्री । अलाबूभेदे । गोरक्षतुम्ब्याम् । गोरखतुवी गोलतूंवी इतिभाषा ॥

कुम्भदासी । स्त्री । कुट्टन्याम् ॥

कुम्भयोनि । पु । अगस्त्यमुनौ ॥ वशिष्ठमुनौ ॥ द्रोणाचार्ये ॥ कुम्भोयोनिरस्य ॥ द्रोण पुष्प्याम् ॥

कुम्भला । स्त्री । मुण्डितिकायाम् । मुण्डी इति भाषा ॥

कुम्भवीजक । पु । रीठाकरञ्जे ॥

कुम्भशाला । स्त्री । कुम्भनिर्माणादिगृहे । पाकपुट्याम् ॥ इति हैमचन्द्र ॥

कुम्भसन्धिः । पुं । आरबे । हस्तिकुम्भ

हृदयमध्यस्थाने ॥

कुम्भसम्भव । पु । अगस्त्यमुनौ ॥ कुम्भात् कलशात् सम्भवः उत्पत्तिर्यस्य सः ॥

कुम्भा । स्त्री । वेश्यायाम् ॥ नागकुम्भीति प्रसिद्ध भेषजे । नागदन्त्याम् ॥

कुम्भाण्ड । पु । बाणासुरस्य मन्त्रिविशेषे ॥ कुष्माण्डे ॥

कुम्भाण्डी । स्त्री । कुष्माण्ड्याम् ॥

कुम्भाधिपः । पु । शनिग्रहे ॥

कुम्भालाबु । स्त्री । कुम्भतुम्ब्याम् ॥

कुम्भिका । स्त्री । पाना इति गौड भाषा प्रसिद्धे जलजतृणविशेषे । काश्यादिदेशेषु कुम्भीति ख्याते पानीयपृष्ठजे । वारिपर्ण्याम् ॥ वारिपर्णी तु तत्पर्णा कुम्भिकेति प्रकीर्त्तिता ॥ पाटलावृक्षे ॥ द्रोणपुष्प्याम् ॥ नेत्ररोगवि० ॥ यथा । वर्त्मान्ते पिडका ध्माता भिद्यन्ते च स्रवन्ति च । कुम्भीकबीजसदृशाः कुम्भिकाः सन्निपातजाः इति माधव ॥ कुम्भीरस्यस्त्री । अलङ्गनिन्दनाशिनिदम् ॥

कुम्भी । पु । हस्तिनि ॥ कुम्भीरे ॥ गुग्गुलौ ॥

कुम्भीबीजम् । न । जयपाले ॥

कुम्भिपाकी । स्त्री । कट्फले ॥

कुम्भिमदः । पुं । हस्तिमदे ॥

कुम्भिल । पु । चौरे ॥ शालमत्स्ये ॥ श्लोकार्थचौरे ॥ श्याले ॥ इति हेमचन्द्र ॥

कुम्भी । स्त्री । उखायाम् ॥ पाटलावृक्षे ॥ वारिपर्ण्याम् ॥ कट्फले ॥ कुम्भापुष्प इति कोकणदेश प्रसिद्ध वृक्षविशेषे । रामालुविटपिनि ॥ वृश्चिकायाम् ॥ गर्ग्याम् ॥ कुम्भीव कुम्भो रसाधारत्वात् ॥

कुम्भीक । पु । देववल्लभे । पुन्नागवृक्षे ॥ कुम्भिकायाम् ॥ नपुंसकभेदे ॥ तस्य लक्षणं यथा । स्वे गुदे ऽब्रह्मचर्याच्च स्त्रीषु पुंवत् प्रवर्त्तते । स कुम्भीक इति ज्ञेयो गुदयोनिस्तु स स्मृत इति ॥

कुम्भीका । स्त्री । वङ्गदेशे दाडिमाकारफलायां लतायाम् ॥

कुम्भीधान्य । पु ।<br>
कुम्भीधान्यकः । पु । } वर्षनिर्वाहोचित धान्यादिधने गृहस्थब्राह्मणे ॥

कुम्भीनस । पुं । क्रूरसर्पे ॥

कुम्भीनसी । स्त्री । लवणासुरमातरि । रावणभगिन्याम् ॥

कुम्भीपाक । पु । नरकविशेषे । स्मृतापने ॥ य इह पशून् पक्षिणो वा प्राणतो रन्धयति तमपरुणं यमानुचरा तप्ततैले यत्र पाचयन्ति सकु-

श्रीपाकइति श्रीभागवतम् ॥

कुम्भीर । पु । कुम्भीर इति नाँका इतिच भाषा प्रसिद्धे मारके जलजन्तुवि० । नक्रे । गिलग्राहे ॥ कुम्भिन हस्तिन मीरयति । कर्मण्यण् । उपपदसमासः ॥

कुम्भीरमक्षिका । स्त्री । कुमीरापोका इति गौड भाषा प्रसिद्धे मक्षिका विशेषे । कणायाम् ॥ इतिहारावली ॥

कुम्भीवीजम् । पु । जयपाले ॥

कुम्भोलु । न । गुग्गुलौ ॥

कुम्भोलूखलकम् । न । गुग्गुलौ ॥ कुम्भोलूखलकाकाराद्वृक्षकोशान्नियातम् ॥

कुरका । स्त्री । सल्लकीवृक्षे ॥

कुरङ्कर. । पु । } सारसपक्षिणि । पु
कुरङ्कुर. । पु । } स्कराह्वे ॥

कुरङ्ग' । पु । हरिणविशेषे ॥ कुरङ्ग ईषत्ताम्र. स्याद्धरिणाकृतिको महान् ॥ कुरङ्गोहरिणो वल्य शीतल पित्तह्नु गुरु । मधुरो वातहृद्ग्राही किञ्चित् कफकरो मत' इति । हरिणस्यगुणैस्तुल्य कुरङ्ग कथितोबुधैरितिचभावप्रकाश' ॥ मृगे । वातायौ ॥ कौ रङ्गति । रगि० अच ॥ कौरङ्गोस्यस्य वा । अर्शआद्यच ॥ यद्वा । किरति । ह्वावि० । विलादिभ्य. कित्दित्यञ्च प्र० । बाहुलकात उत्वम् । कुरशब्देवाऽस्तु ॥

कुरङ्गनयना । स्त्री । मृगनयनायांनायाम् । कुरङ्गाक्ष्याम् ॥

कुरङ्गनाभि. । पु । कस्तूर्याम् ॥

कुरङ्गम । पुं । एणे । ऋष्ये ॥ हरिणविशेषोयम् ॥

कुरङ्गाक्षी । स्त्री । एणीनयनायाम् ॥

कुरङ्गिका । स्त्री । मुद्गपर्ण्याम् ॥

कुरङ्गी । स्त्री । कुरङ्गयोषायाम् । मृग्याम् ॥

कुरचिल्ल । पुं । कर्कटे ॥

कुरट' । पु । चर्मकारे ॥

कुरण्ट । पु । } पीतायांभिण्ट्याम्
कुरण्टक' । पुं । } । पीताम्लाने ॥ कुर्यते । कुरशब्दे । बाहुलकात् अण्टः । स्वार्थे कन् ॥

कुरण्ड: । पुं । मुष्कवृद्धिरोगे । अण्डवृद्धे ॥ साकरण्डक्के ॥

कुरण्डक. । पु । त्रिसन्ध्यादेव्या:स्थाने ॥

कुरर' । पुं । उत्क्रोशखगे ॥ कवते । कुङ्शब्दे । कुव'करन् ॥

कुरराङ्घ्रि. । पु । देवसर्षपे । रक्तमूलके । हृच्छदले ॥

कुररी । स्त्री । मेष्याम् ॥ कुररश्चिकाम् ॥

कुररीकता । स्त्री । छन्दोविशेषे ॥ कुर

रीवृत्ता नजभजैर्लगयुक्। यथा। अ नतिचिरोज्झितस्य जलदेन चिर स्थितबहुबुद्बुदस्य पयसोनुकृतिम्। विरलविकीर्णवज्रशकलासकला मिह विदधाति धौतकलधौतमहीति॥

कुररः। पु। उत्क्रोशे। कुररे॥ स्त्री। कुरली॥ इतिधरणी॥

कुरव'। पु। पीतझिण्ट्याम्॥ कुरवके। रक्तझिण्ट्याम्॥ सितमन्दारे॥ कुत्सितशब्दे॥ त्रि। कुत्सितशब्दयुक्ते॥

कुरवक.। पु। रक्ताम्लाने। रक्तसहायाम्। रक्तझिण्ट्याम्॥ पीतझिण्ट्याम्॥ त्रि। कुत्सितरवे॥ कुत्सितः ईषद्वा अश्लीलो मत्तमकरन्दपानात् रवोऽस्य। बहुव्रीहिस्ततः कः॥

कुरसः। पु। मद्यभेदे॥ कुत्सितरसे॥ त्रि। कुत्सितरसयुक्ते॥ कुत्सितो रसोऽस्य॥

कुरसा। स्त्री। गोजिह्वालतायाम्॥

कुराह.। पु। कुलाहे। ईषत्पाण्डौरूक्षजङ्घे घोटके॥ इतिहेमचन्द्रः॥

कुरी। स्त्री। तृणधान्यभेदे॥

कुरीर'। पु। काम्बले॥ न। मैथुने॥ क्रियते। कृञ्। कृञउच्चेति ईरन्। प्रत्ययः। उदन्तादेशश्च॥

कुरु। पु। आग्नीध्रराजपुत्रे। प्रियव्रतस्य पौत्रे॥ चन्द्रवंशीयराजविशेषे। सम्वरणराजभार्यायां सूर्यकन्यायां तपत्यां जाते॥ ओदने। भक्ते॥ श्रीकण्ठजाङ्गले॥ कर्मकारिकायाम्॥ कर्बुरे॥ करोति। कृञ्। कुः। कृग्रोरुच्चेतिकुः॥ जम्बूद्वीपस्यनववर्षान्तर्गते वर्षविशेषे॥ कुरव. च स्त्रियाः। तेषां निवासो जनपदः कुरव। निवासे ऽणो जनपदेलुप्। लुपियुक्तवद्व्यक्तिवचने॥ पु भू। नीवृद्विशेषे॥ हस्तिनापुर मारभ्य कुरुक्षेत्रा ब्दक्षिणे। पञ्चालपूर्वभागेतु कुरुदेश प्रकीर्त्तित॥

कुरुकन्दकम्। न। मूलके॥

कुरुक्षेत्रम्। न। देवयजने। देशविशेषे। धर्मक्षेत्रे। कुरुपाण्डवानां युद्धभूमौ॥ तरन्तुकारन्तुकयोर्यदन्तरं रामह्रदानाञ्च मचक्रुकस्य च। एतत्कुरुक्षेत्रसमन्तपञ्चकं प्रजापतेरुत्तरवेदिरुच्यते॥ यथाग्राममपिलोकानां कुरुक्षेत्रं विशिष्यते। अर्द्धतस्तु कुरुक्षेत्रमर्द्धतस्तु पृथूदकम्॥ कुत्सितं रौतीति कुरु पापंकर्म तस्यक्षेपणात् गमनकारणत्वात् क्षेत्रम्॥ यद्वा। कुः पृथिवी तस्यारौतिशब्दं करोति य' प्राणस्तस्यनिवासभूतम्॥ स्थाणु

प्रियादेव्या.स्यानमेतत ॥

कुरुक्षेत्रीयोगः । पु । एकस्मिन सावन दिने तिथित्रयनक्षत्रत्रययोगत्रया- णां स्पर्शे ॥ कुरुक्षेत्रे मरणयोगे ॥ ॥ यथा। पञ्चग्रहयुते मृत्यौ लग्न- संस्थे बृहस्पतौ । सौम्यक्षेत्रगते च क्षे कुरुक्षेत्रे मृतिर्भवेदितिजातका मृतसङ्ग्रहेयोगाध्याय. ॥

कुरुट. । पु । सितावरशाके ॥

कुरुण्ट । पुं । पीतझिण्ट्याम् ॥ पीताम्लाने ॥

कुरुण्टकः । पुं । पीतपुष्पाम्लाने ॥ पीतझिण्ट्याम् । सहचर्याम् ॥ करटति रुटिस्तेयकरणे । ण्वुल् कुन्वा । कुत्सित' कौवा करण्टकः । कुगतीति समास ॥

कुरुण्टी । स्त्री । दारुपुत्तलिकायाम् ॥

कुरुपतिः । पु । युधिष्ठिरे ॥

कुरुबम् । न । कुलपालके । कमला नेबू इति गौडभाषाप्रसिद्धे । नारङ्ग विशेषे ॥

कुरुम्बा । स्त्री ।<br>कुरुम्बिका । स्त्री । } द्रोणपुष्प्याम् ॥

कुरुम्बिका । स्त्री । सैंहलीवृक्षे ॥

कुरुराट् । न । दुर्योधने ॥

कुरुराज' । पु । दुर्योधने ॥ कुरूणां देशविशेषाणां राजा । टच् ॥

कुरुलः । पु । भालस्थितचूर्णकुन्तले । भ्रमरके । भ्रमरालके ॥

कुरुवक' । पु । शोणाम्लाने । रक्ताम्लाने । रक्तझिण्ट्याम् ॥ पीतझिण्ट्याम् ॥ ईषद्रौति । रुशब्दे । संज्ञायांकुन् । उवङ् ॥

कुरुवर्ष । पु । कुरुसंज्ञके वर्षे ॥

कुरुविन्द । पुं । मेघनामनि । मुस्तायाम् ॥ कुल्माषे ॥ व्रीहिभेदे ॥ मुकुरे ॥ हिङ्गुले ॥ न । पद्मरागमणौ । मानिक इति भाषा ॥ काचलवणे ॥ कुरून् विन्दति । विद्लृलाभे । अनुपसर्गाल्लिम्पविन्दधारिपारि वेद्युदेजिचेतिसातिसाहिभ्यश्चेति श ॥

कुरुविल्व' । पु । पद्मरागमणौ ॥

कुरुविस्त । पुं । स्वर्णपले । ४ तोला सोना इतिभाषा ॥ कुरुषु विस्तः ॥

कुरुवृद्ध । पु । भीष्मपितामहे ॥ कुरुषु कुरुवंशजेषु वृद्ध ॥

कुरूद्वहः । पु । युधिष्ठिरे ॥

कुरूप्यम् । न । रङ्गे ॥

कुर्णज' । पुं । कुलञ्जनवृक्षे । गन्धमूले ॥

कुर्पर. । पु । कफोणौ ॥ जानुनि ॥ कुरति । कुरशब्दे । क्विप ॥ कोरणम् । संपदादित्वा । पिपर्त्ति । पॄ० अच् । कुराचासौपरश्च ॥ कुरा शब्देन परो वा ॥

कुर्पास. । पुं । अर्द्धचोलके ॥

कुर्पासकः । पु । कञ्चुलिकायाम् । आँगी काँचुली चोली इतिभाषा ॥

कुर्वत् । त्रि । कर्मकारे । भृत्ये ॥ करोति । डुकृञ्० । शतृ ॥ तनादिकृञ्भ्यउ. । अतउत्सार्वधातुके । यण् ॥

कुर्वाणः । त्रि । भृत्ये ॥ कारके ॥ कुर्वते । डुकृञ्० । शानच् ॥

कुलम् । न । जनपदे ॥ मध्यमहलवहेन यावती भूमि र्वाह्यते तावत्यां भूमौ ॥ द्वयौ कुलन्तु भुञ्जीतेतिमनुः ॥ गोत्रे ॥ सजातीयगणे ॥ यथा । विप्रकुलम् ॥ आचारो विनयो विद्या प्रतिष्ठा तीर्थदर्शनम् । निष्ठा वृत्ति स्तपो दानं नवधा कुललक्षणम् ॥ भवने ॥ तनौ । देहे ॥ सव इति भाषा प्रसिद्धेषु जीवादिषु यथा । जीवः प्रकृतितत्त्वञ्च दिक्कालाकाशमेव च । क्षित्यप्तेजो वायवश्च कुलमित्य भिधीयतेइति ॥ पु । कुलिके । शिल्पिकुलप्रधाने ॥ कोलति । कुलसंस्त्यानेबन्धुषु च । इगुपधेतिकः ॥ यद्वा । कूयते । कुङ्शब्दे । बा० लच् ॥ कुम् भूमिं लातिवा । कौलीयते वा । लीङ् श्लेषणे । अ-

न्यभ्योपीतिड. ॥

कुलक । पु । वल्मीके ॥ काकतिन्दुके ॥ कुलश्रेष्ठे ॥ मरुवकवृक्षे ॥ हरितसर्पे ॥ न । पटोले ॥ पद्यादि सम्बद्धो कसमूहे ॥ त्रि । शिल्पिकुलप्रधाने । कुलश्रेष्ठिनि ॥ कुलस्य गृहस्य प्रतिकृतिरिव । इवेप्रतिकृता विति कन् ॥ यद्वा कोलति । कुल- संस्त्याने । इगुपधेतिकः । स्वार्थे कन् कुन् वा ॥

कुलकर्कटी । स्त्री । चीनाकर्कट्याम् ॥

कुलकुण्डलिनी । स्त्री ।<br>
कुलकुण्डली । स्त्री । } मूलाधार पद्मस्थितशिवशक्तिविशेषे ॥

कुलकः । पुं । करताल्याम् । तालमर्द्दले ॥ इतिधारावली ॥

कुलचया । स्त्री । शूकशिम्ब्याम् ॥

कुलजः । पु । कुलीने । सत्कुलप्रसूते ॥ कुले जातः । सप्तम्यांजनेर्डः ॥

कुलजा । स्त्री । कुलपालिकायाम् ॥ डान्ताट्टाप् ॥

कुलञ्ज. । पुं । कुलञ्जनवृक्षे ॥

कुलञ्जनः । पु । स्वनामख्याते कुलञ्जे । गन्धमूले ॥ कुलञ्जनस्तु स्वरकृत् कफवातमुखशोधनः । अर्श इति- शेषः ॥

कुलटा । स्त्री । असत्याम् । पुंश्चल्या

म् । वन्धक्याम् ॥ व्यभिचारार्थं कुलानि अटति । अट० । पचाद्यच् । शकंध्वादिः ॥ भिक्षुक्याम् । सत्याम् ॥ भिक्षार्थं कुलानि अटति । पूर्ववत प्रक्रिया ॥ परकीयान्तर्गतनायिकाविशेषे ॥

कुलतिथिः । पु । स्त्री । चतुर्थ्यष्टमीद्वादशीचतुर्दशीषु ॥ यथा । द्वितीया दशमी षष्ठी कुलाकुल मुदाहृतम् । विषमास्त्वाऽकुला सर्वाशेषाश्चतिथयःकुलाः ॥ इति तन्त्रशास्त्रम ॥

कुलत्थः । पुं । स्वनामाख्याते ऽन्नविशेषे । ताम्रबीजे । कुलथ कुलथी इति भाषा ॥ कुलत्थ कटुकः पाके कषाय' पित्तरक्तकृत । लघुर्विदाही वीर्योष्णःकासश्वासकफानिलान् ॥ हन्ति हिक्काश्मरीशुक्रदृगानाहान् सपीनसान् । स्वेदसङ्ग्राहको मेद'कफज्वरकृमीन्हरेत् ॥

कुलत्था । स्त्री । कुलत्थिकायाम् । दृक्प्रसादायाम् । वनकुलत्थे ॥ अस्यागुणा यथा । कटुत्वम् । तिक्तत्वम् । अर्शःशूलनाशित्वम् । विबन्धाध्मानशमनत्वम् । चक्षुर्हितत्वम् । व्रणरोपणत्वञ्चेति ॥ कुलत्थाञ्जने ॥

कुलत्थाञ्जनम् । न । कुम्भकार्याम् । प्रलापहायाम् ॥

कुलत्थिका । स्त्री । कुलत्थाकाराञ्जनप्रस्तरविशेषे । चक्षुष्यायाम् । खापरिया इति भाषा ॥ वनकुलत्थे ॥ कुलत्थप्रतिकृतिः । इवेप्रतिकृताविति कन ॥ यद्वा । कुलेतिष्ठति । ष्ठा० । सुपीतिक । स्वार्थे कन । पृ० ॥

कुलधर्मः । पु । असाधारणकुलोचितधर्मे । स्वजातीयधर्मे । कुलाचारे ॥ यथा । उत्सन्नकुलधर्माणां मनुष्याणांजनार्दन । नरकेनियतं वासोभवतीत्यनुशुश्रुमेति भगवद्गीता ॥ दिव्यवीरपशुभावान्तर्गतदिव्यधर्मे । यथा । कुलधर्मात् परो धर्मो नास्ति ज्ञाने ऽच मामके । यस्यानुष्ठानमात्रेण ब्रह्मज्ञानी नरोभवेदिति ॥ कुलस्य धर्मः ॥

कुलधारक । पुं । औरसात्मजे । पुत्रे ॥ कुलस्यवंशस्यधारक ॥

कुलनक्षत्रम् । न । भरणीरोहिणीपुष्यमघोत्तरफल्गुनीचित्राविशाखाज्येष्ठाश्रवणोत्तरभाद्रपत्सु ॥ यथा । वारुणार्द्राभिजिन्मूलं कुलाकुल मुदाहृतम् । कुलानि समधिष्ण्यानि शेषाणि चाकुलानिचेतितन्त्रशास्त्रम् ॥

कुलनाथः । पु । कुलपतौ ॥

कुलनाशः । पुं । उष्ट्रे ॥ कुलध्वंसे ॥ क्र

त्सकारणयथा। कूर्मोपविभागे १५ ऽध्याये। अन्वतात पारदार्याश्च तथा ऽभक्ष्यस्य भक्षणात्। अश्रौतधर्माचरणात क्षिप्रनश्यतिवैकुलम्॥ अश्रोत्रियेवेददानात् वृषलेषुतथैव च। विहिताचारहीनेषु क्षिप्रनश्यतिवैकुलमिति॥ सद्भावस्य कारणन्तु। यावच्च वेदधर्माःस्युर्यावत्सा स्कन्दार्चनम्। यावत्साक्कुपिकृष्णच तावत्सोभवेत्क्वचीति॥

कुलपति। पु। मुनिविशेषे॥ यथा। मुनीनां दशसाहस्र यो न्नदानादि पोषणात। अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृत। इतिपुराणो क्तलक्षणलक्षिते॥ गणमुख्ये। जमादार चौखदार इत्यादि यवनभाषा प्रसिद्धे॥ यथा। शिविकावाहानां कुलपतिः॥ कुलस्यपति॥

कुलपथ। पु। दमनकवृक्षे॥

कुलपर्वतः। पु। महेन्द्रादिसप्तशैलेषु॥ यथा। महेन्द्रो मलय। सह्य शुक्तिमा न्नृक्षपर्वतः। विन्ध्य श्चपारिपात्र श्चसप्तात्र कुलपर्वताः इति। अत्र भारतेवर्षे। इतविष्णुपुराणम्॥

कुलपालकम्। न। कुलम्मे। कमला नेबु इति गौड भाषा प्रसिद्धे नार ङ्गविशेषे॥ त्रि। वंशप्रतिपालके॥

कुलपालि। स्त्री। कुलवध्याम्॥

कुलपालिका। स्त्री। कुलस्त्रियाम्। साधव्याम्। व्यभिचारवारणेन कृत कुलरक्षायाम्॥ यथा। एकत्र कौशलतभङ्गशङ्का विदग्धता भङ्गभयं परत्र। इत्थाकुलानां कुलपालिकानां मसागते रेव गताश्रिया मेति॥ अपिच। सुखयसितरां न रचयति परिचयलेशं गवाङ्गने व श्री। कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापीति॥ कुलम् पालयति। पालरक्षणे। कर्मण्यण्। स्वार्थेकन्॥

कुलम्भरः। पु। कुलम्भके। सन्धिचौरे॥

कुलवान्। त्रि। कुलिनि॥ कुलमस्य स्य। यवादित्वात् पक्षे मतुप्॥

कुलवर्णा। स्त्री। रक्तत्रिवृति॥

कुलवारः। पु। भौमशुक्रयो॥ यथा। रविश्चन्द्रो गुरुः सौरि श्चत्वारश्चा कुला इमे। भौमशुक्रौ कुलाख्यौ च बुधवार कुलाकुल॥ इतितन्त्रशास्त्रम्॥

कुलविप्र। पु। कुलपुरोहिते॥

कुलश्रेष्ठी। त्रि। शिल्पिकुलप्रधाने। कुलिके॥ कुलश्रेष्ठत्वमस्यास्ति। इनि॥

कुलसप्तक' । पु । तिथिवारनक्षत्र विशेषे ॥ यथा । अर्काष्टेन्द्र वेदतिथिषु । कुजशुक्रयो । पूर्वाश्वीज्यमघेन्दुकर्णाद्रं ख्नदीशेन्द्रचित्रासु ॥

कु॒लसत्तम' । त्रि । कुलश्रेष्ठिनि ॥

कुलसम्भव । पु । बीज्ये ॥ कुलेसम्भवति । अच् ॥ कुलेसम्भवोऽस्य वा ॥ यद्वा । सम्भवत्यस्मात् । ऋदोरप् । कुलस्य सम्भव. ॥

कुलसौरभम् । न । मरुवकवृक्षे ॥

कुलस्त्री । स्त्री । कुलपालिकायाम् । नान्यगामिन्यां कुलरक्षिकायाम् ॥ कुलस्य पालिका स्त्री । शा० ॥

कुलहण्डक: । पु । आवर्त्ते । आवर्त्ते ॥

कुलाकुलतिथि । पु स्त्री । द्वितीयाषष्ठी दशमीषु ॥ यथा । द्वितीयादशमीषष्ठी कुलाकुल मुदाहृतमिति तन्त्रशास्त्रम् ॥

कुलाकुलनक्षत्रम् । न । आर्द्रामूलाऽभिजिच्छतभिषासु ॥ यथा । वारुणाद्रीभिजिन्मूल कुलाकुल मुदाहृतमिति ॥

कुलाकुलवार । पु । बुधवारे ॥ यथा । भौमशुक्रौकुलाख्यौ हि बुधवार. कुलाकुल इति ॥

कुलाकुलसप्तक. । त्रि । तिथिवारनक्षत्रविशेषे ॥ यथा । द्वितीयाषष्ठीदशमीषु ॥ बुधे ॥ मूलाशतभिषाद्रीभिजितसु ॥

कुलाचल. । पु । कुलपर्वते ॥

कुलाचार. । पु । कुलधर्म्मे ॥ धर्मकामार्थमोक्षप्रदे आगमोक्ताचारविशेषे ॥ यथा । जीव प्रकृतितत्त्वञ्च दिक्कालाकाशमेवच । क्षित्यप् तेजोवायवश्चकुलमित्यभिधीयते ॥ ब्रह्मबुद्ध्यानिर्विकल्पमेतेष्वाचरणञ्च यत् । कुलाचार' सएवाद्येधर्मकामार्थमोक्षद इति ॥ त्रि । कुलाचारविशिष्टे ॥ कुलेआचार: ॥ कुलाचारोऽस्ति अस्य । अर० अच् ॥

कुलाचार्य्य । पु । कुलाचाराभिज्ञे ॥

कुलाट । पु । क्षुद्रमत्स्यप्रभेदे ॥

कुलाद्रि. । पु । कुलाचले । कुलपर्वते ॥

कुलाधारक । पु । पुत्रे ॥ कुलस्य आसमन्तात धारक ॥

कुलाय । पु । यज्ञविशेषे ॥ स्थानमात्रे ॥ नीडे । पक्षिनिलये । घोंसला कोल इति भाषा ॥ न । शरीरे ॥ कुल पक्षिसङ्घातोऽयतेऽत्र । अयगतौ । हलश्चेतिघञ ॥ यद्वा । कौ लायोगति रस्मात् ॥

कुलायस्थ' । पुं । पक्षिणि ॥ कुलाये तिष्ठति ष्ठा० । सुपिस्थ इतिक ॥

कुलायिका । स्त्री । पक्षिशालायाम् ॥

कुलालः । पुं । कुक्कुभेखगे ॥ घूकपक्षिणि ॥ कुम्हार इति भाषा प्रसिद्धे कुम्भकारे ॥ अस्योत्पत्तिर्यथा । मालाकारात् कर्मकार्याञ्च कुम्भकारोऽभ्यजायत इति प० सं० ॥ पट्टिकारात्तैलिकाद्वा कुम्भकारोऽभवत् । इति प० प० ॥ कुभूमिं लालयति । लल विलासे । कर्मण्यण् । डलयोरैक्यम् । कुलमालयति वा । आतोऽनुपेतिकः । कुलमलति वा । अच० । अण् ॥ कुलं लुनाति वा । लूञ् छेदने । ड ॥ कोलति वा । कुल संस्याने । तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्य कालन् । इति कालन प्रत्यय ॥

कुलाली । स्त्री । नीलोपलभेदे । अञ्जनान्तरे । चक्षुष्यायाम् । कुलत्थाकाराञ्जनप्रस्तरविशेषे ॥ अरण्यकुलत्थिकायाम् ॥ कुलालभार्यायाम् ॥ कुलमलति । अच० अण् । ङीप् ॥

कुलाहः । पु । ईषत् पीतवर्णौ कृष्णजानौ घोटके ॥ इतिहेमचन्द्र ॥

कुलाहक । पु । कृकलासे ॥ गङ्गाकुले खाडा इतिगौडभाषाप्रसिद्धे वृक्षविशेषे ॥

कुलाहल । पु । कोकसीमा इतिगौडभाषाप्रसिद्धे क्षुद्रवृक्षविशेषे । भूकदम्बे ॥

कुलि । पुं । हस्ते । भुजादले ॥ स्त्री । कण्टकार्याम् ॥

कुलिक. । पु । अष्टमहानागान्तर्गतनागविशेषे ॥ काल्याकडा इतिगौड प्रसिद्धे द्रुमविशेषे ॥ वेलाविशेषे ॥ यथा । शक्रार्कदिग्वसुरसाग्न्यश्विन्य कुलिकाख्वे: । राहौर्निरेकाक्षिव्यंशा शनैश्चान्योपिनिन्दितइसि ॥ त्रि । कुलश्रेष्ठे । कुलसत्तमे । शिल्पिकुलप्रधाने ॥ कुलमधीनत्वेनास्यास्ति । अतइनिठनाविति ठन ॥

कुलिङ्ग. । पु । फिङ्गा इतिगौडभाषाप्रसिद्धे पक्षिविशेषे । धूम्याटे । फिङ्गके ॥ भूप्रत्यासन्नगमनचारिणि धान्यजीविनिखगे । चटके । गौरय्या चिडी इतिभाषा ॥ कुलिङ्ग. शीतल. स्निग्ध स्वादु शुक्रकफप्रद । सन्निपातहरोवेश्म चटकस्त्वतिशुक्रल ॥ त्रि । कुत्सितलिङ्गधारिणि ॥ कुत्सितंलिङ्गमस्य ॥

कुलिङ्गक । पुं । कलविङ्के । चटके ॥

कुलिङ्गाक्षी । स्त्री । पेटारी इतिगौडभाषाप्रसिद्धे पेटिकावृक्षे ॥

कुलिङ्गी । स्त्री । कर्कटशृङ्गीवृक्षे ॥

कुली । त्रि । कुलवति ॥ कुलमस्यास्य । बलादित्वात् पक्षे इनि ॥

कुलिर'। पुं। कुलीरे। कर्कटे॥

कुलिशः। पु। न। दम्भोलौ। वज्रे॥ कुलौ कूलेशेते अन्येष्वपीतिड॥ कुलिन' पर्वतान श्यति वा। शोत०। आतोनुपेतिकः॥ कुत्सितम् ईषद्वा लिशति। लिशअल्पीभावे। इगुपधेतिकः॥ अस्थिसञ्चारद्रव्ये॥ पु। मत्स्यविशेषे। काष्ठकाष्ठोले॥

कुलिशद्रुमः। पु। सुहीवृक्षे। थूहर इतिभाषा॥

कुलिशनायकः। पु। शृङ्गारबन्धविशेषे॥ यथा। स्त्रीपादद्वय माकृष्य विमुमुञ्चितलिङ्गकः। वेगिष्व मीडयेत कामी वन्ध कुलिशनायकइति॥

कुलिशपाणि। पु। इन्द्रे॥

कुलिशाङ्कशा। स्त्री। वौद्धानांविद्यादेवीविशेषे॥

कुलिशासन। पु। शाक्यमुनौ॥

कुली। स्त्री। कण्टकार्याम्॥ पतन्याज्येष्ठभगिन्याम्॥ गौ० ङीष॥

कुलीन। पु। आजानेये। श्रेष्ठहये॥ त्रि। कुलाचारस्थिते। कौले॥ वीरे॥ कुलोद्भवे। महाकुले। आर्ये॥ कुलस्यापत्यम्। कुलात्ख॥ उत्कर्षविशेषविशिष्टवंशजकुलीनइति गौडा॥ सचवङ्गजकुलाचार्यग्रन्थे कुलदीपिकायामाधुनिककुलीनत्वे न वर्णितो द्रष्टव्यः॥

कुलीनकः। पु। वनमुद्गे॥

कुलीनसम्। न। जले॥ इतिहेम'॥

कुलीर। पु। काँकडा इतिप्रसिद्धे जलचरे। कर्कटे॥ कर्कटराशौ॥ कोलति। कुलसं०। गम्भीरादयश्चेति ईरन्॥ कौलीयते। लीङ श्लेषणे। बा०रक्॥ यद्वा। कुलमस्त्यस्य। मतुप्। समीरयति। कर्मण्यण्। जनकभक्षकत्वात्॥ स्वयमंस्त्री। सं० ङीप्। कुत्सिताली। तां राति वा॥ कुटीरशब्दस्य कपित्थकादित्वाल्लत्वेपि कुलीरः॥

कुलीरविषाणी। स्त्री। शृङ्ग्याम्॥

कुलीरशृङ्गी। स्त्री। कर्कटशृङ्गीवृक्षे॥

कुलीरात। पु। कर्कटशिशौ। छोगवो॥ इतिचिकाण्डशेषः॥

कुलुकम्। न। जिह्वामले॥ इतिहेमचन्द्रः॥

कुलुकगुञ्जा। स्त्री। उल्कायाम्॥

कुलेश'। पु। सदाशिवे॥ कुलपतौ॥

कुलेशानी। स्त्री। उमायाम्। पार्वत्याम्॥

कुलेश्वर। पु। सदाशिवे॥ कुलस्य धर्मविशेषस्य ईश्वरः॥ गोत्रपतौ॥

कुलेश्वरी। स्त्री। पार्वत्याम्। शिवायाम्॥ कुलस्य ईश्वरी॥

कुलोत्कट । पु । कुलीनाश्वे ॥

कुलोद्गत । त्रि । कुलाकुलनियमिते ॥

कुलोद्भव । त्रि । कुलीने ॥ कुलेउद्भवोयस्य ॥

कुल्फ । पु । रोगे ॥ शरीरावयवे । गुल्फ ॥ कलते । कलशब्दसख्यानयो । कलिगलिभ्याम्फगस्योत्व ॥

कुल्मलम् । न । पापे ॥ कुष्णाति । कुषनिष्कर्षे । कुटिकुषिभ्यांक्मलन कुषेर्लश्च ॥

कुल्माष । पु । यावके ॥ अर्द्धस्विन्नधान्ये । घुघुनी कौश्चारी इतिभाषा ॥ अर्द्धस्विन्ना स्तु गोधूमा अन्येपि च चणकादय । कुल्माष इतिकथ्यन्ते शब्दशास्त्रेषुपण्डितै ॥ कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चस ॥ वणभेदे ॥ चणकांशो पाचिपाविविके ॥ कोटदलम पे ॥ कुल्सितमाषे ॥ मूकमूष्टिरगाद्दौ । न । काञ्जिके ॥ कुलं मस्यति । मसीपरिणामे । क मैसृयघ । पृ० ॥ यद्वा । के लति । कु ख० । क्षिप कुल अर्द्धस्विन्नोमाषोयत्र ॥ कुल बन्धुर्माषोयत्र ॥

कुल्माषाभिषुतम् । न । काञ्जिके ॥ कुल्माषैर्यवादिभिरर्द्धस्विन्नैरभिषूयतेस्म । षुञ्. क्त । ययम् ॥

कुल्मास । पुं । कुल्माषार्थेषु ॥

कुल्यम् । न । अस्थि । कीकसे ॥ अष्टद्रोणयाम् ॥ सूर्पे ॥ आमिषे ॥ मान्ये ॥ त्रि । कुलजे । कुलोद्भवे ॥ कुलहिते ॥ कुलस्यापत्यम् । अपूर्वपदादन्यतरस्यामितियत् ॥ कुलेभवम् साधुवा । दिगादिस्वाद्यत् तत्र साधुरिति वा ॥ यद्वा । कोलति कुल्यते वा । कुलस० । अघ्न्यादयश्च ॥

कुल्या । स्त्री । सारिण्याम् ॥ कूल नहर इतिभाषाप्रसिद्धायां पयःप्रणाल्याम् । सारणौ ॥ कुल्याऽल्पाकृत्रिमासरित् । जीवन्तिकौषधौ ॥ कुलस्त्रियाम् ॥ अष्टद्रोणमितेमाने ॥ कुले प्राणिगणे कुटुम्बदाम्पत्ये वा साधु । तत्रसाधुरितियत् ॥

कुवम् । न । उत्पले । जलजपुष्पमात्रे ॥ कौवलते । वलसवरणे । अन्येभ्योपीतिड ॥ यद्वा । कुवते । कुङ शब्दे कुटादि । पचाद्यच् ॥

कुवकालुका । स्त्री । घोलीशाके ॥

कुवङ्गम् न । सीसके ॥

कुवज्रकम् । न । वैक्रान्तमणौ ॥

कुवलम् । न । उत्पले ॥ मुक्ताफले ॥ बदरीफले ॥ त्रि । सवलनाशके ॥ कौवलते । वल० । पचाद्यच् ॥ कुवल्या फलम् । अणुलुकौ । लुक्तद्धितलुकीतिङीपीलुक ॥

कुवलयम् । न । उत्पले । चन्द्रविकाशिनि । कमोदिनी कोंई इतिभाषा ॥ श्वेत कुवलयम्प्रोक्त कुमुदञ् कैरवन्तथा ॥ नीलोत्पले ॥ इतिराजनिर्घंएट ॥ यथा । कुवलयदलनीलवर्न्नैरीस्निग्धकेशमिति ॥ कमलकुमुदादिसामान्ये जलज पुष्पे ॥ कोर्वलयमिव शोभाकरत्वात् ॥ भूमण्डले । भूमिवलये ॥

कुवलयापीड । पु । कसस्य हस्तिरूपे दैत्यविशेषे ॥

कुवलयिनी । स्त्री । उत्पलिन्याम् ॥

कुवलाश्वः । पु । धुन्धुमाररूपे ॥

कुवली । स्त्री । कोलिवृत्ते ॥ कौवलति । वल प्राणने । पचाद्यच् । गौ० ङीष् ॥

कुवलेशय । पु । विष्णौ ॥ कुभूमिं वलते सरणोतीतिकुवलं नोयम् । वल सवरणे । पचाद्यच । कुवले जले शेते । शीङो ऽधिकरणेशेतेरित्यच । शयवासेष्वलुक ॥

कुवाद । पु । कुत्सितवादे ॥ त्रि । कुचरे । परदोषकथनशीले ॥ कुत्सितो वादो ऽस्य । अर्० अच ॥

कुवित । अ । भूयर्थे ॥ प्रशसायाम् ॥

कुविन्द । पु । शूद्रागर्भे विश्वकर्मणोजाते । तन्तुवाये ॥ कुम् भुवंविन्दति कुत्सितं वाविन्दति । विद्लृलाभे । गवादिषुविन्दे संज्ञायामिति श ॥ यद्वा । कुप्यति कुपक्रोधे । कुपेर्वावचेति किन्दच ॥

कुवृत्तिकृत । पु । काँटाकरञ्ज इतिगौडभाषाप्रसिद्धे करञ्जभेदे । पूतिके ॥ त्रि । कुवृत्तिकर्त्तरि ॥

कुवेणि । स्त्री । मत्स्याधान्याम् ॥

कुवेणी । स्त्री । ग्वालइ इतिगौडभाषा प्रसिद्धे मत्स्यस्थापनपात्रे । मत्स्याधान्याम् ॥ कुत्सितं वेणन्ते मत्स्या अस्याम् । वेणृगतौ । हलश्चेति घञ् । गौरादित्वान् ङीष् ॥

कुवेलम् । न । कुवलये ॥ इतिहेमचन्द्र ॥

कुश । पु । रामसुते ॥ कुशोन्मृष्टकुश । वाल्मीकिना कुशै रुन्मृष्टो गर्भक्लेदोऽस्य ॥ योक्त्रे ॥ घृतसमुद्रेणावृतेद्वीपविशेषे ॥ कुशोभूत् काञ्चन कोशेस्वयम्भुविधियच्छति । अयमेवास्यकुशसज्ञायां कारणम् ॥ न । जले ॥ पु । न । कुश इतिभाषा प्रसिद्धेतृणे । दर्भे ॥ अस्योत्पत्तिर्यथा । वर्हिष्मतीनामपुरी सर्वसम्पत्समन्विता । न्यपतन् यत्र रोमाणि यज्ञस्याङ्ग विधुन्वत: ॥ कुशकाशा स्त एवासन शश्वद्धरितवर्चस: ।

ऋषयो वै । पराभाव्य यजमान य
ज्ञ मीजिरे ॥ इतिश्रीविष्णुभागवत
म् ॥ अस्यगुणा यथा । ह्रस्वदीर्घपत्र
भेदात् कुशस्तु द्विविधो मतः । दर्भ
द्वय त्रिदोषघ्न मधुरं तुवरं हिमम् ।
मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक्प्रद
रास्रजिदिति ॥ अथ कुशधारणवि
धिस्तत्प्रतिनिधिश्च । पूजाकाले सर्व
दैव कुशहस्तो भवेच्छुचिः । तर्जन्या
रजतं धार्यमन्वयां धार्यमनामया ॥ कु
शकार्यकरं यस्मात् तन्नान्या कुशा
कुशा । कुशेन रहिता पूजा विफला
कथिता मया ॥ नान्यस्य रजतं स्व
र्णं धार्यं हि निजमङ्गले । इतिवरदा
तन्त्रे १ पटल ॥ न स्पृशेत् तिलदर्भौ
श्च सधवा तु कथञ्चनेति आह्निकतत्त्व
म् ॥ त्रि । पापिष्ठे ॥ मन्ते ॥ कौ
शेते तिष्ठति । अन्येभ्योपीतिड ॥
कुश्यति वा । कुशश्लेषणे । इगुपधेति
क ॥ कुपापं श्यति वा । शोऽन्त
सुपीति योगविभागात् क

कुशध्वज । पु । राम्नोजनकस्यानुजे ॥

कुशप. । पु । पानपात्रे ॥

कुशपुष्पम् । न । ग्रन्थिपर्णे । गाठिया
ला इतिभाषा ॥

कुशलम् । न । कल्याणे । क्षेमे ॥ पुण्ये
। सुकृते ॥ पर्याप्तौ ॥ त्रि । शि
क्षिते ॥ नहि कुशलो द्रष्टा कामयाप
यति ॥ मोक्षे ॥ कुत्सितम् अशुभ
रूपमलते ऽनेन । अलवारणे । प
चाद्यच् ॥ कुशान् लाति वा । लादा
ने । आतइति क ॥ यद्वा । कौ पृथि
व्यां शलति । शलचलने । अच् । णि
जर्थेऽलच्गणा वा । कौशलति चालय
ति राजकार्याणि ॥ यद्वा । कु पापेष
द्वयेयो । पापात् शलति बुद्धिवैभ
वात् ॥ यद्वा । कुशयति । कुशश्लेष
णे । चौरादिधातुर्वा । इषा० कल ॥
मत्वर्थे सिध्मादित्वात् लच्वा ॥

कुशलप्रश्न । पुं । कौशल्याम् । कुशल
जिज्ञासायाम् ॥ कुशलस्यप्रश्नः ॥

कुशलवौ । पु । द्विवचनान्तः । एकयो
क्त्या रामपुत्रयोः ॥

कुशलानुशिष्ट । त्रि । निपुणाचार्यशि
क्षिते ॥ कुशलेन अनुशिष्ट ॥

कुशली । त्रि । कुशलयुक्ते ॥ इनिः ॥

कुशली । स्त्री । अश्मन्तकवृक्षे ॥ क्षुद्रा
म्लिकायाम् ॥

कुशस्थलम् । न । कान्यकुब्जदेशे ॥

कुशस्थली । स्त्री । द्वारकायाम् ॥

कुशा । स्त्री । रज्ज्वाम् । वल्गायाम् ॥
मधुकर्कट्याम् ॥ छन्दोगास्तोत्रीयाग
णनार्थमौदुम्बरान् शङ्कून् कुशा
इति व्यवहरन्ति ॥

कुशाकर' । पु । वह्नौ ॥

कुशाग्रीय । त्रि । कुशाग्रसदृशे ॥ कुशाग्रमिव । कुशाग्राच्छः ॥

कुशाग्रीयमति । त्रि । तीक्ष्णबुद्धौ । प्रत्युत्पन्नमतौ । सूक्ष्मदर्शिनि ॥ स्त्री । सूक्ष्मायाबुद्धौ ॥ कुशाग्रीयामतिर्यस्य ॥ कर्मधारयोऽन्यत्र ॥

कुशाग्रीया । स्त्री । तीक्ष्णायां बुद्धौ ॥

कुशारणि । पु । दुर्वासोमुनौ ॥

कुशाल्मलि । पु । रोहितकवृक्षे ॥

कुशावती । स्त्री । रामात्मजस्य कुशस्य राजधान्याम् ॥ अस्त्यर्थेमतुप ॥

कुशिंशपा । स्त्री । कपिलशिंशपायाम् ॥

कुशिक । पु । मुनिविशेषे । जमदग्नेः पितरि ॥ फाले ॥ सर्जवृक्षे ॥ विभीतकवृ० ॥ अश्वकर्णवृ० ॥ तैलशेषे ॥ त्रि । केकरे ॥ विश्वामित्रस्यपितरि ॥

कुशित । त्रि । जलमिश्रिते ॥

कुशी । पु । वाल्मीकिमुनौ ॥

कुशी । स्त्री । फाले । लोहविकारे ॥ कुशशब्दादयोविकारेर्थेजानपदेतिङीष्

कुशीदम् । न । रक्तचन्दने ॥ वृद्धिजीविकायाम् । वृद्ध्यै धनप्रयोगे ॥

कुशीलव । पु । वाल्मीकौ । प्राचेतसे ॥ कीर्त्तिसञ्चारकनटे । चारणे ॥ याचके ॥ कुत्सितं शीलमस्यस्य । कुगतीतिसमासः । अन्यत्रापिदृश्यतेइतिवः ॥ कुशीलं वाति वा । वागस्यादौ । कः ॥ नर्त्तनदृत्तौ ॥

कुशीलवौ । पु । एकयोक्त्यारामात्मजयो ॥

कुशीवश: । पुं वाल्मीकिमुनौ ॥

कुशूल: । पु । तुषाग्नौ ॥ अन्नकोष्ठके । इष्टकादिनिर्मिते धान्यस्थापनार्हे स्थाने । व्रीह्यागारे ॥ इतित्रिकाण्डशेष ॥

कुशूलधान्यक । पु । ब्राह्मणविशेषे । नित्यनैमित्तिकधर्मकृत्यपोष्यवर्गसहितस्य गृहिणो यावता धान्यादिधनेन वर्षत्रय समधिकवा निर्वाहो भवति ता वद्धने विप्रे ॥ कुशूलं कुशूलपरिमित धान्य यस्यस ॥

कुशेशय: । पु । कर्णिकारवृक्षे ॥ न । पद्मे ॥ सारसपक्षिणि ॥ कुशेजलेशेते । अधिकरणेशेतेरित्यच् । शयवासेत्यादिनाऽलुक ॥

कुशेशयकर । पु । रवौ ॥ त्रि । अन्य च ॥ कुशेशयकरे यस्य ॥

कुषाकु । पु । वानरे ॥ वह्नौ ॥ सूर्ये ॥ त्रि । परोत्तापिनि ॥ कुष्णाति । कुषनिष्कर्षे । कठि कुषिभ्याक्काकु ॥

कुषित । त्रि । जलमिश्रिते ॥

कुषीदम् । न । कुसीदे ॥

कुष्ठ । पु । न । पुष्करभेषजे । कूट

इति गौ०भाषा ॥ पारिभाद्रे ॥ कुष्ठमुष्णं कटुस्वादु शुक्रघ्नं तिक्तकं लघु । हन्तिवातास्रवीसर्पकासकुष्ठमरुत्कफान् ॥ कोढ इतिप्रसिद्धे पापरोगे । श्वित्रे ॥ म्रियतेयदि कुष्ठेन पुनर्जातस्य तद्भवेत् । नातो निन्द्यतरो रोगो यथा कुष्ठ प्रकीर्त्तितम् ॥ विषभेदे ॥ कुष्णाति रोगम् । कुष० । हनिकुषिनीरमिकाशिभ्य क्थन् ॥

कुष्ठकेतु । पु । भूम्याहुल्ये । मार्कण्डिकायाम् । भुञिखखसा इति भाषा ॥

कुष्ठगन्धि । न । एलवालुके ॥

कुष्ठगन्धिनी । स्त्री । अश्वगन्धायाम् ॥

कुष्ठघ्न. । पु । हिताबल्याम् ॥

कुष्ठघ्नी । स्त्री । काकोदुम्बरिकायाम् ॥ वाकुच्याम् ॥

कुष्ठनाशन । पु । वाराहीकन्दे ॥ गौरसर्षपे ॥ क्षीरीशवृक्षे ॥

कुष्ठनाशिनी । स्त्री । वाकुच्याम् । सोमराज्याम् ॥

कुष्ठफलम् । न । कुतसितस्थले ॥

कुष्ठसूदनः । पु । आरग्वधे ॥

कुष्ठहन्ता । पुं । हस्तिकन्दे ॥

कुष्ठहन्त्री । स्त्री । वाकुच्याम् ॥

कुष्ठहृत् । पु । खदिरे ॥

कुष्ठारिः । पु । विट्खदिरे ॥ पटोले ॥ आदित्यपत्रे ॥ खदिरे ॥ गन्धके ॥

कुष्ठित. । त्रि । कुष्ठरोगवति ॥ कुष्ठसञ्जातमस्य । ता० इतच् ॥

कुष्ठी । त्रि । कुष्ठरोगयुक्ते ॥ दन्त्योपतापेति इनि ॥

कुष्मलम् । न । छेदने ॥ छादने ॥ विकसिते ॥ कुष्णाति । कुष० । कुटिकुषिभ्याङ्क्मलन ॥

कुष्माण्ड । पु । कुम्हडा इतिप्रसिद्धे फलशाके । कर्कारौ ॥ कुष्माण्डं बृंहणं वृष्यं गुरु पित्तास्रवातनुत् । बालं पित्तापहं शीतं मध्यमं कफकारकम् ॥ वृद्धं नातिहिमं स्वादु सक्षारं दीपनं लघु । वस्तिशुद्धिकरं चेतोरोगहृत सर्वदोषजित् ॥ अस्य प्रकाराः । यथा । घृते तप्तविनिःक्षिप्य खण्डान् कुष्माण्डसम्भवान् । वार्त्ताकविधिना कुर्यात प्रलेहनलनादिकम् ॥ सुस्वादुसुन्दरम् ॥ यथा । वेसवारान्वितं वा घृतेतलनपूर्वकम् । कुष्माण्डकफलं सिद्धं विदुः सुस्वादुसुन्दरम् ॥ गुटिका । घृतेन गुडयुक्तेन गोलकुष्माण्डखण्डकान् । रन्धितान् क्षीरमरिचै रिमान् सुगुटिका विदुः ॥ * ॥ खण्डकुष्माण्डकम् । चतुरस्रायताम् स्थूलाम् स्विन्नाम् क्षीरेण चोदिताम् । सुपाच्याम् ख

एवसर्पिभ्यां मरिचैलादिवासितान् ॥ * ॥ भर्जितान्नकुष्माण्डम् । कुष्माण्डखण्डानि ससैन्धवानि तनूनि सम्मर्दितपिण्डलानि । जम्बीरनीराश्रितशृङ्गवेरे भवन्ति मङ्क्षु रपितो षणाय ॥ * ॥ कोशिका । कुष्माण्डसम्भवा' खण्डा' सुस्विन्ना स्वयाकान्विता. । वेशवारयुतेतैले तलयेद्वाप्रलेपयेत् ॥ * ॥ राजिकाकूरी । खण्डं कनिष्ठिकाकारं कौष्माण्डं स्वेदपिण्डितम् । राजिकादधिसिक्तत्वे मिश्रित काञ्जुरीयकम् ॥ एवं बहुविधा. कार्या कौष्माण्डाश्रिविचक्षणैः । प्रलेहतलनस्वादुचारसन्धानराजिकाः ॥ ईषत् पित्तत्वात् उष्मा अण्डेषु बीजेषु यस्य । पृ॰ ॥ शिवगणदेवताविशेषे ॥ भृगुविशेषे ॥

कुष्माण्डक' । पु । कुष्माण्डे ॥

कुष्माण्डी । स्त्री । उमायाम् । अम्बिकायाम् ॥ ओषधौ ॥ कर्कोटौ ॥ यागक्रियाविशेषे ॥

कुसित. । पु । जनपदे ॥ कुसति । कुससंश्लेषणे । कुसेरुमोमेदेता इति इत प्रत्यय ॥

कुसितायी । स्त्री । } कुसिदाय्याम् ।
कुसिदायी । स्त्री । } वृद्धिजीविपत्न्याम् ॥ कुसितस्य कुसिदस्य वा स्त्रीत्यर्थे वृषाकप्यग्नि कुसितकुसिदानामुदात्तइति प्रकृतेरैकारादेशोङीप्च प्रत्ययः ॥

कुसिम्बी । स्त्री । शिम्ब्याम् ॥

कुसीदम् । न । अर्थप्रयोगे । वृद्धिजीविकायाम् । वृद्ध्याजीवने । सूदकी जीविका इति भाषा ॥ पुनर्देयत्वेन स्वीकृत्य गृहीते ऋणविशेषे ॥ ॥ यथा । स्थानलाभनिमित्तं यद्दानग्रहणं मिष्यते । तत् कुसीदमिति प्रोक्तं तेनवृद्धि' कुसीदिनाम् ॥ इतिनारदः । अस्यार्थ. । स्थानं-मूलधनावस्थानम् । लाभोवृद्धि.- । दानग्रहणपदे कर्मणिल्युटा साध्ये तेन मूलधनाऽवस्थानेसत्येव- योलाभ स्तदर्थं यद्दानं धनिकेन दीयमानं मूलधनम् अधमर्णेनच ग्रहणा तथास्वीकृत्यगृह्यमाणं यत् तद्वृणमिति ॥ कलाभूल्ये तु अवश्या-पाकरणीयत्वरूपगुणयोगाद् गौणप्रयोग । अतएव वाणिज्यार्थमयुक्तस्य नमृणत्वम् इति मिश्रा ॥ अपिच । कुतसितात् सीदतश्चैव निर्विशङ्कैः प्रगृह्यते । चतुर्गुणाष्टगुणा कुसीदाख्य मतः स्मृत. । इति बृहस्पति' । अस्यार्थ । कुत्सितात् सीदतश्चाधमर्णात् सकलधन यत

क स्तिन्दुकवृक्षाच षष्टिको भवति। अश्वत्थेन क्षेया निष्पत्ति सर्वशस्या नाम्॥ जम्बूभिस्तिलमाषा' शिरी षवृक्षाच कङ्गु निष्पत्ति। गोधूमा श्चमधूकै यवबृद्धि' ससपर्णेन॥ अ तिमुक्तककुन्दाभ्यां कर्पासं सर्षपान् वदे द्सनै'। बदरीभिश्चकुलत्थाँ श्चिरविल्वेनादिशेन्मुद्गान्॥ अतसी वेतसपुष्पै. पलाशकुसुमैश्चकोद्रवा क्षेया। तिलकेनशङ्खमौक्तिकरज तान्यऽथचेङ्गुदेन शरा॥ करिणश्च हस्तिकर्णैरादेश्या वाजिनोऽश्वकर्णेन। गावश्चपाटलाभि कदलीभिरजा विकाभवन्ति॥ चम्पककुसुमै कनक विद्रुमसम्पश्चबन्धुजीवेन। कुरवक वृक्षावज्रवैदूर्यंनन्दिकावर्त्तै॥ वि-द्याश्च सिन्दुवारेण मौक्तिककाकका. कुसुमेन। रक्तोत्पलेनराजा मन्त्री नोलोत्पलेनोक्त'॥ श्रेष्ठोसुवर्णपुष्पा त् पद्मैर्विप्रा पुरोहिता कुमुदै। सौगन्धिकेनवलपतिरर्केण हिरण्य परिवृद्धि॥ आम्रै क्षेम भल्लातकैर्भ यं पीलुभिस्तथारोग्यम्। खदिरश मीभ्यांदुर्भिक्ष मर्जुनै. शोभनावृ ष्टि.॥ पिचुमन्दनागकुसुमै सुभिक्ष मथमारुत कपित्थेन। निचुलेनावृ ष्टिभयं व्याधिभयं भवति कुटजकुसु



मेन॥ दूर्वाकुशकुसुमाभ्यामिक्षु र्वह्निश्चकोविदारेण। श्यामालता भिवृद्धा बन्धक्यो वृद्धिमायान्ति॥ अथैताभिर्वृष्टि लक्षणमाह। यस्मि नकाले स्निग्धनिच्छिद्रपत्रा संदृ श्यन्ते वृक्षगुल्मालताश्च। तस्मिन् वृष्टि शोभना सम्प्रदिष्टारूक्षच्छिद्रै रल्पमंभ प्रदिष्टम्॥ इतिवाराह्या २७ अध्याय.॥

कुसुमकार्मुक:। पु। कामदेवे॥

कुसुमपुरम्।। पटना इति प्रसिद्धपुरे। पाटलिपुत्रे॥

कुसुममध्यम्। न। चालितागा इति गौडभाषा प्रसिद्धे वृक्षविशेषे। भ व्यदृक्षे॥

कुसुमशर:। पु। कामदेवे॥

कुसुमाकर:। पु। वसन्तर्त्तौ॥

कुसुमाक्ष। त्रि। पुष्पयुक्तनेत्रव-ति॥

कुसुमागम.। पु। वसन्ते॥

कुसुमाञ्जनम्। न। पुष्पाकाररी तिमलसम्भवेञ्जने। पौष्पके। री तिपुष्पे॥

कुसुमाञ्जलि। पु। पुष्पाञ्जलौ॥ उद यनाचार्यकृतेग्रन्थविशेषे॥

कुसुमात्मकम्। न। कुङ्कुमे। घुसृ णे॥

नक्तद्याभमौनादौ ॥ अर्थविष यानिष्याधर्माश्रयणे ॥ कुहवि०चु० अदन्तः । ययासअन्योयुच ॥

कुहनिका । स्त्री । कुहनायाम् ॥

कुहरः । पु । नागविशेषे ॥ न । गह्वरे ॥ शुषिरे । छिद्रे ॥ कर्णे ॥ कण्ठे ॥ कण्ठशब्दे ॥ समीपे ॥ कुहरति । हरतेरनुद्यमनेऽच ॥ यद्वा । कुहवि स्मापने । इगुपधत्वात्कः । कुहं राति । रा० । आतइतिक. ॥

कुहरितम् । न । पिकालापे ॥ रतध्वनौ ॥ रटिते ॥ त्रि । कृतच्छिद्रे ॥

कुहलिः । पु । पूगपुष्पिकायाम् । पान इतिभाषा ॥

कुहा । स्त्री । कुज्झटिकायाम् ॥ कटुक्याम् ॥

कुहु. । स्त्री । कुह्वाम् ॥ कुहयति । कुहविस्मापने । म०कुः ॥

कुहूः । स्त्री । नष्टेन्दुकलायाममायाम् । उदयेऽमायोगान्नष्टचन्द्रकलाऽमा कुहूपदवाच्या ॥ अङ्गिरादुहितरि ॥ कुहयति । कुहवि० ॥ च्छतिशृभ्योः कूरिति कूप्रत्ययो बाहुलकादिहापि ॥

कुहूकण्ठ. । पुं ।
कुहूमुख । पु ।
कुहूरवः । पु ।
} कोकिले । पिके ॥ कोयल इतिभाषा ॥

कुहूलम् । न । सशल्योर्वीरन्ध्रे ॥

कुहेडिका । स्त्री ।
कुहेडी । स्त्री ।
} कुज्झटिकायाम् ॥

कुहेलिका । स्त्री । कुज्झटयाम् । धूमिकायाम् । नभोरेणौ ॥

कुह्वान । पु । कुत्सितशब्दे ॥

कू । स्त्री । पिशाच्याम् ॥

कूकुदः । त्रि । सत्कृत्यालङ्कृतकन्याप्रदातरि ॥ सत्कृत्यालङ्कृताङ्कन्यां यो ददाति स कूकुद ॥ कोकृति । कुकआदाने । इगुपधेतिकः । पृ०॥ यद्वा । कवर्ग कू. । कूङ्शब्दे । तु० । सं० । कुव शब्दस्य कु. भू कीर्त्ति भूमिरितियावत् । कूकुदददाति । आतोनुपेति सुपीति योगविभागा दा क. ॥

कूच । पु । कुचे । स्तने ॥ कवते । कुङ० । कुवस्यट्दीर्घश्च ॥

कूचिका । स्त्री ।
कूची । स्त्री ।
} तूलिकायाम । चित्रलेखनिकायाम् ॥ टित्त्वान्ङीप् ॥

कूजनम् । न । कुन्यने ॥

कूजितम् । न । रुते । पक्षिध्वनौ ॥

कूटः । पु । अगस्त्यमुनौ ॥ पु । स्त्री । गृहे ॥ पु । न । निश्चले ॥ राशौ । धान्यादिपुञ्जे ॥ अयोघने ॥ लोहमुद्गरे ॥ दम्भे ॥ मायायाम् । विपरीतदर्शने । यथार्थवस्त्वाच्छादनेना ऽ

ऽयथार्थवस्तुप्रकाशने ॥ अद्रिशृङ्गे ॥ तुच्छे ॥ सीरावयवे । फालाधारे ॥ यन्त्रे । मृगबन्धनवि० ॥ अनृत ॥ भग्नशृङ्गखण्डे ॥ पूर्वादि । कूटयते । कूटआप्रदाने । यथायथ ॥ कूटयति वा । कूटदाहे । अथ ॥ कूष्यतेथा । घञ ॥

कूटक । पु । गन्धकुव्याम् । मुरामास गन्धद्रव्ये ॥ कवर्याम् । पर्वत विशेष ॥ न । फाले ॥ कूटयति । कूटच्छेदने । यथाथ्य । ण्वा० कम् ॥

कूटकारक । पु । साक्षिवादे मृषाभाषकर्त्तरि ॥

कूटकार्षापण । पु । मिथ्याभूतरौप्यादिमुद्रायाम् । कृत्रिमरौप्यादौ ॥

कूटकृत् । पुं । शिवे ॥ कायस्थे ॥ त्रि । कितवे ॥

कूटज । पुं । कुटजवृक्षे ॥

कूटपालक । पु । पित्तज्वरे ॥ कुलालपवने ॥

कूटपूरी । स्त्री । करायिकायाम् ॥

कूटपूर्व । पु । हस्तिनखदोषज्वरे ॥ मायिनि ॥

कूटबन्धम् । न । उन्माथे । आमिषबन्धनाश्रग ग्रन्थिबन्धनार्थं छलपालितयन्त्रे । फन्दाफाँद इतिभाषा इतिच भाषा ॥ कूटस्वरूपं यन्त्रम ।

कूटशाल्मलि । पु । शाल्मलिविशेषे । कृष्णशाल्मल्याम् । रोचने ॥ कूटशाल्मलिकस्तिक्त कटुक कफवातनुत् । भेद्युष्णाप्लीहजठरयकृद्गुल्मविषापह ॥ भतानाहविबन्धास्रमेद शूलकफापह ॥ कूटश्चासौशाल्मलिश्च ॥

कूटसङ्क्रान्ति । स्त्री । अर्द्धरात्रातीते सूर्यस्यराश्यन्तरगमने ॥ यथा । अर्द्धरात्रेव्यतीतेतु यदासङ्क्रमते रवि । सातया कूटसक्रान्ति र्मुनिभि परिकीर्त्तिता इति ॥

कूटसाक्षी । त्रि । मिथ्यासाक्षिणि । साक्ष्ये मिथ्याभिधायिनि ॥

कूटस्थ । त्रि । कालमभिव्याप्यस्थिते । एकरूपतयाकालव्यापिनि । यत्रैव स्वभावेनिरवधिकालव्यापके आकाशादौ ॥ अज्ञानतत्कार्याधिष्ठाने ॥ विषयसन्निधावपि विकारशून्ये ॥ अधिष्ठानतयादेहद्वयावच्छिन्नचेतन कूटवन्निर्विकारेणस्थित कूटस्थउच्यते ॥ न । ब्रह्मणि । परिणामरहिते ॥ कूटोनिश्चलस्तिष्ठति । यद्वा । कूटमयोघनस्तद्वत्तिष्ठति । संसर्गिनाशेपिस्वयमनष्ट इत्यर्थ. ॥ ष्ठा० ॥ सुपिस्थ इति कः ॥ व्याघ्रनखाख्यगन्धद्रव्ये ॥

कूटागारम् । न । चन्द्रशालिकाया म् । वडभ्याम् ॥ रूपागारे ॥ स्त्री यां क्रीडागृहे ॥

कूटायुधम् । न । वहि. काष्ठादिमये ऽन्तर्गुप्तनिशितशस्त्रे ॥ अधर्मप्रधान प्राणिभि कृतव्यवहाराणि तानिव छद्मप्रकाणि सन्ति ॥

कूटार्थभाषिता । स्त्री । प्रबन्धकल्पना-याम् । कथायाम् । रूपकथा इति गौडभाषा ॥ प्रहेलिकायाम् ॥

कूणि । त्रि । रोगादिनाकुञ्चितकरे । कुकरे ॥

कूणिका । स्त्री । शृङ्गे ॥ कलिकायाम् । वीणामूलस्थवंशशलाकायाम् ॥

कूणित । त्रि । मुद्रिते । सङ्कुचिते ॥

कूदर. । पु । जातिविशेषे ॥ यथा ब्रा ह्मण्या क्षत्रियवीर्येण जातो प्रथमवा सरे । कुत्सिते चोदरे जात कूदर स्तेनकीर्त्तित ॥ तदशौचं विप्रतुल्य पतितो ध्रुतदोषत. । सद्य कोटक ससर्गाद्धमोजगतीतले ॥ इति ब्र ह्मवैवर्त्तपुराणम् ॥

कूप. । पु । स्वनामाख्याते जलाधारे । उदपाने ॥ अस्यलक्षणम् । यथा । भू मौ खातोल्पविस्तारो गम्भीरो म ण्डलाकृति । वद्धो ऽवद्ध. स कूप स्या त् तदम्भ. कौपमुच्यते ॥ गर्त्ते ॥ गु णवृक्षे ॥ स्नेहभाने ॥ कूपके । कुप्पा इ भाषा ॥ कुवन्तिमण्डूका अस्मिन् कु शब्दे । कुपुभ्याञ्चेतिपोदीर्घश्च ॥ कु त्सिता ईषद्वा आपो ऽत्र । ऋक्पू रित्यः । ऊदनोरित्यत्रदीर्घनिर्दे शादन्यत्राप्यूदितिवा ॥

कूपक । पु । गुणवृक्षे । नौमध्यस्थर ज्जुबन्धनकाष्ठे । गुणधरा मास्तूल इ तिभाषा ॥ कुप्पा इतिभाषा प्रसिद्धे तैलादिपात्रे ॥ ककुन्दरे ॥ उदपाने ॥ नद्यादौ स्रोतोऽधकारिणित कशिलादौ ॥ विदारके । शुष्कनद्या दौवार्यर्थं कृतगर्त्ते ॥ कुत्सित' कूप । कुत्सिते इतिक । कूपस्य प्रतिकृ तिरितिवा । इवे प्रतिकृताविति क न ॥ कूपे कायतिवा । कै० । सुपी ति क ॥

कूपखानक । पु । कूपस्य खननक र्त्तरि ॥

कूपत । अ । प्रश्ने ॥ प्रशसायाम् ॥

कूपाङ्क । पु । } रोमाञ्चे॥
कूपाङ्ग । पु । }

कूपार. । पु । अकूपारे ॥

कूपिका । स्त्री । अधोगतोपले । जल मध्यस्थितेपर्वतादौ ॥

कूपी । स्त्री । पात्रविशेषे ॥

कूमम् । न । सरोवरे ॥

कूर । पु । न । अन्ने । भक्ते ॥

कूर्च्च । पु । न । भ्रुवोर्मध्ये ॥ कत्थने ॥ श्म श्रुणि ॥ कैतवे । दम्भे ॥ मयूरपुच्छम् ष्टौ । मुट्ठा इति भाषा ॥ कुशमुष्ट्याम् ॥ अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे ॥ पु । शीर्षे ॥ आसनविशेषे ॥ न । सप्तापक पंणाद्यर्थ मुशीरादिनिर्मिते मुष्टि माने ॥ तथाच नरसिंहपुराणम् । ततः समर्पयेत् कूर्च्चमुशीरादिवि निर्मितम् । सप्तापकर्पणाद्यर्थं श्री मन्मूर्त्यङ्गसन्धितः इति ॥ विष्णुध र्मोत्तरेपि । उशीरकूर्च्चकं दत्त्वा सर्व्व पापैः प्रमुच्यते । दत्त्वा गोवालज कू र्चं सर्वांस्तापान् व्यपोहति ॥ दत्त्वा चामरजं कूर्च्चं श्रियमाप्नोत्यनुत्तमा मिति हरिभक्तिविलासस्य ६ विला से ४८ श्लोक ॥ कुरति । कूर्यते वा । कुर शब्दे । वा० चट् प्रत्यय. ॥

कूर्च्चशिरः । न । अङ्घ्रिस्कन्धे । गुडमु ड़ा इति गौड भाषा ॥

कूर्च्चशीर्षः । पु । अष्टवर्गमध्यपठिते जी वकौषधौ । मधुरके ॥ नारिकेरे ॥ कूर्च्चं श्मश्रुतच्छीर्षमस्य ॥

कूर्च्चशीर्षकः । पुं । जीवके ॥ नारिकेरे ॥

कूर्च्चशेखर. । पुं । नारिकेरे ॥

कूर्च्चिका । स्त्री । क्षीरविकृतौ । क्षीर सा इति गौडभाषा ॥ सा द्विधा । य या । दध्नासह च यत पक्वं क्षीर सा दधिकूर्चिका । तक्रेण पक्वं यत क्षीरं सा भवेत्तक्रकूर्च्चिका ॥ सूचिकाया म् ॥ तूलिकायाम् । आलेख्यकूर्च्चिका याम् । तुली इति गौडभाषा ॥ कुड्म ले ॥ कुञ्चिकायाम् । कपाटोद्घटने ॥ द्रव्यमार्जनसाधने । तृणगुच्छे ॥ कूर्च्चति । कूर्च्चविकारं आदेराकृति गणत्वाद्बोध्य. । संज्ञायांकन् ॥ कू र्च्च. श्मश्र्वादिरस्त्यस्या वा । अतइनि ठनाविति ठन् ॥

कूर्द्दनम् । न । क्रीडायाम् । खेलायाम् ॥ कुर्द्द क्रीडायाम् । ल्युट । वोरुप धायादीर्घ इक ॥

कूर्द्दनी । स्त्री । चैत्राख्याम् । मधूत्सवे ॥

कूर्प्पम् । न । भ्रुवोर्मध्ये ॥ इति हेम० ॥

कूर्प्पर. । पु । कुर्परे ॥

कूर्प्पास । पु । अर्द्धचोलके ॥ कुर्परः कफोणिर्जानुश्च तस्मिन्नास्यते ऽत्र । कुर्प रे आस्ते वा । अप्रत्ययो आसउप वेशने वा । घञ । पृ० ॥

कूर्प्पासक. । पुं । चोले । स्त्रीणामाप्र पदीनकञ्चुके । स्त्रीणां कञ्चुलिका याम् ॥ स्वार्थे कन् ॥

कूर्म्म । पु । उन्मीलननिमीलनकरे श रीरस्थवायु विशेषे ॥ उन्मीलने स्मृ तः कूर्मो भिन्नाञ्जनसमप्रभ. इत्यु

त्ते ।कच्छुवा इति प्रसिद्धे जलजन्तु विशेषे। कच्छपे। पञ्चगुप्ते। कमठे॥ अस्यलक्षणयथा। स्फटिकरजतवर्णो नीलराजीविचित्र कलशसदृशमूर्त्तिं श्चारुवंशस्य कूर्म्म। अरुणसमवपुर्वा सर्षपाकारचित्र सकलनृपमहस्य मन्दिरस्थ करोति ॥ अञ्जनभृङ्गश्यामतनुर्वा विन्दुविचित्रो ऽव्यङ्गशरीर। सर्पशिरो वा स्थूलगलो य सोपिनृपाणाराष्ट्रविवृद्ध्यै ॥ वैदूर्य्यत्विट् स्थूलकण्ठ स्त्रिकोणो गूढच्छिद्रश्चारुवंशस्य शस्त। क्रीडावाप्या तोयपूर्णे मणौवा कार्य्ये कूर्म्मो मङ्गलार्थं नरेन्द्रैरिति ॥ वंश. पृष्ठास्थि। मणि' कूपाधोभाग ॥ विष्णोरवतारवि०। सत्त्ययुगे समुद्रमन्थनकाले मन्दराचलधारणार्थं कच्छपरूपे भगवदवतारे ॥ यथा ॥ विलोक्य विघ्नशविधि तदेश्वरो दुरन्तवीर्य्यो ऽवितथाभिसन्धि'। कृत्वा वपु काच्छप मद्भुतमहत प्रविश्य तोय गिरि मुज्जहार ॥ सुरासुरेन्द्रै र्भुजवीर्य्यवेपित परिभ्रमन्त गिरि मङ्ग पृष्ठत:। बिभ्रत्तदा वर्त्तन मादिकच्छपोमेने ऽङ्गकण्डूयन मप्रमेय इति ॥ कु कुत्सित कौ भुविवा ऊर्म्मिर्वेगो ऽस्य। अचाम्ब्यन्ववेन्त्य



त्राजितियोगविभागादच् समासान्त. ॥ मुद्राविशेषे ॥

**कूर्म्मचक्रम्**। न ।ज्योतिषप्रसिद्धे कृषिकर्म्मोक्ते कच्छपाकारचक्रे ॥ तस्याकारो यथा। प्राङ्मुखोभगवान देव कूर्म्मरूपी व्यवस्थित। आक्रम्य भारत वर्षं नवभेद यथाक्रमम् ॥*॥ तत्रनक्षत्रन्यासक्रम। मध्यप्रागग्नियाम्यादिकृत्तिकादित्रयत्रये। क्रूरवेधयुतैस्तैस्तु पीड्यन्ते तन्निवासिन. ॥*॥ तत्रवेधो यथा। पूर्व्वापरे भवेद्वेधो वेधश्चोत्तरदक्षिणे। ईशानेराक्षसेवेधो वेधश्चाग्नेयमारुते। तारात्रयान्वित तत्र सौरिंयत्नेन चिन्तयेत् ॥*॥ तत्रवेधादिजन्यदोषा। अतिवृष्टिरनावृष्टि. शलभामूषिका खगा। स्वचक्रं परचक्रञ्चसप्तैते सम्भवन्तिच ॥*॥ एवं देशगृहग्रामक्षेत्रनामर्क्षतो वदेत। तथाच यत्रनक्षत्रेदिव्यपार्थिवनाभसा ॥ दृश्यन्तेसुमहोत्पाता' स्वादिशतत्रपीडयेत्। सौरिर्बलाधिकोदुष्ट स्वल्पवीर्य्ये' शुभावह. ॥ एकदापीडयेत्तु त्रभानुज कूर्म्मपञ्चके। तत्रस्थानेमहाविघ्नोजायते नात्रसंशय ॥ दुष्टस्थाने गते चन्द्रेकर्त्तव्यशान्तिपौष्टिकम् ॥*॥ तत्रक्रमध्यस्थादेशा.।

मध्येसारस्वता मत्स्या शूरसेना समाथुरा । पञ्चालसाल्वमाण्डव्य कुरुवंशगजाह्वया ॥ मरुनैमिषवि न्ध्याद्रिमापश्चघोषा सयामुन । का न्ययोध्याप्रयागश्वगया वैदेहकादय. ॥ * ॥ तत्रपूर्वस्थदेशा । प्राच्या मागधशोणाश्च वारेन्द्रा गौडराढका. । वर्द्धमानतमोलिप्तप्राग्ज्योतिषोद याद्रय. ॥ * ॥ तत्राग्निकोणस्थदेशा । आग्नेय्या मङ्गवङ्गोपवङ्गत्रैपुरको सला । कलिङ्गोड्रान्ध्रकिष्किन्ध्यावि दर्भशवरादय ॥ * ॥ तत्रदक्षिणस्थ देशा. । दक्षिणे ऽवन्तिमाहेन्द्रमल या ऋष्यमूकका । चित्रकूटमहार एकाञ्ची सिंहलकोङ्कणा ॥ कावे रीताम्रपर्णीचलङ्कात्रिकूटकादय ॥ * ॥ तत्रनैरृत कोणस्थदेशा । नै ऋते द्रविडानर्त्तमहाराष्ट्रास्तरैव- ता । यवन पह्लव सिन्धु पारसी काद्योमता: ॥ * ॥ तत्रपश्चिमस्थ देशा. । पश्चिमे हैहयास्ताद्रिम्लेच्छ वासकादय ॥ * ॥ तत्रवायुकोण स्थदेशा. । वायव्ये गुज्जराटश्चलाट जालन्धरादय ॥ * ॥ तत्रोत्तरस्थदे शा. । उत्तरे चीननेपालकूणकैके यमन्द्रा । गान्धारहिमवत कौञ्च गन्धमादनमालवा: ॥ कैलासमद्र

काश्मीरम्लेच्छदेशा खसादय ॥ * ॥ तत्रैशानकोणस्थदेशा । ऐशाने स्वर्ण भौमश्च गङ्गाद्वारश्चटङ्कण । वा ह्लीकब्रह्मपुरककिरातादरदादय ॥ इति ज्योतिस्तत्त्वम् ॥ * ॥ अपय श्चकर्मान्ते कमठाकारचक्रे ॥ कूर्म्म चक्र मनिश्चायय कूर्य्याज्जपयज्ञकम् । तस्ययज्ञफलं नास्तिसर्वानर्थाय क ल्पते ॥ इतितन्त्रशास्त्रम् ॥

कूर्म्मपुराणम् । न । कौर्म्मं । सप्तदश सहस्रश्लोकात्मके महापुराणे ॥ य था । सप्तदशसहस्रम्पुराणं कूर्म भाषितमिति ॥

कूर्म्मपृष्ठ । पु । अलावृक्षे ॥ कमठ पृष्ठदेशे ॥ न । शरावे ॥

कूर्म्मपृष्ठकम् । न । शरावे । सकोरा इति भाषा ॥

कूर्म्मराज । पु । कच्छपराजे । अकू पारे । आदिकच्छपेविष्णोरवतारे ॥ यथा । पृथ्वि स्थिरा भव भुजङ्गम धारयैनां त्वं कूर्मराज तदिदं द्वित य दधीथा । दक्कुञ्जरा. कुरुत त त् त्रितये दिधीर्षा माय. करोतु हरकार्मुक मातत्यमिति महान टकम् ॥

कूलम् । न । रोधसि । तीरे । तटे । नद्याजलसमीपस्थाने ॥ कूपे सै

न्यपृष्ठे ॥ तडागे ॥ कूलयति । कूल आवरणे । पचाद्यच् ॥

कूलक । पु । कृमिशैले ॥ पु । न । स्तूपे ॥ तीरे ॥

कूलङ्कष । पु । समुद्रे ॥ कूलङ्कषति । कषहिंसायाम् । सर्वकूलाभ्रकरीषेषु कषः इतिखच् । अरुर्द्विषदिति मुमागमः ॥

कूलङ्कषा । स्त्री । नद्याम् ॥

कूलभू । स्त्री । तीरभूमौ ॥

कूलवती । स्त्री । नद्याम् ॥

कूलहण्डक । पु । जलावर्त्ते ॥ कूलभङ्गे ॥

कूलेचर । पु । तुलायादिपशुषु ॥ यथा । तुलापगण्डवाराहचमरीवारणादय । एते कूलेचरा प्रोक्ता यत कूलेचरन्त्यमाम् ॥ कूलेचरा म कृत्पित्तहरा ष्टष्या वलावहा । मधुरा शीतला स्निग्धा मूत्रला श्लेष्मवर्द्धनाइति ॥

कूबर । पु । कुब्जके । कूंजा इतिभाषाप्रसिद्धे पुष्पे ॥ पु । न । युगन्धरे । यत्ररथस्ययुगकाष्ठमासज्यते तत्र ॥ त्रि । रम्ये । चारौ ॥ कवते । कूङ् शब्दे । कुटादि । वा०वरच् ॥

कूबरी । पु । रथे ॥ कूबरोयुगन्धर सो स्यास्ति । इनिः ।

कूवरी । स्त्री । कम्बलाच्छादितरथे ॥ इतिहलायुध ॥

कूष्माण्ड । पु । कर्कारौ ॥ गणदेवताविशेषे ॥ दाचिणत्यिरयाधिपतौ ॥

कूष्माण्डक । पु । कुष्माण्डे ॥

कूष्माण्डवटिका । स्त्री । कुम्हडौरीइति ख्याते वटीविशेषे ॥ कूष्माण्डवटिका ज्ञेया पूर्वोक्तवटिकागुणा । विशेषात् पित्तरक्तघ्नी लघ्वी च कथिता बुधै ॥ पूर्वोक्तवटिका माषवटी ॥

कूष्माण्डी । स्त्री । अम्बिकायाम् ॥ ओषधौ ॥ कर्कार्वाम् ॥ कूष्माण्डी तु भृश लघ्वी कर्कारु रपिकीर्त्तिता ॥

कूहा । स्त्री । कुज्झटिकायाम् । कुहासा इतिभाषा ॥

कृक । पु । गले ॥ इति हेमचन्द्र ॥

कृकण । पु । कयार इति भाषाप्रसिद्धे क्रकरपक्षिणि॥ कीटविशेषे ॥ कृ इति कणति । कणशब्दे अच् ॥ कृकेणक्रणति वा । अणशब्दे । अच् । श०॥

कृकर । पुं । शिवे ॥ देहानिलविशेषे । क्षुत्करेष.यौ ॥ कृकरस्तु क्षुतेचैव अथाकुसुमसन्निभ ॥ करवीरद्रुमे ॥ चण्डे ॥

कृकल । पु । कुत्तरेहस्थेवायुविशेषे ॥

कृकला । स्त्री । पिप्पल्याम् ॥

कृकलास । पु । सरटे । क्रकचादि ।

प्रतिकूर्ये । कुमाश्रये ॥ कृकशिरोग्री वा काष्ठम्च वासयति । वसत्रिस्य योगे । चु०, कर्म्मण्यण् ॥

कृकवाकु । पु । कुक्कुटे ॥ मयूरे ॥ सरटे ॥ कृकेन गलेनवक्ति । वचप रिभाषणे । कृकेवच, कर्त्तेतिञुण् ॥

कृकवाकुध्वज । पु । कार्त्तिकेये । स्क न्दे ॥ कृकवाकुर्ध्वजोऽस्य ॥

कृकाटिका । स्त्री । घाटायाम् । ग्रीवा यामुन्नतभागे ॥ ग्रीवापश्चाद्भागे ॥ कृकम् काष्ठम् अटति । अटगतौ । ण्वुल् । स्त्रा० कन् ॥

कृच्छ्रम् । न । आभीले । कष्टे । दु.खत त्कारणयो. ॥ अहसि । पापे ॥ सा न्तपनादिव्रते ॥ मूत्रकृच्छ्ररोगे ॥ त्रि । तद्वति ॥ स्मृतौ त्वसेपुंस्त्रियोऽप्ययम् ॥ कृन्तत्ति मनेमवा । कृतीछेदने । कृतेश्छ्रकूचेतिरक् प्रत्यय. कृस्यान्त्य स्यादेश. ॥

कृच्छ्रसान्तपनम् । न । व्रतविशेषे ॥ यथा गोमूत्र गोमय क्षीरं दधि सर्पि कु शोदकम् । एकरात्रोपवासश्च कृच्छ्र सान्तपनं स्मृतमिति ॥ गोमूत्रादी न्येकीकृत्य एकस्मिन् दिने भक्षये- त् तद्दिनेनान्यत्किञ्चिद्द्यात् । अप रदिने चोपवास इत्यर्थः ॥ सम्यक् तपनमत्र । प्रशस्तस्य यद्वा । सन्तप ति । ल्यु । तस्येदम् कर्म । अण् । कृच्छ्रञ्चतत्सान्तपनञ्च ॥

कृच्छ्रातिकृच्छ्र । पु । व्रतविशेषे ॥ यथा सर्वाङ्ग । अथभद्रसतृतीय कृच्छ्रा तिकृच्छ्रोयावत् सकृदादीत । या वदेकवारमुदकं हस्तेन गृहीतुम्श क्नोति तावन्नवसुदिवसेषुभक्षयित्वा त्यत्रमुपवास कृच्छ्रातिकृच्छ्र ॥ स्मृ मन्तुर्यथा । द्वादशरात्रनिराहार स कृच्छ्रातिकृच्छ्र. । एतत् कृच्छ्रातिकृ च्छ्रस्य द्वादशाहसाध्यमशक्तविषय म् ॥ ब्रह्मपुराणम् । चरेत् कृच्छ्राति कृच्छ्रञ्च पिबेत्तोयञ्चशीतलम् । ए कविंशति रात्रन्तुकालेष्वेतेषु संयत ॥ कालेषु प्रात सायमध्याह्ने ष्वि त्यर्थः । इति प्रायश्चित्तविवेक ॥

कृच्छ्रारि । पु । विश्वामित्रऋषौ ॥

कृच्छ्रार्द्ध । पु । दिनषट्कसाध्यव्रतविशे षे ॥ यथापस्तम्ब । सायम्प्रातस्तु यैदेकैकंदिनद्वयमयाचितम् । दिनद्व यञ्चनाश्नीयात् कृच्छ्रार्द्ध सोभिधीय ते ॥ इति प्रायश्चित्तविवेकः ॥

कृणु । पु । चित्रकरजातौ । चितेरा इतिभाषा ॥ इति त्रिकाण्डशेष ॥

कृतम् । न । सत्ययुगे ॥ यथा । दिव्यै र्व र्षसहस्रैस्तु कृतत्रेतादिसंज्ञितमि ति । मनुश्च ॥ चत्वार्याहु सहस्राणि

वर्षाणाम्तु कृत युगम् । तस्य तावच्छ
ती सन्ध्यासन्ध्यांशश्च तथाविध ॥ स
न्ध्यासन्ध्यांशयो रन्त र्यं कालोमुनि
सत्तम । युगाख्य सतु विज्ञेय कृतत्रे
तादिसंज्ञक इति ॥ पर्य्याप्ते । अलम
र्थे ॥ फले ॥ त्रि । विहिते ॥ हिंसिते ॥

अकारि । उकृञ० । क्त ॥ निष्पा
दिते ॥ पुं । कृताये ॥

कृतकम् । न । विडलवणे ॥ त्रि । कृ
त्रिमे ॥ कृन्तति । कृतीछेदने । वा
यास्त्विषा । कृतीवेष्टने । वा० कृन् ॥

कृतकर्म्मा । त्रि । निपुणे । प्रवीणे । वि
हिते ॥ पुण्यवति ॥ कृतकर्म तत्त
द्वर्णाश्रमाभिमाननिमित्त मन्तःकर
णशोधक येन ॥

कृतकृत्य । त्रि । कृतार्थे । निष्पन्नक
र्मणि । सम्पन्नकार्ये ॥ धन्ये ॥ विदुषि ॥
कृतं कृत्यवर्णाश्रमोचितमन्तःकर
णशोधक कर्त्तव्य येन नपुनः कृत्या
न्तर यस्यास्ति स । कृतकृत्य स्तु सन्य
स्य स्वात्ममात्ररति र्भवेत ॥ कृत्यान
याहिमुक्ते ॥ ज्ञानामृतेन तृप्तस्य कृ
तकृत्यस्य योगिन. । नैवाऽस्ति कि
ञ्चित्कर्त्तव्यमस्तिचेन्नस तत्त्ववित् ॥
अकृत कृत्योविप्रस्त्वोर्बिभेति । य
थाहु. ॥ प्रायेणाकृतकृत्यत्वान् म
त्योरुद्विजतेजन इति ॥



कृतकोहिल । पुं । काश्यपमुनौ ॥ उपव
र्षमुनौ ॥ इतिविकाण्डशेष ॥

कृतक्रिय । त्रि । कृतकार्ये ॥

कृतक्षण. । त्रि । लब्धावकाशे ॥

कृतघ्न: । त्रि । कृतहन्तरि । कृतोपकार
स्यापकारे प्रवर्त्तमाने ॥ कृतमुपका
र मपकाराचरणेन यो विनाशयति
सकृतघ्नइत्यर्थः । सचानेकविध प्रो
क्तः पुराणे स्कन्दसंज्ञके । यथा ॥ भ-
र्त्तृपिण्डापहर्त्ता च पितृपिण्डापहा-
रक । यस्मात् गृहीत्वा विद्याञ्च द
क्षिणां न प्रयच्छति ॥ पुत्रान् स्त्रिय स्त्र
योषेऽपि यस्तान् घातयेन्नरः । कृतस्य
दोषवदति सकामान् नकरोतियः
॥ नमस्करोत्र कृत यस्तु आश्रमान् य
स्तु दूषयेत् । सर्वांस्तानृषिभिः सा
र्द्धं कृतघ्नानब्रवीन्मनु रिति ॥ तस्य
प्रायश्चित्तमपिनास्ति । यथा । ब्रह्मघ्ने
चसुरापेच चौरेच गुरुतल्पगे । नि
ष्कृतिर्विहिता सद्भिः कृतघ्नेनास्तिनि
ष्कृतिरिति ॥

कृतच्छिद्रा । स्त्री । कोषातकीलता-
याम् ॥

कृतज्ञ । पु । हरौ ॥ कृतं कार्यंजगद्रूप
म् । जानातीतिज्ञ. आत्मा । कृतंचा
सौज्ञश्चेतितथा । यद्वा । कृतजगत्
कः आत्मायस्य । प्राणिनांपुण्यपाप

कृपं कृतं कर्म्म जानाति फलदानाभावे ति वा ॥ युनि । कुक्कुरे ॥ त्रि । म यादिरिक्ति । प्रत्युपकारेसबल ॥ येन केनचित् स्वस्मै किञ्चिदपि कृतमुपकारं कृतया जानाति । प्राकृतबोधने । आतशतिकः ॥

कृतज्ञता । स्त्री । उपकारित्वे ॥ भावे तल् । तत्कर्त्तृत्वम् ॥

कृतत्रा । स्त्री । त्रायमाणाख्यलतायाम् ॥

कृतदासः । पु । नारदोक्तपञ्चदशदासान्तर्गते दासविशेषे । स तु केनचित् नियमेन एतावत्कालपर्य्यन्तं तवाहं दास इति कृतसमयः ॥ इति मिताक्षरा ॥

कृतधीः । त्रि । पण्डिते । निर्णीतान्तःकरणे । अभ्याससंस्कृतान्तःकरणे ॥

कृतनाशः । पु । दोषविशेषे ॥ कृतयोः पुण्यपापयोर्भोगमन्तरेण नाशः ॥

कृतपुङ्खः । त्रि । सम्यक्कृतशराभ्यासे । शस्त्रप्रयोगविशिष्टे ॥ कृतोऽभ्यस्तः पुङ्खः शरोऽनेन ॥

कृतपूर्व्वी । त्रि । पूर्वनिष्पन्नकर्म्मणि ॥ कृतं पूर्वमनेनेत्यर्थे इष्टादिभ्यश्चेति कर्त्तरि इनिः ॥

कृतफलम् । न । कक्कोले ॥

कृतफला । स्त्री । कोलशिम्बिकायाम् ॥

कृतम् । अ । अलमर्थे ॥ निषेधे ॥



कृतमालः । पु । आरग्वधे । स्वर्णद्रुमे ॥ कर्णिकारे । आरग्वधे ॥ कृता माला ऽस्य ॥

कृतमाला । स्त्री । सरिद्भेदे ॥ कृतमाला नाम नदी यस्यां मत्स्यो ऽभूद्धरिः ॥

कृतमुखः । त्रि । प्रवीणे । विज्ञे ॥ कृतं मुखमस्य । सर्वत्र कृतमुखत्वात् पञ्चकृतमज्ञत्वसंस्कृतपरत्वम् ॥

कृतयुगम् । न । तिष्ये । सत्ययुगे । सन्ध्यासन्ध्यांशयुक्तेषु चतुर्षु दिव्यसहस्रवर्षेषु ॥

कृतरुचिः । त्रि । सम्यक्कृते ॥

कृतलक्षणः । त्रि । गुणैः प्रतीते । शौर्यादिगुणैः विख्याते ॥ कृतमुद्रारितं लक्षणं नामाङ्कं ॥ श्रीधरः ॥ कृतानि लक्षणानि शास्त्राभ्यासेन । येन शास्त्राणि विज्ञातान्येतत् सर्वमनार्द्र माद्दिति स्मृतेः ॥

कृतवर्म्मा । पु । हृदीकसुते क्षत्रियविशेषे ॥

कृतविद्यः । त्रि । अभ्यस्तविद्ये ॥

कृतवीर्य्यः । पु । एकवीरनृपात्मजे । चन्द्रवंशीयकार्त्तवीर्य्यजनके ॥

कृतवेतनः । त्रि । वेतनेन नियुक्ते दासादौ ॥

कृतवेदी । त्रि । कृतज्ञे ॥

कृतवेध । पु । ⎫ श्वेतघोषा इति गौ
कृतवेधक । पु । ⎭ ड भाषा प्रसिद्धायां
कोशातक्याम् ॥

कृतवेधना । स्त्री । राजकोशातक्याम् ॥

कृतश्रम. । त्रि । मल्लोद्यमे । मल्लोत्-साहे ॥ श्रान्ते ॥ कृत. श्रमोयेन ॥

कृतसापत्निका । स्त्री । अधिविन्नायाम् । अध्यूढायाम् । अनेकभार्यस्य प्रथमोढायाम् ॥ सपत्न्याःभावः । ष्यञ् स्त्रीष्यलोपाः । स्वार्थे कन् । ह्रस्व. । कृता सापत्निका यया ॥

कृतस्वर. । पु । आकरविशेषे । चर्मी-करे ॥

कृतहस्त । त्रि । सुशिक्षितशरमोचे । कृतपुङ्खे ॥ कृतोऽभ्यस्तोहस्तोयस्य ॥

कृताकृतम् । न । कार्यकारणयो ॥ कृतञ्च अकृतञ्च अनयो समाहार ॥ घटिताघटिते ॥ कृतञ्च तदकृतञ्च । क्तेनन्ञ् विशिष्टे नानञिति समास ॥ पु । परमेश्वरे ॥ कृत कार्यात्मक: अकृत' कारणात्मक: । कृत श्चासावकृतश्च पूर्ववत् समास. ॥

कृतागम: । पु । विष्णौ ॥ कृतआगमः श्रुतिस्मृत्यादिशास्त्रयो येन स: ॥

कृताञ्जलि । पुं । लज्जालोषधौ ॥ त्रि । सम्पुटीकृतकरे ॥ कृत.अञ्जलिर्येन ॥

कृतात्मा । त्रि । कृतकृत्ये ॥ स्थिरचित्तान्तःकरणे ॥ योगिनि ॥

कृतात्यय. । पु । कर्मनाशे ॥ कृतस्य अत्यय ॥

कृतान्त । पु । यमे ॥ सिद्धान्ते ॥ दैवे ॥ अकुशलकर्मणि । अशुभकर्मणि ॥ कृतः अन्तोविनाशोयेन ॥ कृत अन्त' निश्चयोयेन यस्य वा । वेदान्तशास्त्रे ॥ कृतञ्च कर्म्म तस्यान्तःपरिसमाप्तिर्यस्मात् ततो अनेनेत्यादिशास्त्रेण । प्रत्यायय ॥ शनौ ॥

कृतान्तजनक. । पु । सूर्ये ॥ इति हेमचन्द्रः ॥

कृतान्ता । स्त्री । रेणुकानामगन्धद्रव्ये ॥

कृतान्नम् । न । लड्डुकादौ ॥ कृतञ्च तत् अन्नञ्च ॥

कृताय । पु । द्यूतक्रीडासाधनीभूताऽ चमव्दितस्य चतुरङ्कभागे ॥

कृतार्थ. । त्रि । कृतप्रयोजने । कृतकार्ये ॥ कृत' अर्थं प्रयोजनं येन ॥

कृतार्थता । स्त्री । साफल्ये ॥ भाग्ये ॥

कृताऽलय. । पु । भेके । मण्डूके ॥ त्रि । कृतवासे ॥ कृत आलयोयेन ॥

कृतावक्रान्त. । त्रि । कृतकर्मणि ॥ कृत मवक्रान्तं मुक्तंकर्मयेन ॥

कृतावसक्थिक. । त्रि । मुक्तादिस्थापकृत

पृष्ठमानुजन्मादिवन्धे ॥

कृतास्त्र । त्रि । शिक्षितास्त्रे ॥

कृति । स्त्री । करणे ॥ पुरुषप्रयत्ने ॥ हिंसायाम् ॥ विशल्यकरण्यामोषधौ ॥ क्रियायाम् ॥ कृतिरिन्द्रियसंयममित्यैकाग्रताकरणमिति छान्दोग्य भाष्यम् ॥ करणम् । डुकृञ्० । स्त्रियां क्तिन् । क्रियतेऽनया वा ॥

कृतकरः । पुं । रावणे । दशवदने ॥ इति शब्दमाला ॥

कृती । त्रि । पण्डिते । बुधे ॥ योग्ये । अभिज्ञे ॥ पुण्यवति ॥ साधौ ॥ कृतार्थे ॥ कृतङ् कर्म प्रशस्तमस्याऽस्ति । अतइनि. । कृतमनेन वा । इष्टादिभ्यादिनिः ॥

कृत्तः । त्रि । छिन्ने । वेष्टिते ॥ कृन्त्यते स्म । कृतीछेदने क्त. ॥

कृत्ति' । स्त्री । कृष्णसारादिचर्मणि ॥ त्वचि ॥ भूर्जे ॥ कृत्तिकानक्षत्रे ॥ कृन्त्यते । कृती । स्त्रियां क्तिन् ॥

कृत्तिका । स्त्री । तृतीयनक्षत्रे । बहुलायाम् ॥ तत्रजातस्य फलम् । क्षुधाधिकः सत्यधनैर्विहीनो वृथाटनोत्पन्नमति. कृतघ्नः । कठोरवाक् चाहितकर्मकृत् स्यात् चेत् कृत्तिकायां मनुज प्रसूतइति ॥ कृन्तति । कृती० । कृतिभिदिलतिभ्य. कित्तिकन् ॥

कृत्तिकाभव । पु । चन्द्रमसि ॥ कृत्तिकाया भवोऽस्य ॥

कृत्तिकासुत । पु । स्कन्दे ॥ स्कन्दे । कार्त्तिकेये ॥ कृत्तिकायाः सुत ॥

कृत्तिवासः । पु । शिवे ॥ इति हिरू० ॥

कृत्तिवासा. । पु । शिवे ॥ कृत्तिश्चर्म वासोऽस्य ॥

कृत्नु' । त्रि । कारौ । शिल्पिनि ॥ कर्त्तरि ॥ करोति कृणोति वा । डुकृञ् कृञ् हिंसायां वा । कृहनिभ्यां क्त्नु ॥

कृत्यम् । न । कर्त्तव्ये । कार्ये । प्रयोजने ॥ पुं । तव्यादिप्रत्ययेषु ॥ यथा । कृत्या. षट् ते समाख्याताः कथ्यन्ते भावकर्मणो. । तव्यानीयावनन्तादि यत् केलिम. कर्मकर्त्तरि इति सुपप्रसन्नताकारिका ॥ कर्त्तरि कर्मणि चार्थे विहिताः कृत्या वाच्यलिङ्गा भवन्ति ॥ त्रि । विहिते ॥ कार्ये ॥ क्रियते । डुकृञ्० । विभाषाकृवृषोरिति क्यप् ॥ कृन्त्यते वा । कृतीछेदने । ऋदुपधाच्चाकॢपिचृतेरिति क्यप् ॥ धनादिभिर्भेद्ये शत्रौ ॥ क्रुद्धलुब्धभीतावमानिताः परे कृत्या इति नीतिः ॥

कृत्यवित् । त्रि । कार्यज्ञे ॥ विधिज्ञे ॥

कृत्या । स्त्री । क्रियायाम् ॥ यथा । कां कृत्या मकार्षीः ॥ अभिचारदैवते ॥ यज्ञदेवताविशेषे ॥ ॥ अभिचारक्रियायाम् ॥ करणम् । कृञ् श्चेतिचात्क्यप् । तुक् । टाप् ॥ कृन्त्यते वा । कृती०। ऋदुपधादितिक्यप्॥

कृत्रिम । पु । सिह्लके । तुरुष्कनाम्नि गन्धद्रव्ये॥ द्वादशपुत्रान्तर्गतपुत्रवि०॥ यथा । सदृशन्तु प्रकुर्याद्यं गुणदोषविचक्षणम् । पुत्रं पुत्रगुणैर्युक्तं सविज्ञेयश्चकृत्रिम इतिमनुः ॥ न । विडलवणे ॥ काचलवणे ॥ जवादिनामगन्धद्रव्ये ॥ रसाञ्जने ॥ त्रि । कृतिसम्भवे । रचिते ॥ डुकृञ्०। भावे क्त्रित् क्त्रि । कृत्या क्रियया निर्वृत्तम् । मेर्मम्नित्यम् इति मप् ॥

कृत्रिमक. । पु । तुरुष्कनामनि गन्धद्रव्यविशेषे ॥

कृत्रिमधूप. । पु । } दशकधूपे ।
कृत्रिमधूपक । पु । } नाना सुगन्धिद्रव्यकृतदशाङ्गादिधूपे ॥ कृत्रिमश्चासौधूपश्च ॥ स्वार्थे कन् ॥

कृत्रिमपुत्रक । पुं । कृत्रिमेपुत्रे ॥ त्रि। पुत्तलिकायाम् । गुडिया इति भाषा॥

कृत्रिममित्र. । पु । रचितबन्धौ ॥

कृत्वा । अ । विधायेत्यर्थे ॥

कृत्सम् । न । उदके । जले ॥ सम्रुदाये ॥ पु । पापे ॥ कृन्ततिं कृणत्ति वा । कृतीछेदने वेष्टने वा । स्नुव्रश्चिकृत्यृषिभ्य किदितिस ॥

कृत्स्नम् । न । जले ॥ सर्वस्मिन् ॥ कुक्षौ ॥ त्रि । पूर्णे । समग्रे । सोपकरणे । सफले ॥ कृन्त्यते । कृती०। कृत्यधूभ्यांक्स ॥

कृत्स्नधर्म । पु । निष्कामकर्मानुष्ठाने ॥

कृत्स्नवित् । त्रि । परिपूर्णात्मविदि ॥

कृदर । पु । कुसूले । अन्नकोष्ठे । धान्यादिगृहे । गञ्ज गोला इतिचभाषा ॥ कुर्वन्ति तस्मिन् । डुकृञ्० कृदरादयश्चेतिसाधु ॥ ॥

कृन्तत्रम् । न । लाङ्गले ॥ कृन्तति । कृती०। कृतेर्नुम्चेतिकत्रप्रत्यय ॥ कृन्तत्र कर्त्तनीयमिति वेदभाष्यम्॥

कृन्तनम् । न । छेदने ॥ यथा । कृन्तनं नखकेशानां छेदनञ्च वनस्पतेः । श्रावाशौचे न कर्त्तव्यं पाठनं पठनं तथा ॥ इति नारदः ॥

कृप । पु । द्रोणाचार्यस्य श्यालके । अश्वत्थाममातुले । कृपाचार्ये ॥ व्यासे॥

कृपणः । पु । कृमौ ॥ त्रि । मन्दे । क्षुद्रे । किम्पचाने ॥ कुत्सिते ॥ महाव्यसनप्राप्ते । दीने ॥ यथा । महाव्यसनप्राप्तोदीनः कृपणउच्यते । कुलेप्यकृपणो राम सम्भूतःसर्वकामदे ॥ इति

सम्प्रसारणमित्यत सम्प्रसारणानुवृत्ते ॥

कृमिघ्नकण्टकम् । न । चित्राङ्गे ॥ विडङ्गे ॥ उदुम्बरे ॥ चित्रायाम् ॥

कृमिकोशोत्थम् । त्रि । कौशेये । रेशिमकपडा इतिभाषा ॥

कृमिघ्न । पु । पलाण्डौ ॥ कोलकन्दे ॥ पारिभद्रे ॥ भल्लातके ॥ विडङ्गे ॥ कृमीन् हन्ति । अमनुष्यकर्तृके चेतिटक् । अत्पूर्वस्येतिनियमान्नणत्वम् ॥

कृमिघ्ना । स्त्री । हरिद्रायाम् ॥

कृमिघ्नी । स्त्री । धूम्रपत्रायाम् ॥ विडङ्गे ॥

कृमिजम् । न । अगुरुणि ॥ त्रि । कृमिजाते । कृमिभिर्जन्यते । जनी० । अन्येभ्योपीतिड ॥

कृमिजग्धम् । न । अगुरुणि । जोङ्गके ॥

कृमिजा । स्त्री । लाक्षायाम् ॥

कृमिदन्तक. । पु । दन्तरोगविशेषे ॥ कृष्णच्छिद्र चल. स्रावी ससंरम्भो महारुज. । अनिमित्तरुजोवातात् सज्ञेय कृमिदन्तक. ॥

कृमिफल । पु । उदुम्बरे ॥ कृमय:फलेऽस्य ॥

कृमिरिपु. । पु । विडङ्गे ॥ कृमीणां-रिपु' ॥

कृमिला । स्त्री । अनेकप्रस्वाम् । बहुसन्तानप्रसवायाम् ॥ त्रि । कृमियुक्ते ॥ कृमीन् लाति । ला० । क. ॥

कृमिवृक्ष । पु । कोषाम्रे ॥ ।

कृमिशङ्ख । पु । न । कृमिजलजे । जीवशङ्खे ॥

कृमिशत्रु । पु । विडङ्गे ॥

कृमिशुक्ति । स्त्री । जलशुक्तौ ॥

कृमिशैल । पु । } वल्मीके । वाँवी

कृमिशैलक । पु । } इति भाषा ॥

कृमीलक: । पु । वनमुद्गे ॥

कृवि । पु । तन्तुवायद्रव्ये । वापयन्त्रे । तांत इतिभाषा ॥ करोति क्रियते ऽनेनवा । डुकृञ्० । कृविघृष्विच्छविस्थविकिकीदिविरितिसाधु ॥

कृश । त्रि । अल्पे । सूक्ष्मे ॥ कृश्यते स्म । कृशतनूकरणे । अनुपसर्गात् फुल्लचीबेतिसाधु: ॥ कृशधने ॥

कृशर. । पु । कृसरे ॥ कृशराति । रा दाने । आतइतिक ॥

कृशरा । स्त्री । कृसरायाम् ॥ टाप् ॥

कृशशाख । पु । पर्पटे ॥

कृशाङ्ग: । त्रि । सूक्ष्माङ्गविशिष्टे ॥

कृशाङ्गी । स्त्री । प्रियङ्गुवृक्षे ॥ तन्वङ्ग्याम् ॥ कृशान्यङ्गान्यस्या ॥

कृशानु । पु । पावके । अनले ॥ चित्रकाख्ये ॥ कृश्यति तनू करोति । कृशतनूकरणे । चइतन्यञ्जीतिकृशे

रानुक् ॥

कृशानुरेता । पु । सर्वज्ञे । धूर्जटौ । शिवे ॥ कृशानो रेतो ऽस्य । देव्या सोढु मशक्यत्वाद्वन्हौ प्रक्षिप्त रेतः । इति पुराणम् । अतो ऽग्निभू कुमार ॥

कृशाश्वी । पु । नटे ॥ कृशाश्वेन प्रोक्त नटसूत्र मधीते । कर्मन्दकृशाश्वादिनि ॥

कृशिका । स्त्री । आम्बुकर्णीलतायाम् ॥

कृषक । पु । फाले ॥ वृषे ॥ त्रि । कर्षके ॥ कृषति । कृषविलेखने । कृषे र्वुन् शिल्पिसंज्ञयोरिति ॥ कृषे इति क्वुन् ॥

कृषि । स्त्री । वैश्यवृत्तिवि० । अन्वेते । खेती इति भाषा ॥ अन्नोत्पत्त्यर्थं भूमेर्विलेखनं कृषि ॥ कर्षणम् । कृष० । इक् कृष्यादिभ्य । इगुपधात् किदितीन् वा ॥

कृषिक । पु । फाले ॥ त्रि । कर्षके ॥ कृषति । कृष० । वृश्चिकृषो. कि कन् ॥

कृषिका । स्त्री । फाले ॥ टाप् ॥

कृषिजीवी । पु । कृषिहलौ । स्वयङ्कृतया ऽस्वयङ्कृतया वा कृष्या जीवति इति तथा ॥

कृषीवल: । त्रि । कर्षके । कृषिजीविनि ॥ कृषि रस्यास्ति । रजः कृष्या

सुतिपरिषदोवलच् । वले इति दीर्घ ॥

कृष्कर. । पु । शिवे ॥ इति त्रिकाण्डशेष

कृष्टम् । त्रि । कृष्टिमत् क्षेत्रे । सीत्ये । जोता खेत इति भाषा ॥ कृष्यते स्म । कृष० । क्त ॥ आकृष्टे ॥

कृष्टपच्य । त्रि । धान्ये ॥ शालिषु ॥ कृष्टे स्वय मेव पच्यन्ते इत्यर्थे राजसूयसूर्य मृषोद्यरुच्यकुप्य कृष्टपच्याव्यथ्या इति क्यबन्तो निपातित. ॥ कृष्टेन पच्यते वा ॥

कृष्टपाक्य: । त्रि । कृष्टपच्ये ॥ शुद्धे कर्मणि यत् ॥

कृष्टि । पु । पण्डिते । बुधे ॥ स्त्री । आकर्षे । कर्षणे ॥ कर्षति । कृष० । क्तिच ॥ भा० क्तिन् । सभापूर्वकत्वात्गुण. ।

कृष्ण । पु । भगवतो ऽवतारविशेषे । केशवे । वासुदेवे । देवकीनन्दने । भक्तदु:खकर्षिणि ॥ भक्तानां पापादिदोषान् सर्वथानिवारयितु मशक्यानपि कृषतिनिवारयति तेषा मेवसर्वथा प्राप्तु मशक्यानपि पुरुषार्थान् आकर्षति प्रापयतीति वा ॥ यथा । स्मरणादेवकृष्णस्य सिद्ध्यन्ति सर्वसिद्धय. । स्मृते

सकलकल्याणभाजनंयत्रजायते। पुरुषतमजनित्य त्रजामिशरणहरिम्। स्मरणादेव कृष्णस्य पापसङ्घातपञ्जरम्। शतधाभेदमाप्नोति गिरिर्वज्रहतो यथेतिकृष्णस्मरण माहात्म्यम् ॥ अस्यजन्मसमय उक्तोत्र माणिक्यनामनि ज्योतिर्ग्रन्थे । उच्चस्था. शशिभौमचान्द्रिशनयो लग्नहर्षो लाभगो जीव सिंहतुलालिषु क्रमवशात् पूषोशनोराहव । नैशीथ. समयोऽष्टमी वुधदिनं ब्रह्मर्क्षमत्र क्षणो श्रीकृष्णाभिधमम्बुजेक्षणमभूदाविः परम्ब्रह्मतदिति॥ जनं जनेन जनिता जनं पाति जनेन य । जन जनेन हरति त कृष्णं भजसाम्प्रतम् ॥ परब्रह्मणि ॥ यथा । कृषि र्भूवाचक. शब्दो णश्च निर्वृतिवाचक । तयोरैक्य परम्ब्रह्म कृष्ण इत्यभिधीयते ॥ पाराशर्ये । वेदव्यासे ॥ अर्जुनपाण्डवे ॥ वायसे । काके ॥ कोकिले ॥ कर्मर्द्दके ॥ वर्णविशेषे । नीले । श्यामे । मेचके ॥ न । मरिचे ॥ लोहे ॥ नीलाञ्जने ॥ कालागुरुणि ॥ अशुभकर्मणि ॥ त्रि । मेचकवर्णवति ॥ कर्षतिमन । कृष० । कृषेर्वर्णइतिनक् ॥ यद्वा । कर्षत्यरीन् । बाहुलकात्वर्णं विनापिनक् ॥ कृष्णोवर्णोऽस्यास्ति वा कृष्ण । नगन्तात गुणवचनेभ्यो मतुपोलुगितिलुक् ॥

कृष्णकन्दम् । न । कैरवे । निशाह्वे॥ इतित्रिकाण्डशेष ॥ कृष्ण.कन्दोस्य॥

कृष्णकर्म्मा । त्रि । दुराचारे। पापाचारयुक्ते ॥ कृष्णङ्कर्मास्य ॥ कृष्णार्पितकर्मणि ॥

कृष्णकलि । स्त्री । गुलालफूल इति प्रसिद्धे कृष्णकेलौ इति गौडा. ॥

कृष्णकाय । पु । महिषे ॥ त्रि । श्यामतनौ ॥ कृष्ण कायोस्य ॥

कृष्णकाष्ठम् । न । कालागुरुणि ॥

कृष्णकोहल । पु । द्यूतकृति । अक्षदेविनि ॥ कृष्णोऽशुभ कोहलोस्य॥

कृष्णगन्धा । स्त्री । शोभाञ्जने ॥

कृष्णगर्भ । पु । कट्फले ॥

कृष्णचञ्चुक । पुं । चणके ॥

कृष्णचतुर्द्दशी । स्त्री । कृष्णपक्षीयचतुर्दश्याम् । भूते ॥ कृष्णाचासौचतुर्दशीच ॥

कृष्णचन्दनम् । न । हरिचन्दने । पीतचन्दने ॥ कृष्णञ्चचन्दनम् ॥

कृष्णचर । त्रि । कृष्णस्यभूतपूर्वंगवादौ भूतपूर्वेचरट् ॥

कृष्णचूडा । स्त्री । स्वनाम्नागौडेषुप्रसिद्धे पुष्पवृक्षे । गुलतुरा इतियव

नेषु प्रसिद्धे ॥
कृष्णचूडिका । स्त्री । गुञ्जायाम् ॥
कृष्णचूर्णम् । न । लौहमले ॥
कृष्णजटा । स्त्री । जटामांस्याम् ॥
कृष्णजीरक । पु । सुपव्याम । कारव्याम् । कालाजीरा इति भाषा ॥ कृष्णश्चासौ जीरकश्च ॥
कृष्णतण्डुला । स्त्री । कर्णस्फोटायां लतायाम् ॥
कृष्णतामम् । न । गोशीर्षचन्दने ॥
कृष्णतार: । पु । हरिणे ॥
कृष्णत्रिवृता । स्त्री । त्रिवृताभेदे । पालिन्द्याम् । श्यामायाम् । कालतेउडी इति गौडभाषा ॥ कृष्णाचासौ त्रिवृताच ॥
कृष्णदन्ता । स्त्री । काश्मरीवृक्षे ॥
कृष्णदेह । पु । भ्रमरे ॥ त्रि । कृष्णवर्णशरीरे ॥ कृष्णोदेहोऽस्य ॥
कृष्णद्वैपायन. । पु । वेदव्यासे ॥ यथा । कृष्णद्वैपायन व्यास विद्धि नारायणं विभुम् । कोह्यन्य । पुण्डरीकाक्षा न्महाभारत कृद्भवेदिति विष्णुपुराणम् ॥ द्वीपमयनं जन्मभूमिर्यस्य स । द्वीपायनएव । प्रज्ञाद्यण् । द्वीपंयमुनाद्वीप मित्यर्थ ॥ कृष्ण. कृष्णवर्णत्वात् कृष्णश्चासौ द्वैपायनश्च ॥
कृष्णधत्तूरक । पु । कालाधतूरा इति भाषाप्रसिद्धे कृष्णपुष्पे । विषाराती । कृरधूर्त्ते । शिवे । सिद्धे ॥ सितनीलकृष्णलोहितपीतप्रसवास्सन्ति - धत्तूरा. । सामान्यगुणोपेता स्तेषुगुणाढ्यस्तु कृष्णकुसुम' स्यादितिराजनिर्घण्ट ॥
कृष्णपक्ष. । पु । सितेतरपक्षे । असितपक्षे ॥ सतु प्रतिपदाद्यमावास्यान्तपञ्चदशदिनात्मक । यथा । तत्र पक्षावुभौ मास शुक्लकृष्णौ क्रमेणहि । चन्द्रवृद्धिकर: शुक्ल. कृष्णश्चन्द्रक्षयात्मक ॥ पक्षव्याख्यास्तु तिथय: क्रमात् पञ्चदशस्मृता: । दर्शान्ता. कृष्णपक्षेता पूर्णिमान्तास्वशुक्लके ॥ इति तिथ्यादितत्त्वम् ॥
कृष्णपर्णी । स्त्री । कालतुलस्याम् ॥
कृष्णपाक' । पु । करमर्द्दके ॥ कृष्ण:पाकोऽस्य ॥
कृष्णपाकफल: । पु । करमर्द्दे ॥ कृष्णपाकफलमस्य ॥
कृष्णपिङ्गला । स्त्री । चण्ड्याम् । दुर्गायाम् ॥
कृष्णपिण्डीतक. । पु । कृष्णपिण्डीरवृक्षे । वराहे ॥
कृष्णपिण्डीर. । पु । कृष्णपिण्डीतके ॥
कृष्णपिपीली । स्त्री । कृ[illegible]वर्णायाम्पिपीलिकायाम् । दंशकहायाम् । स्थू

खायाम् ॥

कृष्णपुच्छ. । पु । लोमडी इतिभाषा प्रसिद्धे वन्यजन्तुविशेषे । किखै ॥

कृष्णपुष्प । पु । कृष्णधत्तरके ॥

कृष्णपुष्पी । स्त्री । प्रियङ्गुवृक्षे ॥

कृष्णफल । पु । करमर्द्दके ॥ कृष्णानि फलान्यस्य ॥

कृष्णफलपाक. । पुं । करमर्द्दके । करौंदा इतिभाषा ॥

कृष्णफला । स्त्री । सोमराज्याम् ॥ कृष्णानिफलान्यस्या. ॥ कोलशिम्ब्याम् ॥ अजादित्वाट्टाप ॥

कृष्णभूकुष्माण्ड । पु । विदार्य्याम् ॥

कृष्णभूम । त्रि । कृष्णवर्णमृत्तिकायुक्ते देशे ॥ कृष्णोदगिश्च्यच् ।

कृष्णभूमिजा । स्त्री । गोमूत्रिकातृणे ॥

कृष्णभेदा । स्त्री । कटुकायाम् ॥ कृष्णो वर्णेन भेद श्छेदोऽस्या. ॥

कृष्णभेदी । स्त्री । कटुक्याम् । कटुरोहिण्याम् ॥ कृष्णं मलम्भिनत्ति । कर्मण्यण् । ङीप् ॥

कृष्णमन्त्री । पु । पवनव्याधौ । उद्धवे ॥

कृष्णमल्ली । स्त्री । कृष्णमल्लिकायाम् । वनवर्वरे । वर्वर्य्याम् । काली तुलसी इतिभाषा ॥

कृष्णमृग । पु । काला मृग इतिप्रसिद्धे मृगे । वासन्ते । सुराष्ट्रजे ॥

कृष्णमूली । स्त्री । शारिवाविशेषे ॥

कृष्णमृत्तिक । पु । कृष्णभूमौ ॥

कृष्णमृत् । स्त्री । काली मिट्टी इतिप्रसिद्ध कृष्णवर्णाया मृदि । कृष्णभूमौ ॥ कृष्णमृत् मलदाहास्रप्रदरश्लेषपित्तनुत् ॥

कृष्णरुहा । स्त्री । जतुकालतायाम् ॥

कृष्णरूप्य । त्रि । कृष्णचरे ॥

कृष्णल म् । न । रक्तिकायाम् । रत्ती घुंघुची चिरमठी इतिभाषा ॥ त्रिभिर्यैर्भवेत् सिर्षपै मानैः ॥ सर्षपाः षट् यवो मध्य स्त्रियवन्त्येककृष्णलम् ॥

कृष्णलक. । पु । गुञ्जायाम् ॥

कृष्णलवण म् । न । सौवर्चललवणे । कालानूण इति भाष ॥ काचलवणे ॥

कृष्णला । स्त्री । रक्तिकायाम । गुञ्जायाम् ॥ कृष्णं वर्णं लाति । लादाने । आतोनुपेतिक' ॥ वधा । कृष्णो वर्णोऽस्त्यस्या' । सि० कच् ॥

कृष्णलोहम । न । अयस्कान्ते ॥

कृष्णलोहित । पु । धूम्रवर्णे । कृष्णरक्तमिश्रवर्णे ॥ त्रि । धूम्रवर्णवति ॥ कृष्णमिश्रोलोहित, । शा० ॥

कृष्णवक्त्र: । पु । वानरे ॥ इति हलायुध ॥ त्रि । श्याममुखे ॥

कृष्णवर्ण । पु । शूद्रे ॥ विधुन्तुदे ॥ कृष्णोवर्णोऽस्य ॥

कृष्णवर्त्मा । पु । अग्नौ । आश्रयाशे ॥ कृष्णाधूमोवर्त्माऽस्य ॥ दुराचारे ॥ विधुन्तुदे ॥ चित्रकवृक्षे ॥

कृष्णववरक । पु । वर्वरवृक्षे ॥

कृष्णवल्लिका । स्त्री । जनुकालतायाम् ॥

कृष्णवल्ली । स्त्री । कृष्णार्जके ॥ सारिवा विशेषे ॥

कृष्णवानर । पु । कपौ । गोलाङ्गूले ॥

कृष्णवीज. । पु । रक्तशिग्रौ ॥ न । कालिङ्गे । कलौंदा इति भाषा प्रसिद्धे फले ॥

कृष्णवृन्ता । स्त्री । पाटलावृक्षे ॥ माषपर्ण्याम् ॥ कृष्णं वृन्तमस्याः ॥

कृष्णवृन्तिका । स्त्री । गम्भार्याम् ॥ कृष्णवृन्तायाम् ॥

कृष्णवेणा । स्त्री । सरिद्विशेषे ॥

कृष्णशार' । पु । कालसारमृगे । कृष्णसारे ॥ कृष्णश्चासौ शार'शबलश्च। वर्णोवर्णेनेतिसमास ॥

कृष्णशालि. । पु । कालधान इति गौड भाषा प्रसिद्धे धान्य विशेषे । श्यामशालौ ॥ कृष्णशालिस्त्रिदोषघ्नोमधुर' पुष्टिकृद्धित' । पुष्टिवीर्यवर्द्धनश्च वर्णकान्तिवलप्रद इत्यस्यगुणा' ॥

कृष्णशिंबिका । स्त्री । काकाण्डाम् ॥ कृष्णवर्णा शिम्बिका ॥

कृष्णशिग्रुः । पुं । शोभाञ्जने ॥



कृष्णशृङ्ग । पु । महिषे । कुशामे ॥

कृष्णसख. । पु । अर्जुनवृक्षे ॥ अर्ज्जुने ॥ कृष्णस्य सखा । टच् ॥

कृष्णसखी । स्त्री । जीरके ॥ इति शब्दचन्द्रिका ॥

कृष्णसर्षप । पु । राजसर्षपे । राजिकायाम् ॥

कृष्णसार: । पु । स्नुह्याम् ॥ मृगविशेषे । कालसारे ॥ कृष्णसारस्तु चरति मृगोयत्रस्वभावत ॥ खदिरे ॥ कृष्णोमसार, शबल । इतायेतिवेणपि भागात् समास. ॥

कृष्णसारथि. । पु । पार्थे । धनञ्जये ॥ अर्जुनवृक्षे ॥

कृष्णसारा । स्त्री । शिंशपावृक्षे ॥ कृष्णः सारोऽस्या. ॥

कृष्णस्कन्ध । पु । कालस्कन्धे । तमालवृक्षे ॥

कृष्णा । स्त्री । द्रौपद्याम् ॥ नीलीवृक्षे ॥ कणायाम् ॥ द्राक्षायाम् ॥ नीलपुनर्नवायाम् ॥ कृष्णजीरके ॥ गम्भार्याम् ॥ कटुकायाम् ॥ सारिवाविशेषे ॥ राजसर्षपे ॥ पर्प्यन्याम् ॥ काकोल्याम् ॥ सोमराज्याम् ॥ नदीविशेषे ॥ निर्ऋते. पुर्य्याम् ॥ कृष्णा दैत्यपते र्मृत्योर्धामवद्दैत्यसेविता । नीलरत्नप्रभाजालविताननरभूषणा ॥ धू

मादिगतौ । चालहीनत्वेन तमो मयत्वात् दक्षिणमार्गत्वेन तत्प्रसिद्धे पितृयाणमार्गे ॥ कृष्णवर्णायाञ्च त्रि । अनुदात्तत्वाभावान्नङीष्॥ कृष्णवर्णा ऽस्यस्या । अर्शआद्यच्॥

कृष्णागुरु । न । । अगुरुणि । कालागुरुणि । कृष्णकाष्ठे । धूपार्हे ॥ कृष्णागुणाधिकतत्तु लोहवत् वारिमज्जति ॥ अगुरुप्रभव. स्नेह कृष्णागुरुसम. स्मृत ॥

कृष्णाचल । पु । रैवताद्रौ ॥ कृष्णस्यावचलस्य ॥

कृष्णाजिनम् । न । कृष्णसारचर्मणि ॥

कृष्णाञ्जनी । स्त्री । कालाञ्जनीवृक्षे ॥

कृष्णानदी । स्त्री । कृष्णसमुद्भवायाम् । कृष्णगङ्गायाम् ॥ स्वच्छमस्याजलंरुच्य पाचनदीपनंमतम् ॥

कृष्णाभा । स्त्री । कालाञ्जन्याम् ॥

कृष्णामिषम् । न । कृष्णलोहे ॥इ० हे० ॥

कृष्णायसम् । न । कृष्णवर्णलोहे। काललोहे ॥

कृष्णार्चि. । पु । अग्नौ ॥

कृष्णार्जक. । पु । कालीतुलसी इति भाषा प्रसिद्धे । गरम्भे । वनवर्बरे ॥

कृष्णालु' । पु । नीलालौ ॥

कृष्णावास । पु । अश्वत्थवृक्षे ॥ कृष्णस्य आवासो ऽस्मिन् ॥

कृष्णिका । स्त्री । राजिकायाम् । राइ इति भाषा ॥ कृष्णेव । संज्ञायां कन् ॥

कृष्णेक्षु । न । काजली ईख इति प्रसिद्धे कोकिलाक्षे । श्यामेक्षौ ॥

कृष्णेतर । पु । शुक्लपक्षे ॥

कृष्णोदुम्बरिका । स्त्री । काकोदुम्बरिकायाम् ॥

कृष्या । स्त्री । कर्षणार्हायाम् ॥

कृसर. । पु । तुल्यतिलान्ने ॥ तिलतण्डुलसम्पक्क. कृसर सोऽभिधीयते ॥ क्रियते । डुकृञ्॰ । कृधूमदिभ्य क्विदितिसर । वा॰ नपत्वम् ॥

कृसरा । स्त्री । खिचरीति लोकप्रसिद्धे द्विदलमिश्रितौदने ॥ तण्डुला दालिसम्मिश्रालवणार्द्रकहिङ्गुभि. । संयुक्ता' सलिले सिद्धा कृसराकथितावुधै ॥ कृसराशुक्लावल्यागुरु. पित्तकफप्रदा । दुर्जरापुष्टिविष्टम्भमलमूत्रकरी स्मृता ॥

कॢप्त । त्रि । रचिते । कृतकल्पने ॥ नियते ॥

कॢप्तकीला । स्त्री । पट्टोलिकायाम् ॥ । व्यवस्थापत्रे ॥ इति त्रिकाण्डशेष.॥

कॢप्तधूप । पु । सिल्हके ॥

कॢप्तिक. । त्रि । क्रीते ॥ इतिहलायुध:॥

केकय: । पु । सूर्यवंशीयराजविशेषे ॥

कावल इति ख्याते देशविशेषे ॥

केकयी । स्त्री । भरतमातरि । दशरथ राजपत्न्याम् ॥ केकयस्य दुहिता । सङ्कोचमानाभावा ज्जन्यजनकभावेऽपि पुंयोग इति पुंयोगादाख्यायामिति ङीष् ॥

केकर । त्रि । वलिरे । ऐंचाताना इति भाषा प्रसिद्धे निम्नोन्नताक्षिपुरुषे । टेरके ॥ केमूर्द्धि करं ग्रीवमस्य । कृणोर्हेतुताच्छील्यानुलोम्येष्विति ट ॥ हलदन्तादित्यलुक् ॥

केका । स्त्री । मयूरस्ववाण्याम् ॥ के मूर्द्धि कायते । कैशब्दे । अन्येभ्योपीति ड. । हलदन्तात सप्तम्याः संज्ञायामित्यलुक् ॥

केकावल । पुं । मयूरे ॥

केकिक: । पु । केकावलि । मयूरे ॥ व्रीह्यादिभ्यश्चेति ठन् ॥

केकी । पु । मयूरे ॥ केकाऽस्यस्य । व्रीह्यादिभ्यश्चेति मत्वे इनि ॥

केचन । अ । केचिदित्यर्थे ॥

केचित् । अ । केचनेत्यर्थे ॥

केणुकम् । न । शाकविशेषे । नाडीचे । विश्वरोचने ॥

केणिका । स्त्री । पटकुट्याम् । संबूटी इतिभाषा ॥

केत: । पु । अभिनवमन्दिरे ॥ केतनम् । कित० । घञ् ॥

केतक । पु । केवडा इतिख्याते केतकीवृक्षे ॥ केतक सूचिकापुष्पो जम्बुक क्रकचच्छद । सुवर्णकेतकी त्वन्या लघुपुष्पा सुगन्धिनी ॥ केतक. कटुक स्वादुर्लघु स्तिक्त' कफापह. ॥ न । केतक्या पुष्पे ॥ केतक्या' पुष्पम् केतकम् । पुष्पमूलेषु बहुलमित्यणोलुक् । नादि द्वित्वि: । लुक तद्धितलुकीति स्त्रीप्रत्ययस्यलुक् ॥

केतकी । स्त्री । तृणद्रुमान्तरे । सूची पुष्पे । धूलिपुष्पिकायाम् ॥ केतयति । कितनिवासादौ । क्वुन् । बाहुल्या । गौरादित्वान् ङीष् ॥

केतनम् । न । सदने । गृहे ॥ निमन्त्रणे ॥ केतौ । ध्वजे । चिह्ने ॥ कृत्ये ॥ केत्यते चायते ऽनेन । कित० । भावकर्मकरणाधिकरणेषु ल्युट् ॥ स्थाने ॥

केतित । त्रि । निमन्त्रिते ॥ केतितस्तु यथान्यायं हव्यकव्येष्वतन्द्रित. । कथंचिदप्यतिक्रामन्पापः शूकरतां व्रजेत् ॥

केतु' । पु । कित । धृतौ ॥ पताकायाम् ॥ लक्षणि । चिह्ने ॥ दीप्तौ ॥ नवमग्रहे । राहोः शरीरे । शिखिनि ॥ सचोत्पातरूप. ॥ यथा । ना

केतु

किरणाख्य पञ्चविंशति रश्मिखा ।
प्रागपरदिशो दृश्यान्तपति विरोधा
वहा रविजा ॥ अग्निपुत्रा स्तावन्त
इत्याह । शुकदहनबन्धुजीवकला
क्षाक्षतजोपमा हुताशसुता । आ
ग्नेय्यां दृश्यन्ते तावन्त स्तेपि शि
खिभयदा ॥ मृत्युसुता स्तावन्त आ
ह वक्रशिरा मृत्युसुता रूक्षा, कृ
ष्णाश्च तेपि तावन्त । दृश्यन्ते याम्या
यां जनमरकावेदिन स्तेच ॥ भूमि
पुत्रा द्वाविंशतिरेवाह । दर्पणवृत्ता
कारा विशिखा किरणान्विता धरा
तनया । क्षुद्भयदा द्वाविंशति रैशा
न्या मम्बु तैलनिभा ॥ चन्द्रसुता स्त्र
य । शशिकिरणरजतहिमकुमुद
कुन्दकुसुमोपमा, सुता शशिन ।
उत्तरतो दृश्यन्ते त्रय सुभिक्षावहा
शिखिन ॥ ब्रह्मदण्डस्य स० ॥
ब्रह्मसुत एक एव त्रिशिखो वर्णै
स्त्रिभि र्युगान्तकर । अनियतदिक्
सम्भवो विज्ञेयो ब्रह्मदण्डाख्य ॥
एकाधिकं शत कथित मन्यानि नव
शतान्यकेतानि कथनीयानीत्याह
। शत मभिहित मेकाधिक मेकेन
विरहिता न्यस्मात् । कथयिष्ये
केतूनां शतानि नवचाद्यै स्य
हे: ॥ शुक्रपुत्रा श्चतुरशीतिसङ्

केतु

ख्या स्तानाह । सौम्यैशान्यो रुदय
शुक्रसुता यान्ति चतुरशीत्याख्या ।
विपुलसिततारका स्ते स्निग्धाश्चत्र
षन्तितीव्रफला ॥ षष्टि शनैश्चर
पुत्रा । स्निग्धा प्रभासमेता द्विशि
खा: षष्टि शनैश्चराङ्गरुहा । अति
कष्टफला दृश्या सर्वे चैते कनकसं
ज्ञा ॥ गुरुपुत्रा पञ्चषष्टि । विक
चा नाम गुरुसुता सितैकतारा
शिखापरित्यक्ता । षष्टि पञ्चभिर
धिका स्निग्धा याम्याश्रिता, पापा ॥
एकपञ्चाश बुधपुत्रा । नातिव्यक्ता
सूक्ष्मा दीर्घा शुक्ला यथेष्टदिक्प्र
भवा: । बुधजा स्तस्करसंज्ञा पापफ
ला स्त्वेकपञ्चाशत् ॥ भौमपुत्रा, ष
ष्टि । क्षतजानलाऽनुरूपा स्त्रिचूल
तारा, कुजात्मजा षष्टि. । नाम्ना च
कौङ्कुमा स्ते सौम्याशासंस्थिता पा
पा ॥ त्र्यधिकशतराहुपुत्रा. । त्रिंशत्
व्यधिका राहो स्तेतामसकीलकाख्या
तिख्याता । रविशशिगा दृश्यन्ते
तेषां फलमर्कचारोक्तम् ॥ अर्कचा
रासंतामसकीलकसंचाराहुसुता:
केतवइत्यादिनेत्यर्थ: । विंशत्यधि
कं शत माग्निपुत्राणाम् । विंशत्य
धिकमन्य च्छत मग्ने र्विश्वरूपस
ञ्ज्ञानाम् । तीव्रानलभयदानां ज्वा

केतुः

नामाभिरा कुलतनूनाम् ॥ सप्त सप्तति र्वायुपुचा । श्यामारुणा वितारा श्यामरूपा विकोर्णदीधितय । अरुणाख्यास्ते वायो सप्त च सप्तति पापदा परुषा ॥ प्रजापतिसुतान् ब्रह्मणा पुत्राँश्चाह । तारापुञ्जनिकाशा गणका नाम प्रजापते रष्टौ । हे च शते चतुरधिके चतुरस्रा ब्रह्मसन्ताना ॥ द्वाविंशदरुणपुत्रा नाह । कङ्का नाम वरुणजा द्वात्रिंशद्वंशगुल्मसंस्थाना । शशिवत् प्रभासमेता स्तीव्रफला केतवः प्रोक्ता ॥ षण्णवति कालपुत्रा । षण्णवति कालपुत्रा कबन्धसंज्ञा कबन्धसंस्थाना । पुण्ड्रा भयप्रदाः स्युर्विरूपतारा श्च ते शिखिनः ॥ नव विदिक्पुत्रा, सर्वेषां च संख्या मत्रो याञ्च विशेषं वक्ष्यामीत्याह । शुक्लविपुलैकतारा नव विदिशां केतव समुत्पन्ना । एवं केतुसहस्रं विशेष मेषा मतो वक्ष्ये ॥ तत्र ये दृश्यन्ते तेषां लक्षण वक्तुकाम सन्नाद्यो वरुणब्रह्मकेते र्लक्षणमाह । उदग्गायते महान् स्निग्धमूर्त्ति रपरोदयी ब्रह्मकेतुः । स च करोति मरकं दुर्भिक्षम् घ्युत्तमं कुरुते ॥ अस्थिकेतो, पद्माख्यस्य लं० । तत्रच

केतुः

यो ऽस्थिकेतुः सतु रूक्षः क्षुद्भयावह प्रोक्त । स्निग्ध स्तादृक् प्राच्यां शस्त्राख्यो डमरमरकाय ॥ कपालकेतो र्लं० । दृश्यो ऽमावास्यायां कपालकेतु स धूम्ररश्मिशिखः । प्राङ्नभसो ऽर्द्धविचारी क्षुन्मरकावृष्टि रोगकरः ॥ रौद्रकेतो र्लं० । प्राग् वैश्वानरमार्गे शूलाग्र श्या वरुणताम्रार्चिः । नभस स्त्रिभागगामी रौद्र इति कपालतुल्यफल ॥ चलकेतो र्लं० । अपरस्यां चलकेतुः शिखया याम्याग्रयाङ्गुलोच्छ्रितया । गच्छेद्द्वयाय थोदक् तथातथा दैर्घ्यं मायाति ॥ सप्त मुनीन् संस्पृश्य ध्रुवमभिजित मेव च प्रतिनिवृत्त । नभसो ऽर्द्धं भाग मित्वा याम्येनास्तं समुपयाति ॥ हन्यात्प्रयागकूलाद् यावद्वन्ती च पुष्करारण्यम् । उदगपि च देविका अपि भूयिष्ठ मध्यदेशाख्यम् ॥ अन्यानपि च स देशान् क्वचित् क्वचिद्धन्ति रोगदुर्भिक्षे । दश मासान् फलपाको ऽस्यकैश्चिदृष्टो दश प्रोक्त ॥ श्वेतकेतो र्लं० १. प्रा गर्द्धरात्रदृश्यो याम्याग्र, श्वेतकेतु रन्यश्च । कइति युगाकृति रपरे युगपत्तौ सप्तदिनदृश्यौ ॥ स्निग्धौ सुभिक्षशिवदौ तथाधिकं दृश्यते कूनामाय ।

षिणं हन्यात् । वङ्गुलासु कलिङ्ग म रोहिण्यां शूरसेनपतिम् ॥ औ शीनर मपि सौम्ये जलजाजीवाधि पतथार्द्रासु । आदित्ये ऽश्मकनाथ पुष्ये मगधाधिपं हन्ति ॥ असिकेशं भौजङ्गे पित्र्ये ऽङ्गं पाण्ड्यनाथ मपि भाग्ये । औज्जयनिक मार्य्यम्णे सा वित्रे दण्डकाधिपतिम् ॥ चित्रासु कुरुक्षेत्राधिपस्य मरणं समादिशे त्तज्ज्ञ ॥ काश्मीरककाम्बोजौ नृ पती प्राभञ्जने न स्त ॥ इक्ष्वाकुर लकनाथ श्च हन्यते यदि भवे द्वि शाखासु । मैत्रे पुण्ड्राधिपति र्ज्येष्ठा सु च सार्वभौम वध ॥ मूले न्ध्रमद्र कपती जल दैवे काशिपो मरणमे ति । यौधेयकार्जुनायनशिविचै द्यान् वैश्वदेवे च ॥ हन्यात् कैकय नाथं पाञ्चनदं सिंहलाधिपं वाङ्गम् । नैमिषनृपं किरातं श्रवणादिषु षट्स्विमान् क्रमश ॥ केतो र्वि शेष माह । उल्काभिताडितशिख' शिखी शिव शिवतरो ऽभिहष्टो य । अशुभ स एव चोलातङ्गणासित हूणचीनानाम् ॥ विशेषान्तरमाह । नप्रायत, शिखिशिखाभिहतो य तोवा स्पर्शं च यत् स्पृशति तत्कथि तांश्च देशान् । दिव्यप्रभावनिहता



न् स यथागतस्मान् भुङ्क्ते गतो न रपति' परभोगिभोगान् ॥ इतिवा राहीसंहितायां केतुचारनामाध्या य एकादश ॥ चाय्यते ऽनेनवा । चायूपूजादौ । चाय. किरितितुः ॥

केतुगृहम् । न । मीनराशौ ॥

केतुग्रहवल्लभम् । न । वैदूर्यमणौ ॥

केतुभ. । पु । मेघे ॥

केतुमालम् । न । जम्बुद्वीपस्य नवख ण्डान्तर्गते खण्डविशेषे ॥ सुकेतनं केतुमाल प्रतीच्यां गन्धमादनात् ॥

मेतुरत्नम् । न । वैदूर्यमणौ ॥

केद्र. । पु । हत्रविशेषे ॥ त्रि । टेरके ॥

केदार । पु । अद्रिविशेषे ॥ वदर्यां' स मीपेक्षेत्रविशेषे ॥ यथा । केदारा ख्ये महाक्षेत्रेदेवी सामार्गदायनी तिदेवीर्गीता ॥ शिवे ॥ भूमिप्रभे दे ॥ आलवाले ॥ खेत इति प्रसिद्धे क्षेत्रे । क्यार इति भाषा ॥ केदा र वारि मधुरं विपाकें गुरु दोषल म् । तदेव बहुमुक्तन्तु विशेषाद्दोषदं भवेत् ॥ के जले शिरसिवा दारोऽ स्य । हलदन्तादित्यलुक ॥ केन ज लेन दीर्यते वा । दृविदारणे । क र्मणि घञ् । केदाराद्यच्चेतिनिर्देशा देत्वम् ॥

केदारकटुका । स्त्री । कटुकायाम् ॥

श्री मालिङ्ग्य सुन्दरीम् । कारये त् स्थापन कामी वन्ध. केयूरसंज्ञक इति ॥ अपिच । स्त्रीणां लक्ष्मा स्मराविष्टो गाढमालिङ्ग्य सुन्दरीम्। कामयेद्विपुलकामी वन्ध. केयूरसंज्ञक इति ॥

केरल । पु । मलेवार इति प्रसिद्धे देशवि० ॥ यथा । उग्रा केरलपर्याया इतिहेमचन्द्र. ॥ सुब्रह्मण्यं समारभ्य यावद्देवो जनार्दन. । तावत् केरलदेशः स्यात् तन्मध्ये सिद्धकेरल ॥ रामेश्वरात् चकूटेशा हुसकेरल नामक । अनन्तशेष आरभ्य यावत् स्या द्व्यम्बरे ॥ तावत् सर्वमना मानु केरल परिकीर्त्तितइति॥ वेदयागानधिकारिण्यश्मश्रुधारिम्लेच्छवि० । पुरैते क्षत्रिया आसन् सगरेणैषां धर्मानाश्रित वेशान्यत्वंच कृतम् । यथा । नि. स्वाध्यायवषट्कारा. कृता स्तेन महात्मना । शका यवन काम्बोजा पारदा पह्नवा स्तथा ॥ कोलिसर्पा माहिषका दर्वा श्चोला सकेरला । सर्वे ते क्षत्रिया स्तात-धर्मे स्तेषां निराकृत. ॥ इतिहरिवंश ॥ सम्प्रदाय विशेषे ॥ प्रश्नग्रन्थविशेषे ॥

केरली । स्त्री । ज्योतिर्ग्रन्थविशेषे ॥

ह्रोरायाम् ॥

केलक । पु । खड्गधारादिनर्त्तके । प्लवके ॥

केलासः । पु । स्फटिके ॥

केलि. । पु । स्त्री । परीहासे । द्रवे । क्रीडायाम् ॥ केलनम् । किलक्रीडायाम् । केलृचलनेवा । इन् ॥ स्त्री । पृथिव्याम् ॥

केलिक: । पु । अशोकवृक्षे ॥

केलिकला । स्त्री। सरस्वतीवीणायाम्॥

केलिकाल. । पु । क्रीडासमये ॥

केलिकिल. । पु । कूष्माण्डकसंज्ञकेशिवस्यानुचरे ॥ नाट्ये नायकवयस्ये । विदूषके । वैहासिके ॥

केलिकिला । स्त्री । कामदेवपत्न्याम् । रतौ ॥

केलिकिलावती । स्त्री । स्मरभार्यायाम् ॥

केलिकीर्ण । पु । उष्ट्रे ॥

केलिकुञ्चिका । स्त्री । पत्नीभगिन्याम् । श्यालिकायाम् । साली इति भाषा ॥

केलिकोष । पु । नटे ॥

केलिनागर । पु । बहुभोगिनि । भोगवति ॥

केलिमुख । पु । परीहासे ॥

केलिवृक्षः । पु । केलिकदम्ब इतिगौ।

उभाषाप्रसिद्धे कदम्बविशेषे ॥

केलिशुषिः । स्त्री । धरित्र्याम् ॥

केलिसचिव । पु । क्रीडाविषयकम न्त्रिणि । नर्मदे । नर्मसचिवे ॥

केवर्त्त । पुं । कैवर्त्तजातौ ॥ इतिद्विरू० ॥

केवल । पु । कुहने ॥ न । ज्ञानभेदे ॥ शुद्धे ॥ निर्णीते ॥ त्रि । अद्वितीये । एकस्मिन् । असहाये ॥ कृत्स्ने ॥ केवते । केवसेवने । वृषा०कल ॥ के शिरसि वलयति वा । वलप्राणने । पचाद्यच् ॥

केवलज्ञानी । पुं । भूतार्हद्विशेषे ॥

केवलद्रव्यम् । न । मरिचे ॥

केवलव्यतिरेकि । न । व्यतिरेकमात्र व्याप्तिकानुमाने ॥ यथा । पृथिवी इतरेभ्योभिद्यते गन्धवत्त्वात् यदि तरेभ्यो नभिद्यते न तद् गन्धवत् य था जलम् नचेयं तथा तस्मात् त थेति । अत्र यद्गन्धवत् तदितरभि न्न मित्यन्वयदृष्टान्तो नास्ति पृथि वीमात्रस्य पक्षत्वात् ॥

केवला । स्त्री । एकस्याम् ॥ कुत्सायाम् ॥ केवलात् टाप् ॥

केवलान्वयि । न । अन्वयमात्रव्याप्तिका नुमाने ॥ यथा । घटः इभिधेयः प्र मेयत्वात् पटवत् इत्यत्र प्रमेयत्वा भिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति सर्वस्याप्यभिधेयत्वात् प्रमेयत्वाच्च ॥

केवली । पु । जैनविशेषे ॥

केवली । स्त्री । ज्ञानविशेषे ॥ ग्रन्थवि शेषे ॥ केवलमामकेति संज्ञाछन्द सोर्ङीप् ॥

केविका । स्त्री । केवेर इतिकोकणभा षाप्रसिद्धे पुष्पविशेषे । भृङ्गारौ । म हागन्धायाम् ॥

केश. । पु । वरुणे ॥ ह्रीबेरे ॥ दैत्यवि० ॥ विष्णौ ॥ चिकुरे । कुन्तले । वा से ॥ मञ्जजातोपधातुविशेषोयम् ॥ केशसमूहार्थवाचका शब्दाः यथा । वाला स्युः स्तत्परा पाशोरचना भार उच्चयः । हस्त पक्ष कलापस्तु केशभूयस्त्ववाचका इतिहेमचन्द्र. ॥ क्लिश्यते । क्लिश बन्धे क्लिशु उपता पेवा । क्लिश्नातिवा । क्लिशूविबाधा याम् । क्लिशेरन्लोलोपश्च ॥ के शेते । शीङ्० । अन्येभ्योपीतिड । इगद्न्तादित्यलुक्वा ॥ कस्यशिर स. ईशोवा ॥

केशकः । पु । केशेषु प्रसिते ॥ स्वाङ्गेभ्यः प्रसिते इतिकन् ॥

केशकलापः । पु । केशपाशे । केशस मूहे ॥

केशकारः । पुं । वारिया कुशियार इति भाषा प्रसिद्धे इक्षुप्रभेदे ॥ केशकारे ।

गुरु शीतो रक्तपित्तकफापहः॥

केशकीट । पु । यूकायाम्॥

केशगर्भ । पु । } कवर्य्याम्॥
केशगर्भक । पु । }

केशघ्नम् । न । इन्द्रलुप्तके॥

केशट । पु । हरौ । विष्णौ॥ अजे । छागे॥ उत्कटे॥ भ्रातरि॥ शोष याख्ये मदनस्य वाणे॥ शोणकवृक्षे॥

केशधृत् । पु । भूतकेशे॥

केशनाम । न । वाले । ह्रीवेरे । वाला इतिभाषा॥

केशपक्ष । पु । कचौघे । केशकलापे॥

केशपर्णी । स्त्री । अपामार्गे॥

केशपाश. । पु । केशपक्षे॥ पाशः पक्ष श्च हस्तश्च कलापार्थाः कचात् परे॥

केशपाशी । स्त्री । शिखायाम् । शिरोमध्यस्थचूडायाम्॥ केशानांपाश । गौरादि.॥

केशभू । पु । शिरसि॥

केशमथनी । स्त्री । शमीवृक्षे॥

केशमार्जकम् । न । कङ्कतिकायाम् । कङ्गा कंघी इतिभाषा॥

केशमार्जनम् । न । कङ्कतिकायाम्॥

केशमुष्टि. । पु । विषमुष्टिवृक्षे॥ महानिम्बे॥

केशर. । पु । सिंहस्कन्धजटायाम्॥ तुरङ्गस्कन्धकेशेषु॥ पुन्नागवृक्षे॥ व कुलवृक्षे॥ नागकेशरवृक्षे॥ सुराणम्बे॥ न । हिङ्गुनि॥ पु । न । किञ्जल्के॥ के जले शीर्यते । शृ हिंसायाम् । ऋदोरप् । हलदन्तादिति अलुक्॥

केशरञ्जन । पु । भृङ्गराजवृक्षे॥

केशराज । पु । नागमारे । भृङ्गराजे । भंगरा इतिभाषा॥

केशराम्ल । पु । मातुलुङ्गवृक्षे॥

केशरी । पु । सिंहे॥ तुरगे॥ केशराः स्कन्धवालाः सन्त्यस्य । इनि॥ वीजपूरकवृक्षे॥ पुन्नागे॥ नागकेसरे॥

केशवर्द्धा । स्त्री । भद्रदन्तिकावृक्षे॥

केशरूहा । स्त्री । वन्दाकवृक्षे॥

केशवः । पु । पुन्नागवृक्षे॥ वासुदेवे । विष्णौ॥ केशौ ब्रह्मरुद्रौ सर्वेश्वरावपि अनुकम्प्यतया वात्येव गच्छतीति व्युत्पत्तिमाश्रित्य निरतिशयैश्वर्यप्रतिपादनात् सर्वेश्वरे॥ कश्च ईशश्च केशौ पुमर्थौ तौ वात्यास्य । केशाद्व इति व । केशौवातिवा । वा गतौ । आतइतिक. । अस्मात् पितामहो ब्रह्मपिता शङ्कराधीश्वर इति प्रोक्ते.॥ यद्वा । केशिनं हिंसाविशेषं वाति गच्छति मारयाशे शाते गमनार्थादन्येभ्योपिदृश्यते

इति उ० । पृषोदरादित्वात् हकारस्याकारः । यस्मात् त्वयैष दुष्टात्मा हतः केशी जनार्द्दन । तस्मात् केशवनाम्ना त्वं लोके ख्यातो भविष्यसीति हरिवंशोक्तेः ॥ यद्वा । केशः सम्विताः । सूर्य्यादिसङ्क्रान्ता अंशवस्तद्वत्तया केशवः । अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः । सर्व्वज्ञाः केशवं तस्मात् प्राहुर्मां द्विजसत्तमाः ॥ इति भारतम् ॥ ब्रह्मविष्णुशिवाख्याः शक्तयः केशसंज्ञिताः तद्वत्तया वा । तव केशिन इति श्रुतेः ॥ कश्च अश्च ईशश्च केशाः ब्रह्मविष्णुरुद्राः ते अस्य वश्यतया सन्तीति केशवः । केशशब्दात् मत्वर्थीय केशाद्वोऽन्यतरस्यामिति वप्रत्ययः ॥ यद्वा । केशान् ब्रह्मविष्णुरुद्रान् वष्टि इच्छति सर्गादिकार्य्यायेति । वशकान्तौ । अन्येभ्योपि दृश्यन्त इति डप्रत्ययः ॥ यद्वा । केशान् ब्रह्मविष्णुरुद्रान् वाति गच्छति नियामकत्वेनेति केशवः । वा गतिगन्धनयोः । आतोऽनुपसर्गे इति कः ॥ को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गसम्भूतौ तस्मात् केशवनामवान् ॥ इति ह० वं ॥ त्रि । प्रशस्तकेशवति । प्रशस्ताः केशाः सन्त्यस्य । प्रशंसायाम् केशाद्वोऽन्यतरस्यामिति वः ॥

केशवान् । त्रि । केशिके ॥ केशाः सन्त्यस्य । मतुप् ॥

केशवर्द्धिनी । स्त्री । सहदेवीलतायाम् ॥

केशवायुध । पु । आम्रवृक्षे ॥ न । विष्णोरस्त्रे ॥

केशवालय । पु । अश्वत्थवृक्षे ॥ विष्णोर्मन्दिरे ॥ केशवस्य आलयः ॥

केशवावास । पु । अश्वत्थद्रुमे ॥

केशवेश । पु । कबर्य्याम् ॥ केशानां वेशः मार्ज्जनाबन्धनादिना कृतशोभाविशेषः ॥

केशहन्तृफला । स्त्री । शमीवृक्षे ॥

केशहन्त्री । स्त्री । सक्तुफलायाम् । शमीवृक्षे ॥

केशहस्त । पु । केशसमूहे ॥

केशाकेशि । अ । केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धं ॥ तत्र तेनेदमिति सरूपे इति कर्म्मव्यतिहारे बहुव्रीहिः । अन्येषामपि दृश्यते इति पूर्व्वपदान्तस्य दीर्घः । इच् कर्म्मव्यतिहारे इति इच् समासान्तः । तिष्ठद्गुप्रभृतिषु इच्प्रत्ययस्य पाठादव्ययीभावत्वम् अव्ययत्वञ्च ॥

केशान्तः । पु । गृह्योक्तसंस्कारविशेषे ॥ ब्राह्मणादीनां षोडशादिवर्षेषु कर्त्तव्ये गोदानाख्यसंस्कारविशेषे ॥ कृताकृ

मनु । केशान्त षोडशे वर्षे ब्राह्म णस्य विधीयते । राजन्यबन्धोर्द्वावि शे वैश्यस्यद्व्यधिके ततः इति ॥

केशारुहा । स्त्री । सहदेव्याम् ॥

केशार्हा । स्त्री । महानील्याम् ॥

केशिक । त्रि । प्रशस्तकेशविशिष्टे । के शिनि ॥ प्रशस्ता केशा सन्त्यस्य । केशाद्वोन्यतरस्यामितिपक्षे ठन् ।

केशिका । स्त्री । शतावर्याम् ॥

केशी । पु । विष्णौ ॥ दैत्यविशेषे ॥ सिंहे ॥ त्रि । केशिके ॥ ठनोऽभाव पक्षे इनि ॥

केशिनिसूदन । पु । श्रीकृष्णे ॥

केशिनी । स्त्री । सांख्याकृती इति ख्या तायाचोरपुष्प्याम् ॥ रावणस्यमात रि ॥ जटामांस्याम् ॥ प्रशस्तकेशव त्याम् ॥ इन्नन्तात् ङीप् ॥

केशिसूदन । पु । श्रीकृष्णे ॥ के शिनामानमसुरं सूदितवान् सूद यति वा सूदयत्यो । नं॰ ल्यु ॥

केशिहा । पु । केशवे । श्रीकृष्णे ॥ के शिनामानमसुरं हन्ति हतवान्वा । हन्॰ क्विप् ॥

केशी । स्त्री । नील्याम् ॥ भूतकेश्याम् ॥ अजलोमा वृक्षे ॥

केशोच्चय । पु । केशपाशे ॥

केश्यम् । न । कृष्णागुरुणि ॥ भृङ्गराजे ॥

केसर । पु । सिंहस्कन्धजटायाम् । सिंहच्छटायाम् ॥ तुरगस्कन्धकेशेषु ॥ पुन्नागतरौ ॥ वकुलवृक्षे ॥ नाग केसरद्रुमे ॥ न । हिङ्गुनि ॥ नागके सरपुष्पे ॥ कासीसे ॥ स्वर्णे ॥ पुं । न । किञ्जल्के ॥ रभसस्तु हिङ्गुनि द्व योरित्याह ॥ केजले सरति । सृग तौ । पचाद्यच् । हलदन्तादित्यलु क । प्रशस्ता केसरा अस्य । अर्श आद्यच् ॥

केसरवरम् । न । कुङ्कुमे ॥

केसराम्ल । पु । वीजपूरे ॥

केसरिका । स्त्री । सहदेवीलतायाम् ॥

केसरी । पु । तुरगे ॥ सिंहे ॥ पुन्नागे ॥ नागकेसरे ॥ रक्तशिग्रौ ॥ वीज पूरे ॥ वानराणां यूथपते विशेषे । हनूमत पितरि ॥ केसरा स्कन्ध वाला सन्त्यस्य । अतइनिः ॥

केसरिसुत । पुं । हनूमति ॥ इतिहे मचन्द्र ॥

कैकय । पु । देशविशेषे । ब्रह्मपुत्रा त्कामरूपा न्मध्यभागे तु कैकयः ॥

कैकेय । पु । अश्वपतिन्टपे ॥ केकयस्या ऽपत्यम् । जनपदशब्दात् क्षत्रियाद ञ् । केकयमित्रयुप्रलयानां यादे रिय इति इयादेश । वृद्धिः ॥

कैकेयी । स्त्री । भरतमातरि ॥ केक

यशापत्यं स्त्री। जनपदशब्दादित्य पत्यप्रत्यय'। अतश्चेति तद्राजस्या कारस्य लुकतुन। नप्राच्यभर्गादि यौधेयादिभ्य इति प्रतिषेधात्। पूर्व वत्‌था देरियादेश.। अजन्तत्वात् ङीप्॥

कैङ्कर्य्यम्। न। किङ्करत्वे। दासत्वे॥

कैटज। पु। कुटजवृक्षे॥

कैटभः। पु। दैत्यविशेषे॥

कैटभजित्। पु। विष्णौ॥ कैटभ असु रविशेष मजैषीत्। जिजये। सत् सूद्विषद्रुहदुहयुजविदभिदच्छिद जिनीराजामुपसर्गेपिक्विप् इति क्विप्॥

कैटभहा। पु। विष्णौ॥

कैटभा। स्त्री। दुर्गायाम्॥

कैटभारिः। पुं। विष्णौ॥

कैटभी। स्त्री। कात्यायन्याम्॥

कैटभेश्वरी। स्त्री। दुर्गायाम्॥ तथा चदेवीपुराणम्। कैटभस्तु च्यगा स्वागृहीता तत् पुरोयथा। तेन सा गीयते देवी पुराणे कैटभेश्व रीति॥

कैटर्य्यः। पु। कट्फले। पूतिकरञ्जे। कायफल इतिभाषा॥ मदनवृक्षे॥ कैटनम्। किटवासे। घञ्। कैटं राति अतितिक्तत्वात्। रा०। आ तद्रतिक'। चतु० घ्यञ्॥ निम्बे॥ महानिम्बे॥

कैडर्य्य। पु। कट्फले॥ कटभीवृक्षे॥

कैतकम्। न। केतकीपुष्पे॥ केवडा भिधेगन्धजले॥ त्रि। केतकी सम्ब न्धिनि॥

कैतवम्। न। कपटे॥ द्यूते॥ वैदूर्य मणौ॥ धत्तूरफलपुष्पादौ॥ स्वल तायाम्॥ कितवस्यकर्म्म। यु० अण॥

कैदार। पुं। शालिधान्ये॥ न। क्षे त्रसमूहे॥ केदारजले॥ केदारं क्षे त्र मुद्दिष्ट कैदारं तज्जल स्मृतम्। कैदारं वार्य्यभिष्यन्दि मधुरं गुरुदो षकृत्॥ केदारस्येदम्। अण्॥

कैदारकम्। न। केदारसमूहे। क्षेत्रे॥ केदाराणांसमूहः। केदाराच्चेति वुञ्॥

कैदारिकम्। न। कैदारके॥ केदारा णांसमूह। ठञ् कवचिनश्च। चा त्केदारादपि॥

कैदार्य्यम्। न। क्षेत्रे। कैदारिके॥ के दाराणां समूहः। केदाराच्चेति यञ्॥

कैरवः। पु। कितवे॥ रिपौ॥ न। कु मुदे। शुक्लोत्पले॥ के जले रौति। रुशब्दे। पचाद्यच्। तत्पुरुषेकृ तीत्यलुक्। कैरवस्य हंसस्येष्टंप्रिय

म् । तस्येदमित्यण् ॥

कैरविणी । स्त्री । कुमुदिन्याम् । कुमुदयुक्तपुष्करिण्यादौ ॥ कैरवाणिसन्त्यस्याम् । पु०इनिः ॥

कैरविणीखण्डम् । न । कैरविणीनांसमूहे ॥ कमलादिभ्यःखण्डः ॥

कैरविणीफलम् । न । बेरा इतिप्रसिद्धे कुमुदबीजे ॥

कैरवी । पुं । चन्द्रे ॥

कैरवी । स्त्री । चन्द्रिकायाम् ॥ मेथिकायाम् ॥

कैराटः । पुं ।
कैराटकः । पु । } स्थावरविषविशेषे ॥

कैरातः । पु । बलवत्पुरुषे । दोर्ग्रहे ॥ न । शम्बरचन्दने ॥ पु । न । भूनिम्बे ॥

कैरातम् । न । विडङ्गे ॥

कैराती । स्त्री । विडङ्गायाम् ॥

कैलासः । पु । शिवकुबेरयो स्थाने । कुबेराचले । गणपर्वते ॥ केजले ला सो लसन मस्य केलास स्फटिक. । इलदन्तादित्वालुक् । तस्यायम् । कैलासः । अण् ॥ यद्वा । केलीनां समूह. कैलम् । तस्यसमूह इत्यण् । तेनाश्यतेऽत्र । आसउपवेशने । ह लर्थोतिघञ् ॥ आशाचक्रादूर्द्ध ॥ कैलासाख्यतदूर्द्धेतु बोधिनीमुलदूर्द्धत इत्युक्तेः ॥

कैलासनिकेतनः । पुं । शिवे । पार्वतीपतौ ॥

कैलासौका । पुं । कुबेरे ॥ शिवे ॥

कैवर्त्तः । पु । धीँवर इतिप्रसिद्धे वेश्यागर्भे क्षत्रियैरसजाते । धीवरे । दासे । जालिके ॥ के जले वर्त्तन्ते । इत्य० । पचाद्यच् । केवर्त्तानां मत्स्यानामयं घातक. । तस्येदमित्यण् ॥

कैवर्त्तमुस्तम् । न । } कैवर्त्तीमुस्तके
कैवर्त्तमुस्तकम् । न । } । कुटन्नटे ॥

कैवर्त्तिका । स्त्री । मालवप्रसिद्धेलताविशेषे । वल्लरञ्जायाम् । सुरञ्जायाम् । सुभगायाम् ॥

कैवर्त्तिमुस्तकम् । न । कैवर्त्तीमुस्तके ॥

कैवर्त्ती । स्त्री । परिपेलवे ॥ कैवर्त्तभार्यायाम् ॥

कैवर्त्तीमुस्तकम् । न । कुटन्नटे । वानेये । परिपेलवे । मोथा इतिभाषा ॥ इदन्तु वितुन्नकनाम्नो दृचस्य मुस्ताकृतिस्त्वगिति भावप्रकाश. ॥ कैवर्त्तानां जाति कैवर्त्ती । कैवर्त्त्या मुस्तकम् ॥

कैवल्यम् । न । निर्वाणे । अत्यन्तदु:खत्रयप्रशमनलक्षणायाम् मुक्तौ ॥ आत्यन्तिकोहि दु.खत्रयाभाव कैवल्यम् । तच्च पुरुषस्य स्वाभाविक

देवाऽथैगुण्यात् सुखदु खमोहरूपि तस्मात् सिद्धम् ॥ केवलस्वभाव. । ब्राह्मणादित्वात् ष्यञ् ॥

कैशिकम् । न । कैश्ये । केशसमूहे ॥ केशानांसमूह । अचित्तहस्तिधेनो ष्ठक् ॥ पु । शृङ्गाररसे ॥

कैशिकी । स्त्री । नाटकवृत्तिविशेषे ॥ यथा । भारती सात्वती कैशिक्यारभट्यो च वृत्तयइति ॥

कैशोरम् । न । किशोरावस्थायाम् । दशवर्षान्तरं मापञ्चदशाब्दपर्यन्ता वस्थायाम् ॥ कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोर माप ञ्चदशादित्युक्तं ॥ किशोरस्यकर्म भावोवा । प्राणभृज्जातिवयोवच नोद्गात्रादिभ्योञ् ॥

कैश्यम् । न । कैशिके । केशवृन्दे ॥ केशानां समूह. । केशाश्वाभ्यांयञ्छा वन्यतरस्याम् ॥

कोक । पु । चक्रवाके ॥ वृके ॥ खेष्यम् ॥ खर्जूरीवृक्षे ॥ दर्दुरे ॥ वि ष्णौ ॥ कोकते । कुकआदाने । प चाद्यच् ॥

कोकड: । पु । विलेशये मृगविशेषे । चमरपुच्छे । लोमशे । धूम्रवर्णे ॥ तन्मांसंश्वासानिलकासहरम् पित्त दाहकरञ्चेतिराजनिर्घण्टु. ॥

कोकदेव. । पु । कपोते ॥

कोकनदम् । न । रक्तकुमुदे ॥ रक्तप द्मे ॥ कोकान् चक्रान् नदति । वा द्यव्यक्तशब्दे । अन्तर्भावितण्यर्थ: । मूलविभुजादित्वात् क ॥

कोकनदच्छवि: । पु । शोणे । ईषद्रक्ते । रक्तोत्पलाभे ॥ त्रि । तद्वति ॥ को कनदरक्तोत्पलम् तदिव छवि र्यस्य ॥

कोकबन्धु । पु । सूर्ये ॥ कोकस्यबन्धुरिव ॥

कोकाश' । पु । समष्टिले क्षुपविशेषे ॥

कोकाह. । पुं । श्वेताश्वे । कर्के ॥ का काह इतिकश्चित्पाठ. ॥

कोकिल' । पु । पिके । वनप्रिये । ता म्राक्षे । मधुगायने ॥ अङ्गारे ॥ इति त्रिकाण्डशेष: । कोकते । कुकआ दाने । सलिकल्यनिमहिभडिभण्डि शण्डिपिण्डितुण्डिकुकिभूभ्यइलच् ॥

कोकिला । स्त्री । पिकभार्यायाम् ॥ अ जादित्वाट्टाप् ॥

कोकिलाक्ष. । पु । तालमखाना इति प्रसिद्धे वस्तुनि । इक्षुगन्धायाम् ॥ कोकिलोऽक्षियस्य । कोकिलशब्द: कोकिलाक्षसदृशे वाच्यलिक्ष: । अ क्ष्णोदर्शनादित्यच् ॥

कोकिलावास. । पुं । आम्रवृक्षे ॥

कोकिलेक्षु: । पु । कृष्णवर्णेक्षौ ॥

कोकिलेष्टा । स्त्री । महाजम्ब्वाम् ॥

कोकिलोत्सवः । पु । आम्रवृक्षे ॥

कोङ्क । पु । देशविशेषे ॥

कोङ्कण । पु । कोकन इतिप्रसिद्धे देशे ॥ अथाभ्यङ्गं समारभ्य कोटिदेशस्य मध्यगे। समुद्रप्रान्तदेशोपि कोङ्कण परिकीर्त्तितः ॥ न । शस्त्रभेदे ॥

कोङ्कणासुत । पु । परशुरामे ॥

कोच । पु । सङ्करजातिविशेषे ॥ स तु मालच्छेदिगर्भे तीवरस्यौरसजातः । इतिब्रह्मवैवर्त्तपुराणम् ॥

कोजागर । पु । आश्विनपौर्णमास्याम् । द्यूतपूर्णिमायाम् । कौमुद्याम् ॥

कोट । पु । दुर्गे । कुटे । गढ इति भाषा ॥ कुटनम् । कुट० । भावे घञ् ॥

कोटक । पु । घरामि राज इति भाषा प्रसिद्धे गृहकारके ॥ सतु कुम्भकार्यां गर्भे अट्टालिकाकारस्यौरसजात ॥ इति ब्रह्मवैवर्त्तपुराणम् ॥

कोटर । पुं । न । वृक्षस्थितगह्वरे । निष्कुहे ॥ कोटराति । रा० । आत इतिकः ॥

कोटवी । स्त्री । चण्डिकायाम् । दुर्गायाम् ॥ नग्निकाम् । विवसनायांस्त्रियाम् ॥ कोटं वाति । वा० । आतोनुपेतिकः ॥ गौ० ङीष् ॥

कोटिः । स्त्री । धनुषोग्रभागे ॥ अश्रौ । अस्त्रादेरग्रभागे ॥ परीक्षकपरिकल्पितनिर्णयनिरूपणीये । प्रावादुकशास्त्रनिर्णयास्ते ॥ उत्कर्षे । प्रकर्षे ॥ दशप्रयुते । शतलक्षसङ्ख्यायाम् । १०००००००॥ पिडङ्गशाक इति गौड प्रसिद्ध शाके । पृक्कायाम् ॥ कूटयते ऽनया वा । कूट अप्रदाने । चु० । अच्. ॥ कोटयति कोटयते वा । कुटकौटिल्ये । इ. ॥ कुट्यते वा । कृञादिभ्यइतीञ् । सर्वधातुभ्यइतीन् वा । वा० गुणः ॥

कोटिक । पु । शक्रगोपकीटे ॥

कोटिजित् । पु । कालिदासे । क्षेपाकद्रे ॥

कोटिपात्र । पुं । केनिपातके । अरित्रे इति हेमचन्द्र. ॥

कोटिर । पु । नकुले ॥ शक्रे । इन्द्रे ॥ इन्द्रगोपकीटे ॥

कोटिवर्षम् । न । बाणासुरपुरे ॥

कोटिवर्षा । स्त्री । पिडिङ्गशाक इति गौडप्रसिद्ध पृक्कायाम् । आसारक इतिभाषा ॥ कोटिभिरग्रैर्वर्षति । मधु । वृषु सेचने । अच् ॥

कोटिशः । पु । लोष्टभेदने । हैंगा इति भाषा ॥ कोटिना अग्रेण श्यति । शो तनूकरणे । सुपीतिकः ॥ कोटिर

ख्यातीति वा । लोमादित्वात् श. ॥

कोटिशठ । अ । कोटाकोटौ ॥

कोटीर । पु । किरीटे ॥ जटायाम् ॥

कोटीवर्षम् । न । वाणासुरपुरे ॥

कोटीश. । पु । कोटिशे ॥

कोट्टः । पु । पुरस्य दुर्गे । राजधान्याम् ॥ न । दुर्गे । किला गढ इतिभाषा ॥ कुट्टच्छेदनभर्त्सनयो' अच् ॥

कोट्टवी । स्त्री । मुक्तकेश्याम् नग्नायां स्त्रियि ॥ बाणवासामुक्तकेशी कोट्टवीनग्निकाचण्डेतिजटाधर. ॥ दुर्गायाम् ॥ बाणासुरमातरि ॥ कुट्टनम् । कुट्ट° । घञ् । वा० गुणाभाव. । कोट्टंवाति । वा०। आत इति कः । गौरादित्वात् ङीष् ॥

कोट्टवीपुरम् । न । वाणासुरपुरे॥ कोट्ट्या'पुरम् ॥

कोट्टारः । पु । नागरे ॥ कूपे ॥ पुष्करिण्या पाटके ॥ कुट्यते । कुट्टच्छेदने प्रतापनेवा । वा° आरन् गुणश्च ॥

कोठ. । पुं । चक्राकारे कुष्ठरोगे । मण्डलके । त्वग्दोषे ॥ अस्यलक्षणम् । असम्यग्वमनोदीर्णपित्तश्लेष्मविनिग्रहैः । मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥ उत्कोठःसानुबन्धश्च कोठ इत्यभिधीयते इति ॥ अन्यच्च । वरटीदष्टसंकाशः कण्डूमान् लो



हितोऽस्नकफपित्तात् । क्षणिकोत्पादविनाश कोठ इति निगद्यते तज्ज्ञैरिति ॥ कुष्ठति । कुठिप्रतिघाते । अच् । आगमशास्त्रस्यानित्यत्वान्नुम् ॥

कोठर' । पु । अङ्कोठवृक्षे ॥

कोठरपुष्पी । स्त्री । वृद्धदारके ॥

कोणः । पु । वाद्यभेदे ॥ वीणादीनां वादने । येन धनुषाकृतिना वीणादिर्वाद्यते तस्मिन् । नेपालभाषया गज्ञा इति ख्याते वाद्यवादनकाष्ठे। वाजानेकीलकडी इति भाषा ॥ गृहादीनामेकदेशे । कोना इतिभाषा ॥ अस्रौ । अस्त्रादीनामग्रभागे । पाल्याम् ॥ लगुडे ॥ मङ्गलग्रहे ।शनौ ॥ द्वयोर्दिशोर्मध्यभागे । विदिशि ॥ वाद्यावयमपञ्चमयो ॥ शनौ ॥ कुण्यते ऽनेन । कुणशब्दोपकरणयोः । हलश्चेति घञ् । कुणत्यनेनवा । कर्त्यर्थेप् ॥

कोणकुणः । पुं । उत्कुणे । उद्दंशे । उडुस खटमल मङ्कुण इत्यादिभाषाप्रसिद्धे मत्कुणे

कोथ. । पु । कथो इति गौड भाषा प्रसिद्धे नेत्ररोग विशेषे ॥ त्रि । मथिते ॥ शटिते ॥ यथा । मांसकोथः मांसगलनमिति ॥

कोदण्डः । पुं । भुवि । भ्रूलतायाम् ॥ न । चापे । धनुषि ॥ पु । न । नीवृद्विशेषे ॥ कोटति । कुटकौटिल्ये । बा० अण्डन् । पृषोदरादिः ॥ कौतेर्भिच् । कोर्दण्डोऽस्यवा ॥

कोद्रव. । पु । धान्यभेदे । कोरदूषे । कोदो इति भाषा ॥ कोद्रवो वातलो । ग्राही हिम पित्तकफापह ॥ कौतिकवतेवा । कुशब्दे कुङ्शब्दे वा । विच् । द्रवति । द्रुगतौ । अच् । कोश्चाऽसौ द्रवश्च ॥ केन वायुना द्रवतीति वा । पृ० ॥

कोप. । पु । क्रोधे ॥ अस्वनिवृत्तेरपाय स्तत शास्त्रे । यथा । अपकारिणि चेत् कोप कोप कोपेकथ नहि । धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनेति ॥ अपिच । रिपौबन्धौ स्वदेहे च समैकात्म्य प्रपश्यत । विवेकिन कुतकोप स्वदेहावयवेष्विवेति ॥ कोपनम् । कुपक्रोधे । घञ् ॥

कोपन. । चि । कोपविशिष्टे । क्रोधिनि ॥ कुप्यति तच्छील । क्रुधमण्डार्थेभ्यश्चेतियुच् ॥

कोपनक. । पु । चोरनामगन्धद्रव्ये ॥

कोपना । स्त्री । कोपवत्यांस्त्रियाम् । भामिन्याम् ॥ कुप्यतितच्छीला । युजन्ताट्टाप् ॥

कोपलता । स्त्री । कर्णस्फोटायांलतायाम् । चित्रपर्ण्याम् । चित्रपुटायाम् ॥

कोपित. । चि । कोपप्रापिते । सञ्जातकोपे ॥ ता० इतच् ॥

कोपी । पु । जलपारावते ॥ चि । क्रोधने ॥ अवश्यङ् कुप्यति । कुप क्रोधे । आवश्यकेतिणिनि ॥

कोपोपाय । पु । दण्डे ॥ कोपजन्यउपाय ॥

कोमलम् । न । जले ॥ चि । अकठिने । मृदौ । मृदुले ॥ मनोज्ञे ॥ काम्यते । कमुकान्तौ । बा० अलच् । अतउत्त्वम् ॥ कौतिवा । कुशब्दे । उ० बाल तस्यमुट् । बा० गुण ॥

कोमलकम् । न । कोमलार्थे ॥ मृणाले ॥

कोमलवल्कली । स्त्री । लवल्याम् ॥

कोमला । स्त्री । क्षीरिकायाम् ॥ वृत्त्यनुप्रासघटकवृत्तिभेदे ॥

कोमासिका । स्त्री । जालिकायाम् । फलकीजाली इतिभाषा ॥

कोयष्टि । पु । जलकुक्कुभे खगे ॥ कं जल यष्टिरिवास्य । पृ० ॥

कोयष्टिक । पु । कोंडापाखी इतिगौडभाषप्रसिद्धे टिट्टिभखगे ॥ स्वार्थे कन् ॥

कोरक । पु । न । कलिकायाम् । कुड्मले ॥ विकारकोरकाणीतिमाघ

। कोरकोऽस्त्री कुड्मले कात् कक्कोल

कमृणालयोरिति मेदिनिकरः। को

रकन्तु कुड्मलेऽस्यादिति हेमोऽनेका

र्थे। तथाच कलिकाकोरकः पुमा

निध्यमरस्य प्रमादः। प्रायिकाभि

प्रायो वा ॥ कक्कोलके ॥ मृणाले ॥

चोरनामगन्धद्रव्ये ॥ कुर्यते। कुर

शब्देतारे। कृ०वुन् ॥ यद्वा। कोर

ति। कुरसंस्थाने। ण्वुल्। रत्नयो

रैक्यम् ॥

कोरङ्गी। स्त्री। सूक्ष्मैलायाम् ॥ पि

प्पल्याम् ॥ कुरति। कुर०। बाहु

लकादङ्गच्। गौरादि ङीष् ॥

कोरदूष। पु। कोद्रवे ॥ कोर दूषय

ति। दूषवैकृत्ये। णयन्त'। कर्म

ण्यण् ॥

कोल। पु। अङ्कपाल्याम् ॥ शनौ ॥

चित्रे। चीता इतिभाषा ॥ वराहे।

शूकरे ॥ उत्सङ्गे। क्रोडे। भुजान्त

रे ॥ ढोंगा ढोंगी इतिच भाषाप्रसि

द्धे। प्लवे। भेलके। अल्पनौकाया

म्। उडुपे ॥ अस्त्रविशेषे। टङ्कच

यमाने ॥ वर्णसङ्करजातिविशेषे। स

तु लेटात् तीवरकन्यायां जात'।

इति ब्रह्मवैवर्त्तपुराणम् ॥ श्मश्रुधारि

णि म्लेच्छजातिविशेषे ॥ सच पूर्वं

क्षत्रिय आसीत् सगरेणाचै वेद

धर्मात्त्याजनविकारीकृतः ॥ क्लिन

स्तावुध' ॥ देशविशेषे ॥ न। चव्ये ॥

मरिचे ॥ तोलकपरिमाणे ॥ बदरे

। कोलफले ॥ कोलस्या'फलम्। अ

ण् लुकौ। लुक् तद्धितलुकीतिङी

षोलुक् ॥ सौवीराम्लषु सम्पक्वं म

धुर कोलमुच्यते। कोलन्तु बदरं

दाहि वच्य मुष्णञ्च वातहृत्। कफ

पित्तकर ञ्चापि गुरु सारक मीरित

म् ॥ कोलति। कुलसंस्त्याने। अच्

लितीतिशा' ॥ यद्वा। कोलतिपीत

त्वात्। अच् ॥ यद्वा। कोलन्त्यङ्गा

न्यत्र। हलश्चेतिघञ् ॥

कोलकः। पु। अङ्कोठवृक्षे ॥ बकुलार

वृक्षे ॥ न। काँकला इतिगौडभा

षाप्रसिद्धे गन्धद्रव्यविशेषे। कक्कोले

॥ मरिचे ॥ कोलति। कुल०। ण्वु

ल्। कुलादित्वाद्गुणना ॥

कोलकन्दः। पु। महाकन्दविशेषे। ल

शुने। पुटकन्दे ॥

कोलकर्कटिका। स्त्री। मधुखर्जूरिका

याम् ॥

कोलदलम्। न। नखीनामगन्धद्रव्ये

॥ कोलस्य बदर्या इव दलम् ॥

कोलनासिका। स्त्री। वश्चिकालीवृक्षे ॥

कोलपुच्छः। पुं। कङ्कपक्षिणि ॥

कोलमूलम्। न। पिप्पलीमूले ॥

कोलम्बक'। पु। वीणाय काये। तन्त्रीहीने अलावूदण्डककुभसमुदाये॥ कोलति। कुल०। बाहुलकाद म्बच्। तत संज्ञायां कन्। श्रो मृध्य मध्य'॥

कोलवल्ली। स्त्री। वशिरे। करिपिप्पल्याम्। कोलइववल्ली तत्तुल्यरोमत्वात्॥

कोलवालुकम्। न। कक्कुष्ठे॥

कोलशिम्बि:। स्त्री। आलकुशीति गौडभाषाप्रसिद्धे लताविशेषे। शूकरपादिकायाम्। कोलशिम्बि समीरघ्नीगुर्व्युष्णा कफपित्तकृत्। शुक्राग्निसादकृद्रुल्या रुचिकृद्रूक्षविट्गुरु॥

कोला। स्त्री। पिप्पल्याम्॥ चव्यभेषजे॥ कोलिद्रुमे॥ मुरयस्य राजधान्यन्तरे॥ अस्त्रविशेषे॥ कोलति। कुल०। ज्वलितीतिणः। पचाद्यच्। टाप्॥

कोलाच्च.। पु। देशविशेषे॥

कोलापुरम्। न। दक्षिणदेशप्रसिद्धे लक्ष्मीदेव्या स्थानविशेषे॥

कोलाविध्वंसी। पु। कोलावासिनि॥ कोलां विध्वंसितु शीलमस्य। विपूर्वाद्ध्वंसेन धातो रन्यार्थे करणम्॥ पर्वतवासिनिम्लेच्छ विशेषे॥ एवंधातयतस्तस्य म्लेच्छा पर्वतवासिन। कोलाविध्वंसिन प्राप्ता. पृथ्वीग्रहणात्परा इति देवीभागवतोक्तेः। अत्र नामैकदेशेनामग्रहणमितिन्यायात् कोलाशब्द' कोलाहल वाचक। तथाचकोलाहलेनान्यायेनैव मथुराद्यविध्वंसनशीला. नतयुद्धनीष्वव लम्बिनइत्यर्थइति भागवत व्याख्यानेनीलकण्ठश्चैव॥यद्वा। कोलां काञ्चित् सुरथस्य राजधानीं विध्वंसितु मुपमर्दितु शीलमस्यणिनि.॥

कोलाहल। पु। कलकले। बहुविधदूरगाव्यक्तध्वनौ॥ कुल०। कोलन कोल' एकीभाव: तमाहलति। हलविलेखने। अच्॥ गिरिवि०॥

कोलि। पु। स्त्री बदर्याम्॥ कोलति। कुल०। इन्॥

कोली। स्त्री। बदर्याम्। वेर इति प्रसिद्धे वृक्षे॥ कोलति घनीभवति। कुल०। अच्। गौ० ङीष्॥

कोविद.। पु। धीरे। पण्डिते। विदुषि॥ विवेकिनि॥ कौति धर्मादि। कुशब्दे। कवते वा। कुङ्शब्दे। विच्। गुण। कोर्वेदस्य विदो वेत्ता। इगुपधेतिक॥ कवि वेदे विदा यस्य वा॥

कोविदार। पु। रक्तकाञ्चनारे। चमरिके। कचनार इति भाषा॥ को

खड्गाद्यौ ॥ इति विश्वः ॥

कोशातकी । स्त्री । पटोल्याम् ॥ घोषके । तोरुई इति प्रसिद्धे शाके ॥ तत्पत्रशाक प्रकारस्तु । कोषातकी वल्लिभवाऽग्रपल्लवा स्तक्रेणयुक्ता सु घृतेन संस्कृता । सम्भर्जिता सैन्धव हिङ्गुमाधिके तैलेऽतिरुच्यावहुदृष्टिदायका इति ॥ तत्फले ॥ हरीतक्यादिभ्यश्चेतिफल प्रत्ययस्यलुक् । गौ॰ ङीष् ॥

कोशाम्र । पु । कोशाम इति गौड भाषाप्रसिद्धे फलवृक्षविशेषे । सुकोषके । चुद्राम्रे । कृमिवृक्षे ॥ कोशाम्र कुष्ठशोथाऽस्रपित्तव्रणकफापह. । तत्फल ग्राहि वातघ्न मम्लोष्णं गुरुपित्तलम् । पक्वन्तु दीपन रुच्यं लघूष्ण कफवातहृत् ॥

कोशिका । स्त्री । मृत्रपात्र्याम् ॥

कोशी । स्त्री । पन्नद्धश्याम् । पादरक्ष्याम् ॥

कोष । पु । न । कुड्मले ॥ पानपात्रे ॥ दिव्ये । शपथे ॥ खड्गपिधाने ॥ जातीकोषे ॥ अर्थसमूहे ॥ यथा । मुक्ताकनकरत्नाढ्य पितृपैतामहोऽर्जितः । धर्मार्जितोव्ययसह कोष कोषज्ञसम्मत ॥ धर्महेतोस्तथा शौयभृत्यानाम्भरणायच । आपदर्थञ्चसंरक्ष्य कोष कोषवता सदेति ॥ भिक्षाच राजकोषस्स्तोकस्तोकेन वर्द्धते । अञ्जनञ्च धनञ्चैवस्तोकस्तोके न क्षीयते ॥ पेश्याम् । पक्षिणामण्डे ॥ कुषति निष्कामत्यस्मात् स्वयमेव कुष्यते वा । कुषनिष्कर्षे । अकर्त्तरिचेति घञ् ॥ शब्दादिसङ्ग्रहे ॥ योनौ ॥ कृताकृतस्वर्णरूप्ययो' । अकुप्ये । हिरण्ये ॥ शिम्बायाम् ॥ भाण्डागारे ॥ पनसादिफलान्त.स्थावयवे ॥ अन्नमयादिपञ्चसु ॥ द्वितीयभवने ॥ शब्दान्तरसयोगे गोलकवाचकोयम् । यथा । सूक्ष्मकोषो नेत्रकोषइत्यादि ॥

कोषक" । पु । अण्डे ॥ अण्डकोषे ॥

कोषकार । पु । कुषारि इति गौड भाषा प्रसिद्धे इक्षुविशेषे ॥ कोषकारो गुरुः शीतो रक्तपित्तक्षयापह ॥ गुटिपोका इति गौ॰ प्रसिद्धे तन्तुकीटे ॥ कोषकारवदात्मानं वेष्टय त्वा ऽवबुध्यसे ॥ अभिधानस्य कर्त्तरि ॥ कोषकरोति । कर्मण्यण् ॥

कोषचञ्चु । पु । सारसखगे ॥

कोषपानम् । न । तत्तदितिकर्त्तव्यताकप्रकृतिकशपजलपान रूपे परीक्षाविशेषे ॥

कोषफल. । पु । घोषाख्यलताम् ॥

न । कर्पूरतुल्यगन्धद्रव्यविशेषे । कक्कोले ॥ कोषे फलमस्य ॥

कोषफला । स्त्री । पीतघोषायाम् ॥

कोषवृद्धि । स्त्री । अण्डवृद्धौ ॥ कुरण्डे ॥

कोषशायिका । स्त्री । क्षुरिकायाम् ॥

कोषस्थ । पु । जलचरजीवविशेषा याङ्गुको ॥ यथा । शङ्खः शङ्खनकश्चापि शुक्तिशम्बूककर्कटाः । जीवा एवंविधाश्चान्ये कोषस्थाः परिकीर्त्तिता इति ॥ कोषस्थास्तु मधुरा स्निग्धाः पित्तवातहरा हिमाः । बृंहणा बहुवर्चस्का वृष्या श्च बलवर्द्धना इति ॥

कोषातक. । पु । कचे । केशे ॥ कठे ॥ कोषमतति । अत० । कुन् ॥

कोषातकी । स्त्री । श्वेतघोषे । घोषके ॥ ज्योत्स्निकायाम् । पटोल्याम् ॥ कोषमतति । अत० । कुन् । गौरादित्वात् ङीष् ॥

कोषाम्रम् । न । केशोड़ा इतिगौड भाषाप्रसिद्ध फलविशेषे ॥ अस्यगुणा । कफवायुनाशित्वम् अग्निदीपनत्वम् मलवद्धताकारित्वञ्चेति ॥

कोषी । पु । आम्रवृक्षे ॥

कोषी । स्त्री । पादुकायाम् ॥

कोष्ठः । पु । कुशूले ॥ गृहमध्ये ॥ कुक्षे मध्ये ॥ यथा । स्थानान्यामाग्नि पक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुक पुष्पुषश्च कोष्ठइत्यभिधीयते इति ॥ त्रि । आत्मीये । निजे ॥ कुष्यते । कुष० । उषिकुषिगार्त्तिभ्यस्थन्निति थन ॥

कोष्ठाक. । पु । पर्वतान्तरे ॥

कोष्ठागारम् । न । धान्यादिकोष्ठके । कोठार इतिभाषा ॥

कोष्णम् । न । ईषदुष्णे । मन्दोष्णे ॥ त्रि । तद्वति ॥ ईषदुष्णञ्च कोष्णम् । ईषदर्थे इति का देशः ॥

कोसल । पुं । सरयूतीरनिविष्ट जनपदविशेषे । अयोध्यानगयाम् ॥ कुश्यति । कुससंश्लेषणे । वृन्दयान्तोनिर्विवादः । बाहुलकात् कलप्रत्ययोगुणश्च ॥ यद्वा । कौपृथिव्यां सलति गच्छति । सलगतौ । पचाद्यच् । पृषोदरादित्वात् कुशब्दस्यगुणः ॥

कोहल । पुं । वाद्यप्रभेदे ॥ नाट्यशास्त्रप्रवर्त्तकमुनिविशेषे ॥ मद्ये इति हेमचन्द्रः ॥

कौकृत्यम् । न । अनुतापे ॥ अयुक्तकरणे ॥

कौक्कुटिक । पु । दाम्भिके ॥ अदूरप्रेरितचक्षौ । भिक्षौ ॥ कुक्कुटीमायापादपातश्च । तोपश्यति । संचार्याललाटकुक्कुट्योपश्यतीतिठक् । कु

कुटीशब्देन तत्पातार्हः स्वल्पदेशो लक्ष्यते । अन्यासीहि कीटादिवध भीत्या पादविक्षेपपर्याप्तदेशपर्यन्त मेव चक्षु सयम्य गच्छति ॥

कौक्कुटिकन्दल । पुं । बोडासाँप इति गौडप्रसिद्धे सर्पविशेषे । भावप्रकाशे ॥ इतित्रिकाण्डशेष ॥

कौक्ष । त्रि । कुक्षौ भवे ॥ तत्रभव. इ त्यण् ॥

कौक्षेयकः । पु । असौ । खड्गे ॥ कुक्षौ भ व । कुलकुक्षिग्रीवाभ्य श्वास्यलङ्का रेष्विति ढकञ् ॥

कौङ्क. । पु ।
कौङ्कण ।पु।
कौङ्किण.।पु।
} कोकनइतिप्रसिद्धे को ङ्कणदेशे ॥

कौट. । पु । कुटजवृक्षे ॥ स्वतन्त्रे ॥

कौटज' । पु । कुरैया इतिप्रसिद्धे वृक्षे । कुटजे ॥कूटोऽद्रिशृङ्ग सएवकौट कौटेजायतेसः । सप्तम्यांजनेर्डः । न । कुटजफले ॥ कौटजन्तु लघु स्वादु मृदु ग्राहि च पित्तलम् । ज्व रहृद्रोगपित्तास्रगुदावर्त्तस्रमुत्तजि त् ॥ कुटजकुसुमे ॥ तच्छाकप्रका रोयथा । काञ्जिकेन मधुरेण मुद्ग र्णं स्वेदितः कुटजपुष्पगुच्छः' । पा चित' सलवण स्तिलतैले याति हि क्नुसुरभीरुचिमत्वम्'॥ कौटजं कु सुमं ग्राहि सुस्वादु मृदुशीतलम् । लघु हृद्रोगपित्तास्रगुदावर्त्तज्वरं ह रेत् ॥

कौटतक्ष । पु । स्वकर्मजीविनि स्वा धीने निजालयस्थे तक्षणि ॥ कुट्या म्भव कौटः स्वतन्त्र सचासौ तक्षा च । ग्रामकौटाभ्यांतक्ष्ण इतिटच् समासान्त ॥

कौटल्य. । पु । वात्स्यायनमुनौ ॥

कौटसाक्षी । पु । मिथ्यासाक्षिणि ॥

कौटिक' । त्रि । खटीक इतिप्रसि द्धे मांसविक्रयजीविनि । वैतसिके ॥ कूटेन मृगादिबन्धनयन्त्रेण चरति । चरतीतिठक् ॥

कौटिलिक । पु । व्याधे ॥ कर्मारे ॥ कुटिलिकया हरति मृगान् अङ्गा रान्वा । अणुकुटिलिकायाः(?)॥

कौटिल्यम् । न । अपसरणे ॥ चाणक्य मूलके ॥ कुटिलतायाम् ॥

कौडविकः । त्रि । कुडवपरिमितव्रीह्या दिवापयोग्ये क्षेत्रे ॥ कुडवस्यवाप. । तस्यवापइतिठञ् ॥ पात्रविशेषे ॥ कु डवंसम्भवति । सम्भवत्यवहरतिप चतीतिठञ् । कुडवस्मिन् समा वेशयतीत्यर्थः । टिड्ढेतिङीपि कौ डविकीब्राह्मणी । कुडवमुपसहर ति पचति वेत्यर्थः ॥

कौशप । पु । राक्षसे । क्रव्यादे ॥ कु णपमन्नं भक्षयितुशीलमस्य । शी लमित्यण् ॥ यद्वा । कौणं पाति । आतइतिकः । कौणपस्य निर्ऋतेरप त्यं कौणपः । तस्येदमित्यण् ॥

कौणपदन्तः । पु । भीष्मे । इतित्रिकां डशेषः ॥

कौण्डिन्य. । पुं । मुनिविशेषे । विष्णु गुप्ते ॥ कुण्डिन्या.गोत्रापत्यम् । गर्गा दित्वात् यञ् ॥ आगस्त्यकौण्डिन्ययो रगस्ति कुण्डिनजितिबहुत्वेयञोलु कि । कुण्डिनाः ॥

कौतुकम् । न । अपूर्वविषयदर्शनेोपभो गोत्साहे । कुतूहले ॥ उत्सवे ॥ अभिलाषे ॥ नर्मणि ॥ हर्षे ॥ पर म्परायातमङ्गले ॥ उद्वाहसूत्रे । हस्त सूत्रे ॥ गीतादौ भोगकाले ॥ कुतू हलात्मिर्मितस्तेहपात्रं कायति । कै० । आतोनुपेतिकः । उपपदसमा सः । इकोह्रस्वोऽङ्योगालवस्येति- ह्रस्वः । प्रज्ञाद्यण् ॥ यद्वा । कुत्साम्भ न. । अथवा० ठञ् । इसुसुक्तान्तात्कः । केऽण इति ह्रस्व. ॥

कौतूहलम् । न । कुतूहले । कौतुके ॥ कुतूहलति । हलविलेखने । मू० कः ॥ यद्वा । हलति । हल० पचा द्यच् । कुत्साहलम् । प्रज्ञाद्यण् ॥ कु तूहलस्य कर्म भावो वा । यु० अण् ॥

कौत्सः । पु । कुत्सस्यापत्ये । ऋषि विशेषे ॥ ऋष्यण् । बहुत्वे कुत्साः ॥

कौदालीकः । पु । वर्णसङ्करजाति विशेषे ॥ सतुरजक्यांतीवराज्जात ॥

कौद्रविकम् । न । सौवर्चललवणे ॥

कौद्रवीण । त्रि । कोद्रवक्षेत्रे ॥ कोद्रवा णां भवनं क्षेत्रम् । धान्यानाम्भवने क्षेत्रेखञ् ॥

कौन्तिक । त्रि । प्रासिके । कुन्तयोधि नि ॥ कुन्तः प्रहरणमस्य । प्रहरण मितिठक् ॥

कौन्ती । स्त्री । रेणुकायाम् । भक्षग न्धिन्यौषधौ ॥ कुन्तिषु देशविशेषे षुभवा । तत्रभवइत्यण् । ङीप् ॥

कौन्तेय. । पु । युधिष्ठिरादिकुन्तीतन येषु ॥ अपत्ये स्त्रीभ्योढक् ॥ अर्जुन वृक्षे ॥

कौपम् । न । कूपोदके ॥ भूमौखातो ऽल्पविस्तारो गम्भीरो मण्डलाकृ ति. । बद्धोऽबद्ध स कूपः स्यात्तदम्भ कौपमुच्यते ॥ कौपं पयो यदि स्वा दु पित्तोघ्नं हितं लघु । तत् क्षारं कफवातघ्नं दीपनं कफकृत्परम् ॥

कौपीनम् । न । अकार्ये ॥ चीरे । मे खलाबद्धपरिधेयखण्डे ॥ गुह्यप्रदेशे ॥ पापे ॥ कूपपतनमर्हतीति कौपीन

म् पापम्। तत्साधनत्वात् तद्गोप्यत्वात् पुरुषलिङ्ग मपिकौपीनम्। तत् सम्बन्धात् तदाच्छादन मपि कौपीनम्। अश्लीलकौपीने अघृष्टा कार्ययोरितिसाधु। नाव्रावयवार्थे ऽतीवाभिनिवेष्टव्यम्। रूढिशब्दत्वात्॥

कौमारम्। न। जन्मावधिपञ्चमाब्दपर्य्यन्ताया मवस्थायाम्। पञ्चमाब्दमभिव्याप्यावस्थायाम्॥ कौमारम्पञ्चमाब्दान्तमित्युक्तः॥ कुमारस्यकर्म भावोवा। वयोवचनत्वादण्॥ तन्त्रमते षोडशवर्षपरिमितायाम वस्थायाम्॥ आत. कुपृथिवीं यद्यां मारयेत् तत्कुमारक.। इति प्रमाणतो विद्धि कौमारं प्राग्भवाब्दत॥ तद्वति। पु। स्त्री॥ पु। युवराजे। कँवरइति भाषा॥ सर्गविशेषे॥ पत्यौ॥ अपूर्वं पतिङ् कुमारीं पतिरुपपन्न'। कौमारापूर्ववचन इतिद्वितीयान्तादुपयमनकर्त्तर्यण् प्रत्ययेनसाधु॥

कौमारभृत्यम्। न। वैद्यविद्याङ्गविशेषे॥ यथा। कुमारभरणधात्रीक्षीरदोषसंशोधनार्थं दुष्टस्तन्यग्रहसमुत्थाना ञ्च व्याधीना मुपशमनार्थं यत् तत्॥

कौमारी। स्त्री। मातृकाविशेषे। कार्त्तिकेय शक्तौ॥ वाराहीकन्दे॥ भार्यायाम्॥ अपूर्वपति कुमारी पतिमुपपन्ना। कौमारापूर्ववचनेइति प्रथमान्तात् स्वार्थेऽण् प्रत्यये नसाधु॥

कौमुद। पु। कार्त्तिकमासे॥

कौमुदिका। स्त्री। उमासखीविशेषे॥

कौमुदी। स्त्री। ज्योत्स्नायाम्। प्रकाशिकायाम्॥ आश्वयुज्यां पूर्णिमायाम्॥ कुमुदानामियम्। तस्येदमित्यणि टिड्ढेतिङीप्॥ कार्त्तिक्याम्। कार्त्तिकोत्सवे॥ कुशब्देन मही ज्ञेया मुद्हर्षे ततोद्वयम्। धातुज्ञैर्नियमैश्चैव तेन सा कौमुदीस्मृता॥ कौ मोदन्ते जना यस्यां नानाभावै परस्परम्। हृष्टा तुष्टा सुखायत्ता स्तेन सा कौमुदी स्मृता॥

कौमुदीचार। पु। न। कोजागरपूर्णिमायाम्। शारद्याम्॥

कौमुदीपति। पु। इन्दौ॥ कौमुदीपति॥

कौमुदीवृक्षः। पु। दीपवृक्षे। दीवट इति भाषा।

कौमोदकी। स्त्री। विष्णोर्गदायाम्॥ को पृथिव्या मोदकः पालकत्वात् कुमोदको विष्णुः तस्येयम्। अण्। ङीप्॥

कौमोदी । स्त्री । कौमोदक्याम् ॥

कौरव । पु । कुरुराजसन्ततौ । धृतराष्ट्रादिषु । पाण्डवेषु च ॥ पाण्डो' कुरुवंशजत्वात् । कुरोरयम् । कच्छादिभ्यश्चेत्यण् ॥

कौरवक' । पु । कौरवे ॥ कुरवभव कुरोरय वा । विभाषाकुरुयुगन्धराभ्यामितिवुञ् ॥

कौरव्य. । पु । कौरवे ॥ कुरोरपत्ये । कौरव्य कौरव्यौ कौरव्या ब्राह्मणा । कुर्वादिभ्योण्य' ॥ चत्रियेतु । कुरुनादिभ्योण्य इति ण्येकृते तद्राजस्य बहुषुतेनैवाखियामितिबहुत्वे लुकि कौरव्य कौरव्यो कुरव. इति बोध्यम् ॥

कौर्म्मः । पु । } कूर्म्मिकराश्यो ॥
कौर्म्मारिथ. । पु । }

कौल. । त्रि । आन्वयिके । सत्कुलोत्पन्ने । कुलीने ॥ दिव्यवीरपशुभावान्तर्गते दिव्यभावरते । कुलाचाररते । ब्रह्मविदि ॥ यथा । दिव्यभावरत कौल. सर्वत्र समदर्शन इति ॥ अपि च । पशो वैष्णा ह्यधमन्त. पशुरेव न संशय ॥ वीरा ह्यधमनु वीर' कौला ब्रह्मविद्भवेदिति भवानीतन्त्रम् ॥ कुलेभवः । अण् ॥

कौलटिनेयः । पु । स्त्री । कौलटेये । सतीभिक्षुका. सुते । सच्चा भिक्षामें गेहक्रमेणटन्त्याः पुत्रे ॥ कुलटायाअपत्यम् । कुलटायावेतीनङ् । स्त्रीभ्योढक् ॥

कौलटेय' । पु । स्त्री । कौलटिनेये । सतीभिक्षुकीपुत्रे ॥ असतीपुत्रे । वान्धकिनेये । वन्धुले ॥ कुलटायाः अपत्यम् । स्त्रीभ्योढक् ॥

कौलटेर' । पुं । असतीसुते । वान्धकिनेये । कौलटेये ॥ कुलटाया. अपत्यम् । क्षुद्राभ्योवेतिढ्रक् । अङ्गहीना शीलहीनाश्च क्षुद्रा ॥

कौलत्थः । त्रि । कुलत्थसम्बन्धिनिरसादौ ॥ कुलत्थस्यायम् । तस्येदमित्यण् ॥ कुलत्थै. संस्कृते ॥ कुलत्थकोपधादण् ॥

कौलत्थीनम् । त्रि । कुलत्थोद्भवक्षेत्रे ॥ कुलत्थानाम्भवनक्षेत्रम् धान्यानाम्भवने क्षेत्रखञितिखञ् ॥

कौलवः । पुं । ववादिषु तृतीयकरणे ॥ तत्रजातस्यफलं यथा । वाग्मी विनीतो निसरांस्वतन्त्रः प्रागल्भ्ययुक्तो मनुजो महौजा । सुसम्मतः स्याद्विदुषां कृतज्ञ श्चेत् कौलवाख्यं करणं प्रसूताविति ॥

कौलालकम् । त्रि । कुलालेन कृते ॥ कुलालादिभ्यो वुञ् ॥

कौलिक । पु । तन्तुवाये ॥ कुलमार्ग प्रवर्त्तके परशिवे ॥ शम्भ कौलिक इतिश्रुते ॥ त्रि । कुलमार्गस्थे । ब्रह्मविदि ॥ पाषण्डे ॥ कुलपरम्परायाते ॥ यथाकौलिक धर्मएष. ॥

कौलीनम् । न । गुह्ये ॥ जन्ये । परीवादे । लोकापवादे ॥ अकार्ये । कुकर्मणि ॥ कुलीनत्वे ॥ अहिपशुपक्षिशुनां युधि । प्राणिद्यूते ॥ कुलीनस्य कर्मभावोवा । युवादित्वादण् ॥

कौलीन्यम् । न । कुलीनत्वे ॥

कौलीरा । स्त्री । कर्कटशृङ्ग्याम् ॥

कौलेय' । त्रि । कुलीने ॥ इतिद्विरूपकोषः ॥

भरतश्च ॥

कौलेयक । पु । कुक्कुरे । शुनि ॥ कुलेभव. । कुलकुक्षिग्रीवाभ्य श्वास्यलङ्कारेष्विति ढकञ् ॥ त्रि । कुलीने ॥ कुलस्यापत्यम् । अपूर्वपदादन्यतरस्यांयड्ढकञाविति ढकञ् ॥

कौल्माषीणम् । त्रि । कुल्माषोद्भवक्षेत्रे ॥ कुल्माषाणां भवनङ् क्षेत्रम् । धान्यानामितिखञ् ॥

कौल्य । त्रि । कुलीने ॥ इतिद्विरूपकोष' ॥

कौवलम् । न । कुवले । कोलिफले ॥

कौवेरम् । न । कुष्ठौषधौ ॥ त्रि । कुवेराऽनुगे ॥ कुवेरसम्बन्धिनि तत्रापत्ये च ॥ कुवेरस्येदमित्यर्थेऽण् ॥

कौवेरी । स्त्री । मातृभेदे ॥ उत्तरदिशि ॥ कुवेरस्येयम् ॥ अणन्तात् ङीप् ॥

कौशम् । न । कान्यकुब्जदेशे ॥

कौशलम् । न । क्रियायां नैपुण्ये । कुशलतायाम् ॥ यथा । क्वचातिकर्कश शास्त्र. क्वचातिललित शुचि । एकत्र काव्ये व्याख्यातु स्तावद्दो कौशलं कवे ॥ इत्यमरुशतकटीका ॥ कुशलस्य कर्मभावोवा । यु॰ अण् ॥

कौशलिका । स्त्री । प्राभृते । उपायने ॥ कुशलप्रश्ने ॥

कौशली । स्त्री । कुशलप्रश्ने ॥ प्राभृते ॥

कौशलेय । पु । श्रीरामे । रघूत्तमे ॥

कौशल्यम् । न । कुशलतायाम् ॥ कुशलस्य कर्मभावो वा । ब्राह्मणादित्वात् ष्यञ् ॥ त्रि । कौशलायांभवे ॥

कौशल्या । स्त्री । राममातरि ॥ कुशलैव । स्वार्थे ष्यञ् ॥

कौशल्यायनि. । पु । कौसल्यायनौ ॥

कौशल्येय । पु । सीतापतौ । श्रीरामे ॥ कौशल्याया अपत्येर्थे ढक् ॥ मनोमयाद्यान्तरे विज्ञानमये कोषे ॥ कौशल्या सर्वार्थावबोधसततमर्थाबुद्धिस्तस्याभव ॥

कौशाम्बी । स्त्री । कुशाम्बनिर्वृत्तायां

नगर्याम् । वत्सपत्तने ॥ कुशाम्बेन निर्वृत्ता । तेननिर्वृत्तमित्यण् । ङीप् ।

कौशिक । पु । विश्वामित्रमुनौ ॥ कुशिकस्यापत्यम् ऋष्यण् । गोत्राऽपत्येतु बिदाद्यञ् ॥ कौशेभवो वा ॥ अध्या० ठञ् ॥ नकुले ॥ व्यालग्राहे ॥ गुग्गुलौ ॥ शक्रे ॥ कोषज्ञे ॥ उलूके ॥ शृङ्गाररसे ॥ मज्जनि ॥ अश्वकर्णवृक्षे ॥

कौशिकप्रिय । पुं । रामचन्द्रे ॥

कौशिकफलः । पुं । नारिकेले ॥

कौशिका । स्त्री । नारिकेलफलनिर्मिते पानपात्रे ॥ इति हेमचन्द्रः ॥

कौशिकात्मज. । पु । अर्जुने । पार्थे ॥

कौशिकायुधम् । न । इन्द्रचापे ॥

कौशिकाराति. । पु । काके ॥

कौशिकी । स्त्री । चण्डिकायाम् ॥ कोशान्निर्गता । तदुक्तम् । शरीरकोशाद्यत्तस्याः पार्वत्यानि. सृता म्बिका । कौशिकीतिसमस्तेषु ततोलो केषुगीयत इति पृषोदरादित्वात्साधुत्वम् ॥ तत्स्थाने ॥ नदीविशेषे ॥ नाट्यवृत्तौ ॥

कौशिकदोज. । पु । आक्षोटवृक्षे ॥

कौशीतकी । स्त्री । उपनिषद्विशेषे ॥ अगस्त्यमुनेर्भार्यायाम् । लोपामुद्रायाम् ॥

कौशीलवम् । न । नृत्यगीतवादित्रानुबन्धे ॥

कौशेयम् । त्रि । कृमिकोशोत्थवस्त्रादौ । रेशमिकपडा इति भाषा ॥ कोशेसम्भूतम् । कोशाड्ढञ् । कोशस्यविकारो वा । विकारे वा ढञ् ॥

कौषिक । पु । कौशिकार्थेषु ॥

कौषिकी । स्त्री । उमायाम् । नदीविशेषे ॥

कौसल्या । स्त्री । श्रीरामचन्द्रजनन्याम् ॥ कोसलस्य राज्ञो ऽपत्यं स्त्री । वृद्धेत् कोसलाजादाञ्ञ्यङ् इति ञ्यङ् । यङश्चापितिचाप् ॥ सूत्रनिर्देशात् कोसलशब्दो दन्त्यसकारमध्य ॥

कौसल्यानन्दन. । पु । श्रीरामे ॥ कौसल्याया नन्दन ॥

कौसल्यानन्दवर्द्धन. । पुं । श्रीरामचन्द्रे ॥ कौसल्याया आनन्द वर्द्धयति तच्छील । अनुदात्तेतश्चेतियुच् ॥ कौसल्यानन्दस्य वर्द्धनो वा ॥

कौसल्यायनिः । पु । श्रीरामे ॥ कोशलस्यापत्यम् । कौशल्यकार्मार्याभ्यांचेतिफिञ् । परमप्रकृतेरेवायमिष्यते । तार्द्धसूत्रे विकृतिनिर्देशोऽव्यर्थं. स्यात् । मध्यर्थ. । यत प्रत्ययस

न्वियोगेन प्रकृतिरूपनिपात्यते ॥ कौसल्यादयस्तालव्यमध्याअपि बोध्या. ॥

कौसीद्यम् । न । आलस्ये । तन्द्रायाम् ॥ कुसीदस्यभावे ॥

कौसुमम् । न । कुसुमाञ्जने । पुष्पाञ्जने ॥

कौसुम्भ. । पु । अरण्यकुसुम्भे ॥ न । शाकविशेषे ॥ यथा । कौसुम्भ कोमल शाक कासमर्दविमर्दितम् । पाचितं तप्तसुद्दते माणिमन्थविमिश्रितम् ॥ कौसुम्भं कासजि च्छदं रूक्ष मुष्णञ्च पित्तलम् । सुस्वादु मधुरं पाके लघु रुच्य सरं हितमिति ॥ त्रि । कुसुम्भपुष्परागयुक्ते । कसूंभा कसूमी इति भाषा ॥ कुसुम्भेन रक्तम् । तेनरक्तं रागादित्यण् ॥ तस्येदमित्यण् वा ॥

कौसृतिक. । त्रि । मायाकारे ॥ कुसृत्याचरति । ठक् ॥

कौस्तुभ । पु । विष्णोर्मणिभेदे ॥ यथा । आत्मान मस्य जगतो निर्लिप्त मगुणामलम् । बिभर्त्तिकौस्तुभ मणिस्वरूप भगवान् हरिरितिविष्णुपुराणम् ॥ कुस्तं स्तुभ्नाति व्याप्नोति इतिकुस्तुभो ऽब्धि । तत्रभव । अण् ॥ कुं स्तोभते इति कुस्तुभो विष्णु । स्तुभस्तम्भे । मूलक । तस्यायमिति वा ॥

कौस्तुभलक्षक । पु । विष्णौ ॥

कौस्तुभवक्षा । पु । पृश्निगर्भे । विष्णौ ॥

क्रकच । पु । ग्रन्थिलाख्यतरौ ॥ पु । न । करपत्रे । करवत् करौत आराइति भाषा ॥ योगविशेषे ॥ षष्ठ्यादितिथयो मन्दा द्विलोम क्रकच स्मृत ॥ क्र० इति कचति । कचशब्दे । पचाद्यच् ॥

क्रकचच्छद । पु । केतकीवृक्षे ॥ क्रकचसदृशा च्छदा यस्य सः ॥

क्रकचपत्र. । पुं । शाकवृक्षे ॥

क्रकचपात् । पु । } कृकलासे ॥
क्रकचपाद । पु । }

क्रकचपृष्ठी । स्त्री । कवयी इतिप्रसिद्धे मत्स्ये ॥

क्रकण । पु । कयार इतिगौडभाषाप्रसिद्धे पक्षिविशेषे । कृकरे ॥ क्रइति कणति । कण० । अच् ॥

क्रकर । पु । करीरवृक्षे ॥ क्रकचे ॥ दीने ॥ क्रकचे ॥ क्रइतिकरोति । अच् ॥ क्रइतिशब्दकरणशील । कृञोहेतुताच्छील्येतिट ॥

क्रतु । पु । यज्ञे । श्रौताग्निष्टोमादौ ॥ सोमसाध्ययागे । यूपसहिते यज्ञे ॥ काम. क्रतु कर्म जन्म स्त्येषामेव

क्रमोभवेत्। तत्रकामक्रत्वोरभेदमा शङ्क्याह । पुंसो या विषयापेक्षा स काम इति भण्यते ॥ स एव वर्द्धमान सन् क्रतुत्व प्रति पद्यते । रुचेरति शय व्याप्ये विषये क्रतुरीर्यते इति ॥ सङ्कल्पे ॥ ब्रह्मणः कराज् जाते म रीच्याद्यन्तर्गते मुनिविशेषे ॥ अध्य वसाये । एवमेवनान्यथेत्यध्यवसाय प्रत्यये ॥ विश्वदेवविशे० ॥ करोति क्रियते वा । कृञ् कतु' ॥ इन्द्रियेषु ॥

क्रतुच्छद । पु । यज्ञभेदे ॥

क्रतुदोषमुत् । पु । प्राणायामे ॥ क्रतु शब्देनेन्द्रियाणि सङ्कल्पोदा तेषांदो षा । विहिताननुष्ठाननिषिद्धाचरणा कुलता, तान् मुष्णाति उपशमयतीति क्रतुदोषमुत् । उक्तंहि । दह्य न्तेध्मायमानानां धातूनाञ्च यथा मला । प्राणायामैस्तथा दोषा शाम्यन्तीन्द्रियगोचराइति ॥

क्रतुध्रुक्रुट् । पुं । असुरे ॥ नास्तिके ॥

क्रतुद्विट् । पु । असुरे ॥ नास्तिके ॥ क्र तुद्वेष्टि । द्विष अप्रीतौ । सत्सूद्वि षेतिक्विप् ॥

क्रतुध्वंसी । पुं । वृषाङ्के । शिवे ॥ क्र तु दक्षयज्ञ ध्वंसयति । ध्वंसु० । सु प्यजातौणिनिस्ताच्छील्ये ॥

क्रतुपशु । पु । अश्वे ॥ इतिहारावली ॥

क्रतुपुरुष' । पु । विष्णौ ॥

क्रतुभुक् । पु । अमरे । देवे ॥ क्रतुङ् क्रतौ वा भुङ्क्ते । भुजपालनाभ्यव हारये । अन्येभ्योपिदृश्यते इति क्विप् ॥

क्रतुराज । पु । राजसूययज्ञे ॥ क्रतू नाराजा । टच् ॥

क्रतुविक्रयी पु । क्रतुविक्रायके । स्व दीययागस्य फलं तव भवत्वित्यभि भायधनग्राहकरि ॥

क्रतूत्तम । पु । राजसूययज्ञे ॥ क्रतुषु उत्तम ॥

क्रथकैशिका । पु भूमि। विदर्भदेशेषु ॥

क्रथनम् । न । मारणे ॥ क्रथहिंसाया म् । भावे ल्युट् ॥ मुक्तागुरुश्च ॥

क्रथनकम् । न । क्रथनार्थे । स्वार्थेकः ॥

क्रन्दनम् । न । रोदने । शोकादिना ऽश्रुपतने ॥ आह्वाने ॥ क्रदिआह्वा नेरोदनेच । भावे ल्युट् ॥ योधस रावे ॥ पु । विडाले ॥ इतिशब्दमाला ॥

क्रन्दितम् । न । आह्वाने ॥ क्रन्दिते ॥ युधिचीनकृतौ ॥ क्रदि० । क्त' ॥

क्रम. । पु । अनुक्रमे । नियतपूर्वापर भावात्मनि ॥ शक्तौ ॥ विधाने । क ल्पे ॥ आक्रमणे ॥ चरणे । अङ्घ्रौ ॥ विततिविशेषे ॥ भिषजांमते चिकित् सायाम् ॥ क्रमणं मनेन वा । क्रमु०

। घञ् । नोदात्तोपेति न वृद्धिः ॥ क्रामतिगच्छति वा । क्रमे पद्भ्यां च ॥ पादविक्षेपे ॥

क्रमक । पु । क्रमज्ञे ॥ क्रममधीते वेद वा । क्रमादिभ्योवुन् ॥

क्रमण । पु । चरणे ॥ न । अतिक्रमे ॥

क्रमनिग्रह । पु । हठनिग्रहादन्यस्मिन्मनसो निग्रहे ॥ क्रमनिग्रहेत्वाऽध्यात्मविद्याप्राप्त्यादयउपाया । अध्यात्मविद्या च दृश्यमिथ्यात्वं दृग्वस्तुन. स्वप्रकाशत्वञ्चबोधयति । तथा च सति एतन्मन स्वगोचरेषु दृश्येषु प्रयोजनाभावप्रयोजनवति दृग्वस्तुनि अगोचरत्वञ्च बुद्ध्वा निरिन्धनाग्निवत् स्वयमेवोपशाम्यति । तथा च श्रूयते । यथानिरिन्धनो वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यतीति ॥ योनिरात्मा ॥

क्रमपूरक । पु । वकवृक्षे ॥

क्रमशः । अ । क्रमेण क्रमेणेत्यर्थे । दवदवसे इतिभाषा ॥

क्रमागतम् । त्रि । क्रमायाते । पितृपितामहादिक्रमेण प्राप्ते ॥ यथा । अस्वतन्त्रा स्त्रिय सर्वा पुत्रदासपरिग्रहा । अस्वतन्त्र सच गृही यस्य तत्स्यात् क्रमागतमिति नारद ॥

क्रमायात । त्रि । क्रमागते ॥

क्रमु । पु । गुवाके ॥ क्रामति । क्रमु० । बाहुलकादु ॥

क्रमुक । पु । भद्रमुस्तके ॥ ब्रह्मदारुणि ॥ कार्पासिकाया फले ॥ पट्टिकालोध्रे ॥ पूगे । गुवाके ॥ क्रमति । क्रमु० । बाहुलकादु । कन् ॥

क्रमुकफलम् । न । गुवाके ॥

क्रमुकी । स्त्री । गुवाकद्रुमे ॥

क्रमेल । पु । उष्ट्रे ॥

क्रमेलक पु । उष्ट्रे । महाङ्गे ॥ क्रामति । क्रमु० । विच् । एलति इलगतौ । एलयतिवा । इलक्षेपे । ण्वुल् । क्रम् चासौ एलकश्च ॥

क्रय । पु । मूल्येनपरस्माद्द्रव्यग्रहणे द्रव्यदानेनान्यस्वस्वीकारे ॥ यथा । निश्चित्य वस्तुतन्मूल्य मुभयो: सम्मतौ शिवे । परस्परांगीकरण क्रयसिद्धिस्ततोभवेदिति ॥ अपिच । क्रयसिद्धिरदृष्टाना गुणश्रवणतोभवेत् । विपर्यये तद्गुणानामन्यथाभवतिक्रयइतिश्रीमहानिर्वाणतन्त्रम् ॥

क्रयलेख्यम् । न । भूम्यादिक्रयलिपौ । क्रयाला कवाला इतिभाषा ॥ यथा । गृहं क्षेत्रादिक क्रीत्वा तुल्य मूल्याक्षरान्वितम् । पत्रकारयतेयत्तु क्रयलेख्य तदुच्यते ॥ इतिवृहस्पति ॥

क्रयविक्रय । पु । वाणिज्ये । बयान इति भाषा ॥

क्रयविक्रयानुशय. । पु । क्रयविक्रययो पश्चात्तापे । अष्टादशविवादान्तर्गत विवादविशेषे ॥ यथा । क्रीत्वा विक्रीय वाकिञ्चिद्यस्येहानुशयो भवेत् । सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत वेतिमनु ॥

क्रयविक्रयिक । पु । वणिजि ॥ क्रयविक्रयाभ्यां जीवति । वस्नक्रयविक्रयाट्ठन् ॥

क्रयविक्रयी । त्रि । क्रयविक्रयकर्त्तरि ॥

क्रयशीर्षम् । न । } कपिशीर्षे । प्राकाराग्रे ॥ इतित्रिकाण्डशेषः ॥
क्रयशीर्षकम् । न । }

क्रयारोह । पु । हट्टे । हाट इति भाषा ॥

क्रयिकः । त्रि । क्रायके । क्रेतरि ॥ क्रयजीवातौ । वणिजि ॥ क्रयेण जीवति । वस्नक्रयविक्रयाट्ठन् । क्रयविक्रयग्रहण सङ्घातविगृहीतार्थम् ॥ यद्वा । क्रीणाति । डुक्रीञ् द्रव्यविनिमये । क्रियष्ठकन ॥

क्रयी । त्रि । क्रयकर्त्तरि । क्रेतरि ॥ क्रयोऽस्यास्ति । इनि ॥

क्रय्यम् । त्रि । हट्टासादितवस्तुनि । क्रेतारोयाहका' क्रीणीयुर्गृह्णीयुरिति बुध्या आपणे प्रसारिते द्रव्ये ॥ क्रीयते । डुक्रीञ्० । अचोयत् । क्रय्यस्तदर्थे इति साधु ॥

क्रव्यम् । न । मांसे ॥

क्रव्यघातन । पु । मृगे ॥

क्रव्यात् । पुं । कौणपे । राक्षसे ॥ त्रि । आममांसभोजिनिगृध्रादौ ॥ क्रव्यमाममांस मत्तीतिविग्रहे क्रव्येचेतिविट् ॥

क्रव्याद । पुं । अग्नये । राक्षसे ॥ सिंहे ॥ श्येने ॥ क्रव्यादोऽग्निरभक्ष इत्युक्ते शवभक्षकाग्नौ ॥ त्रि । मांसाऽशिनि ॥ मांसमत्तीतिविग्रहे मदकमणयण् । पृषोदरादित्वादुपपदस्य क्रव्यादेश' ॥ कृत्तं छिन्नं तदेव पुनर्विशेषतः कृत्तं पक्वञ्च भुङ्क्ते इतिक्रव्याद. । कृत्तविकृत्तपक्वशब्दस्य पृ० क्रव्यादेश इतिकाशिका ॥

कशितः । त्रि । कृशीकृते ॥ कृशशब्दात् तत्करोतीतिणयन्तात् कर्मणि क्त । णाविष्ठवद्भावे । रऋतोहलादेर्लघोरित्यृकारस्यरेफादेश ॥

कशिमा । पु । कार्श्ये ॥ कृशस्य भावः । पृथ्वादित्वादिमनिच् । रऋतोहलादेरितिरेफादेश' ॥

कशीयान् । त्रि । अत्यन्तकृशतरे ॥ क्षीणे ॥ तनीयसि ॥ अयमनयोरतिशयेनकृश: । द्विवचनविभज्येतीयसु

नि रक्तइतिरेफादेश. ॥

क्रान्त. । पु । अश्वे । हये ॥ क्रामति । क्रमु० । क्त ॥ त्रि । आक्रान्ते ॥ निष्क्रान्ते ॥ व्याप्ते ॥ सङ्क्रान्ते ॥

क्रान्तदर्शी । त्रि । कवौ । अतीतानागतावशेषवस्तुदर्शिनि ॥ क्रान्तमस्य हादीन्द्रियविषयतामतिक्रान्तवस्तु सर्वविषयव्यापियथा स्यात्तथावाद्रष्टु शीलमस्य ॥

क्रान्ता । स्त्री । हहत्याम् ॥

क्रान्तिः । स्त्री । आक्रमे ॥ गतौ ॥ खगोलमध्यवर्त्तिसूर्यगमनार्थं तिर्य्यग्गोलरेखायाम् ॥ यथा । अयनाद्यनं यावत् कक्षा तिर्यक् तथापरा । क्रान्तिसञ्ज्ञा तया सूर्य्यः सदापर्य्येति भासयन्निति ॥

क्रान्तिवलय । पु । क्रान्तिमण्डले । विषुवद्वृत्ताच्चतुर्विंशतिभागैर्दक्षिणोत्तरे यद्वृत्तंतस्मिन् ॥

क्रान्तु । पु । खगे । पक्षिणि ॥ क्रामति । क्रमु० । क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥

क्रामत् । त्रि । पादविक्षेपति ।

क्रायक । पु । क्रयिके । क्रेतरि । ग्राहके ॥ क्रीणाति । डुक्रीञ् द्रव्यविनिमये । ण्वुल् ॥ क्रयजीविनि ॥

क्रिमि. । पु । कृमौ । नीलाङ्गौ । हूच्छजन्तौ ॥ लाक्षायाम् ॥ कृमिले ॥ खरे ॥ रोगविशेषे ॥ अस्यनिदानम् । यथा । अजीर्णभोजी मधुराम्लनित्यो द्रवप्रिय पिष्टगुडोपभोक्ता । व्यायामवर्जीच दिवाशयानो विरुद्धभोजी लभते क्रिमींश्चेति ॥ क्रामति । क्रमु० । क्रमितमिशतिस्तम्भामतइच्चेतीन् ॥

क्रिमिकण्टकम् । न । कृमिकण्टके ॥

क्रिमिघ्न । पुं । विडङ्गे ॥ क्रिमीन् हन्ति । हन० । अमनुष्यकर्तृकेषुचेतिटक् । अत्यनैश्योतिनियमान्नणत्वम् ॥

क्रिमिघ्नी । स्त्री । सोमराज्याम् ॥ टित्वात् ङीप् ॥

क्रिमिजम् । न । अगुरुणि ॥

क्रिमिजा । स्त्री । लाक्षायाम ॥ क्रिमिभिर्जन्यते । जनी० । ड ॥

क्रिमिशत्रु । पु । पारिभद्रमादार इति गौडप्रसिद्धे रक्तपुष्पकेमन्दारे ॥ क्रिमीणांशत्रु ॥

क्रिमिशाखव । पु । विटखदिरे ॥

क्रिमिशैल । पु । वल्मीके । नाकौ । बाँबी इति बंबई इतिचभाषा ॥

क्रिय । पु । मेषराशौ ॥

क्रियमाणम् । न । वर्त्तमानदेहनिर्वर्त्त्यकर्म्मणि ॥

क्रिया। स्त्री। उपाये॥ चेष्टायाम्। इन्द्रियव्यापारे॥ सा च पाकादिरूपा पात्रादिमज्जनाप्रवृत्तौ निमित्तम्। आरम्भे॥ निष्कृतौ॥ पूजायाम्॥ सम्प्रधारणे॥ कर्मणि॥ शास्त्रविहितनित्यनैमित्तिकव्रतान्यात्मककर्मकलापात्मिका क्रिया साचोद्योगपत्नी। यथा। क्रियाचोद्योगपत्नी च पूजिता सर्वसंमता। यया विना जगत्सर्वं विधिहीनञ्च नारदेति भगवद्वाक्यं देवीभागवते ९ स्कन्धे॥ शिक्षायाम्॥ चिकित्सायाम्॥ करणे॥ धात्वर्थे करोत्यर्थो वा क्रियेति वैयाकरणा॥ आख्याते॥ गर्भाधानादिसंस्कारे॥ चतुष्प्रकारव्यवहारपादान्तर्गतव्यवहारपादविशेषः क्रिया। सा द्विधा। मानुषी दैवी च। तत्राद्या साक्षिलेख्यानुमानभेदेन त्रिधा। द्वितीया घटाग्न्युदकविषकोषतण्डुलतप्तमाषकफालधर्मजभेदेन नवधा दिव्यपदवाच्या। यथा। द्विप्रकारा क्रियाप्रोक्ता मानुषी दैविकी तथा। साक्ष्यलेख्यानुमानञ्च मानुषी त्रिविधा स्मृता॥ घटाद्या धर्मजान्ताश्च दैविकी नवधा स्मृतेति वृहस्पतिः॥ शौचे॥ करणाद् क्रियते वा। भ्रम्वेति योगविभागात् भावादौ कृञः शप्रत्ययः। रिङ्‌ शयग्लिङ्क्षु। अचिश्नुधातुभ्रुवांय्वोरियङुवङाविती यङ्॥

क्रियाकार। पु। नवच्छात्रे। नवाविद्यार्थी इति भाषा॥ क्रियां करोति। अण्॥ क्रियायाः कारो नियमः प्रबन्धो वाऽस्य स्थापनं वा॥ त्रि। क्रियाकृति॥

क्रियाद्वेषी। पु। साक्षिलिखितभुक्तियुक्तिशपथद्वेष्टरि॥ स च व्यवहारविषये पञ्चधा जनान्तर्गतहीनविशेषः। यथा। अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृत इति नारदः॥ त्रि। कर्मद्वेष्टरि॥

क्रियापाद। पु। चतुष्पाद्व्यवहारान्तर्गततृतीयपादे॥ यथा। पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरः स्मृतः। क्रियापादस्तथा चान्यश्चतुर्थो निर्णयः स्मृत इति वृहस्पतिः। स च साक्षिलिखितभुक्तियुक्तिशपथरूपः॥

क्रियाफलम्। न। कर्मफले॥ उत्पत्त्यादिषु॥ यथा। उत्पत्तिराप्तिविकृतिः संस्कृतिश्च चतुर्विधम्। क्रियाफलं प्राहुरार्या नैरत्ये तन्न सम्भवेदिति॥

क्रियाभ्युपगम। पु। परस्परक्रियास्वीकारे। द्वयोः पुरुषयोः कस्मिंश्चिद्विषये परस्पराङ्गीकारेणाऽनुमतौ॥

यथा। क्रियाभ्युपगमात् क्षेत्रबीजार्थे यत् प्रदीयते। तस्येहभागिनौ दृष्टौ बीजी क्षेत्रिक एवचेतिमनु ॥

क्रियायोग। पु। देवाराधनतदालयादिकरणरूपायां पुण्यक्रियायाम् ॥ अग्निनारद प्रतिब्रह्मोवाच। ध्यानयोगस्तु योगस्य यस्तु साधनमात्मना। यस्तुबाह्यार्थ संयोग क्रियायोग सउच्यते ॥ प्रधान कारणं योगोमुक्तेर्मुनिवरोत्तम। क्रियायोगस्तु योगस्य परम तातसाधनमिति वह्निपुराणम् ॥

क्रियावान्। त्रि। कर्मणिरते। कर्मठ इत्युच्यते ॥ क्रियाश्वास्ति। तदस्यास्तीति मतुप् ॥

क्रियावसन्न। त्रि। साक्ष्यादिनाप्राप्तपराजये ॥ यथा। स्वयमभ्युपपन्नोपि स्वचर्ये।वसितोऽपि सन्। क्रियावसन्नो वादेतु परसभ्यावधारणमिति॥

क्रियावादी। त्रि। प्रमाणशादिनि ॥ कार्यवादिनि। पुकारू फर्यादी इति चभाषा ॥

क्रियासमभिहार। पु। पौन पुन्ये ॥ भृशार्थे ॥ क्रियाणाम् क्रियाविशेषाणांसमभिहार समुच्चय ॥

क्रियासाधनम्। न। ध्याने ॥ द्रव्ये ॥ ध्यानद्रव्याणां सम्यवस्य कृतः क्रिया

पचार ॥

क्रियेन्द्रियम्। न। कर्मेन्द्रिये ॥ क्रियासाधक मिन्द्रियम् ॥

क्रीड। पु। परीहासे ॥ इतिशब्दरत्नावली ॥

क्रीडनम्। न। खेलायाम् ॥

क्रीडनकम्। न। क्रीडासाधने। खिलौना इति भाषा ॥ तेमय्यपेताऽखिलचापलेऽर्भके दान्तेऽधृतक्रीडनकेऽनुवर्त्तिनि। इति भागवतम् ॥ पुंलिङ्गोपि यथा। दृष्टात्मजयिनोव्यग्रान् नृपान्हसति भूरियम्। अहोमां विजिगीषन्ति मृत्यो. क्रीडनकानरा इति ॥

क्रीडा। स्त्री। खेलायाम्। परीहासे॥ अवज्ञाने। अनादरे॥ केलिप्रकारे॥

क्रीडाताल। पु। तालविशेषे ॥ एकएवद्रुतो यत्रक्रीडातालसकथ्यते। अपरं नियमं विनेतिदामोदरोक्तेः॥

क्रीडायानम्। न। क्रीडारथे। पुष्परथे ॥

क्रीडारत्नम्। न। रतौ ॥

क्रीडारथः। पुं। क्रीडार्थरथे॥ अथपुष्परथ. क्रीडायानं न समराय यत् ॥

क्रीडोपस्करम्। न। क्रीडासाधने ॥

क्रीत। त्रि। क्रयकर्मणि। कृतक्रये। मूल्यप्रदानेन गृहीते। क्रीता इ

तिभाषा ॥ दीयमान न गृह्णाति क्रीतम् पण्यन्तुय क्रयी । सएवा ऽस्य भवेद्दोषो विक्रेतुर्यो ऽप्रयच्छत. इतिनारद ॥

क्रीतक । पु । द्वादशपुत्रान्तर्गतपुत्र विशेषे ॥ यथा । क्रीणीयात् य स्त्व पत्यार्थं मातापित्रो र्यमन्तिकात् । स क्रीतक सुत स्तस्य सदृशो ऽसदृ शो ऽपिवेति ॥ न । क्रये ॥ विनि मये ॥

क्रीतानुशय. । पु । द्रव्यं क्रीत्वा पश्चा दनुतापे ॥ यथा । क्रीत्वामूल्येन य. पण्यक्रेता न बहुमन्यते । क्रीतानु शयइत्येतद्विवादपदमुच्यते इतिया ज्ञवल्क्य. ॥

क्रुङ् । पु । स्त्री । क्रौञ्चपक्षिणि ॥ क्रु ञ्चति गच्छति । क्रुञ्चकौटिल्याल्पी भावयो । ऋत्विगितिसाधु. ॥

क्रुञ्च । पु । क्रौञ्चखगे ॥ क्राञ्चगिरै ॥

क्रुञ्चा । स्त्री । क्रौञ्चविहग्याम् ॥ अ आदित्वाट्टाप ॥ वीणाभेदे इतिक श्चित् ॥

क्रुञ्ची । स्त्री । वराङ्गप्रभेदे ॥

क्रुद्ध । त्रि । उत्पन्नक्रोधे । क्रोधयुक्ते ॥ क्रुधकर्त्तरि. कुलोविवेक: ॥

क्रुध्यत् । त्रि । सञ्जातक्रोधे ॥

क्रुत् । स्त्री । कोपे ॥ क्रुधकोपे । सं म्पदादित्वात्क्विप् ॥

क्रुधा । स्त्री । कोपे । क्रोधे ॥ क्रुध° । स° क्विप । भागुरिमते टाप् ॥

क्रुश्वा । स्त्री । शृगाले ॥ क्रोशति । क्रु श° । शीङ् क्रुशोरित्यादिनाक्वनिप् ॥

क्रुष्टम् । न । रोदने ॥ रावे ॥ क्रुशआ ह्वाने रोदनेच । भावेक्त ॥

क्रूर' । त्रि । कठिने ॥ घोरे ॥ नृशंसे ॥ परद्रोहकारिणि ॥ उष्णे ॥ पु । भू ताङ्कुशवृक्षे ॥ रक्तकरवीरे ॥ श्येनप क्षिणि ॥ कङ्कखगे ॥ कृन्तति । कृ तीछेदने । कृतेश्छक्रूचेतिरक् प्र त्ययो धातो क्रूआदेशश्च ॥ न । ग्र हणविशेषेषु ॥ पूर्वान्वय याम्यम घे उग्रक्रूर कुजस्तवेत्युक्ते. ॥

क्रूरकर्म्मा । पु । कटुतुम्बीवृक्षे । कटुतु म्बिन्याम् ॥ त्रि । भयानककर्मक र्त्तरि ॥

क्रूरगन्ध: । पु । गन्धके ॥

क्रूरगन्धा । स्त्री । कन्थार्याम् । तीक्ष्ण कण्टकायाम् ॥

क्रूरदृक् । पु । शनैश्चरे ॥ त्रि । पिशुने ॥

क्रूरधूर्त्त: । पु । कृष्णधत्तूरके ॥

क्रूरप्रसादन. । पु । भक्ते ॥

क्रूररावी । पु । द्रोणकाके ॥

क्रूरलोचन. । पु । शनौ । शनैश्चरे ॥

क्रूरसत्त्व. । पु । ग्राह्यादौ ॥

क्रूरा । स्त्री । रक्तपुनर्नवायाम् ॥

क्रूराकृति. । पु । रावणे ॥ त्रि । भयानकाऽऽकारे ॥ क्रूरा आकृतिर्यस्य ॥

क्रेयि । पु । क्रयणे ॥

क्रेतव्य । त्रि । क्रयार्हे । क्रेयवस्तुनि ॥

क्रेता । त्रि । क्रयकर्त्तरि ॥ यथा । क्रेता तत्र गृहारामान् विनिर्मोति भनक्ति वा । मूल्यं दत्त्वापि नाप्नोति स्थावरं सन्निधिस्थित इति ॥ क्रीणाति । डुक्रीञ् द्रव्यविनिमये । तृन् तृच् वा ॥

क्रेय । त्रि । क्रेतव्यमात्रके । हट्टे प्रसारणयोग्ये ॥ क्रीयते । डुक्रीञ्० । अचोयत् । गुण ॥ कीनने योग्य वस्तु इति भाषा ॥

क्रोडः । पु । शनौ ॥ उदग्ग्रामे ॥ शूकरे ॥ वाराहीकन्दे ॥ न । स्त्री । अङ्के । भुजान्तरे ॥ रक्षसि ॥ क्रुध्यते । क्रुडबाल्ये । घञ् ॥ क्रुडनम् । क्रुडघनत्वे । घञ्वा ॥ क्रोडो ऽस्यास्ति । अर्श आदिभ्यो ऽच् वा ॥

क्रोडकन्या । स्त्री । वाराहीकन्दे ॥

क्रोडकशेरु. । पु । मुस्तके ॥

क्रोडचूडा । स्त्री । महाश्रावणिकावृक्षे ॥

क्रोडपर्णी । स्त्री । कण्टकारिकायाम् ॥

क्रोडपादः । पु । कच्छपे ॥

क्रोडा । स्त्री । अश्वानामुरसि ॥ भुजान्तरे ॥

क्रोडाङ्घ्रि' । पु । कच्छपे । कमठे ॥

क्रोडी । स्त्री । वाराहीकन्दे ॥

क्रोडीकरणम् । न । आलिङ्गने ॥

क्रोडीकृत । त्रि । विषयीकृते ॥

क्रोडीकृति. । स्त्री । आलिङ्गने । सङ्ग्रहणे ॥

क्रोडीमुख. । पु । गण्डके । खड्गे । गैंडा इति भाषा ॥

क्रोडेष्टा । स्त्री । मुस्तायाम् ॥

क्रोथ. । पु । हनने ॥

क्रोध । पु । अमर्षे । कोपे ॥ स्वपरापकारप्रवृत्तिहेतावभिज्वलनात्मके ऽन्तःकरणवृत्तिविशेषे । परानिष्टाभिलाषे । अनिष्टविषयद्वेषे । चेतोविकार विशेषे । नेत्रलौहित्यादिहेतौ दोष विशेषे ॥ क्रोधान्धाः किंनकुर्वन्ति ॥ स्वकृत्यं क्रोध एवकथयति । अन्धीकरोमि भुवनं बधिरीकरोमि धीरं सचेतनमचेतनतां नयामि । कृत्यं न पश्यति नचात्महितं शृणोति धीमानधीतमपि न प्रतिसन्दधातीति ॥ क्रोधवशेन सर्वस्यान्ध्यं भवति अधैर्यं भवति हृदयशून्यता च भवतीतिभाव । न प्रतिसन्दधाति नसस्मरतीत्यर्थं ॥ * ॥ चर्मै

क्रोधविजये समर्थे तिविवेकिन ॥ क्रोधकाय विभज्यायेतिशकुनशास्त्र

म् । क्रोधनम् । क्रुधकोपे । भावे घञ् ॥ ३८ वत्सरे ॥ विषमस्य जगत्सर्वं क्याकुलसमुदाहृतम् । जनाना जायते भद्रे क्रोधे क्रोध परम्परम् ॥ … क्रोधाद्भवति स … ॥ … व्यसनात्मगो ते व्यसनगणे ॥ यथा । पैशुन्य साहस द्रोह ईर्ष्या । सूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्य क्रोधजोपि गणो ष्टकइति ॥ क्रोधाज्जायते । जनी० ड ॥

क्रोधन । त्रि । कोपिनि । अमर्षके । क्रोधविशिष्टे ॥ क्रोधशील । क्रुध० । क्रुधमण्डेतियुच् ॥ ५९ वत्सरे ॥ रोगोत्करणादुर्भिक्षविरोधोवक्रुसङ्कुल । क्रोधेतुविषमंसर्वसमाख्यातंक रप्रिये ॥

क्रोधना । स्त्री । कोपवत्यांस्त्रियाम् । भामिन्याम् ॥ क्रुध्यतितच्छीला । क्रुध० । युच् । टाप् ॥

क्रोधमूर्च्छित । पु । चोरनामगन्धद्रव्ये ॥ त्रि । अतिकोपने ॥

क्रोधवशिः । स्त्री । चैत्रायेनवराचे ॥ क्रोधवशिर्महेशानी चैत्रीयनवरा चकमिण्यागमात् ॥

क्रोधी । त्रि । क्रोधसयुक्ते । क्रोधने ॥

महिषे ॥ क्रोधोस्यस्य । इनि ॥

क्रोश । पु । अष्टसहस्रहस्तपरिमाणे । द्वयसहस्रदितये । इतिलीलावती ॥ चतुस्सहस्रहस्तपरिमाणे । सह स्रधनुषि । गव्यूते । कोस इतिभाषा । इतिहेमचन्द्र ॥ मुहूर्ते ॥ यथा । द्वयद्यके तु या पूजा तत् सर्वमक्षय भवेत् । षष्ठक्रोशे महेशानि तत स र्वं मन्त्रोपमम् ॥ सप्तमक्रोशकेदे वि सर्वं चोरोपम भवेत् । अष्टमक्रो शके देवि ब्रह्मतुल्य न सशय ॥ अ तः पर महेशानि विषतुल्य न सश य इति गुप्तसाधनतन्त्रे ६ पटल ॥

क्रोशताल । पुं । ढक्कायाम् ॥

क्रोशध्वनि । पु । ढक्कायाम् ॥

क्रोशयुगम् । न । गव्यूतौ । गोरुते । क्रोशद्वये ॥ क्रोशयोर्युगम् ॥

क्रोष्टा । पु । शृगाले ॥ क्रोशति । क्रुश आह्वाने । सितनिगमीतितुन् । तृ ज्वत् क्रोष्टु ॥

क्रोष्टुकपुच्छिका । स्त्री । } पृश्निपर्ण्याम् । गोलोमिकायाम् ॥
क्रोष्टुकमेखला । स्त्री । }
क्रोष्टुपुच्छी । स्त्री । }

क्रोष्टुफल । पुं । इङ्गुदीवृक्षे ॥

क्रोष्टुविन्ना । स्त्री । पृश्निपर्ण्याम् ॥ क्रोष्टुभिर्विन्ना विचारितेवद्धत्तेवेतिवा ॥

क्रोष्टेष्टु । पु । श्वेतेक्षौ ॥

क्रोष्ट्री । स्त्री । शृगालिकायाम् ॥ कृष्ण विदार्याम् ॥ लाङ्गल्याम् ॥ शुक्लविदार्याम् ॥ क्रोशति । क्रुशआह्वाने । सितनिगमीतितुन् । स्त्रियाञ्चेति तृज्वत् । ऋन्नेभ्य इतिङीप् ॥

क्रौञ्च । पु । कोँचवक इतिगौडभाषाप्रसिद्धे पक्षिणि । क्रुञ्च ॥ ढौंक इतिलोकप्रसिद्धे शरदिहङ्गे ॥ पर्वतविशेषे ॥ कुररपक्षिणि ॥ अर्हताञ्जे ॥ दैत्यविशेषे ॥ दधिमण्डोदसमुद्रेणावृते षोडशलक्षयोजनपरिमिते द्वीपविशेषे । इतिश्रीभागवतम् ॥ क्रौञ्चे क्रौञ्चो हतो दैत्य क्रौञ्चाद्रौ हेमकन्दरे । स्कन्देन युद्धा सुचिरं चिचमायी सुमायिना ॥ समेत सत्य दैत्यस्य ख्यात स्विचेण कर्मणा । केतुता मगमत् तस्य नाम्ना क्रौञ्चःसउच्यते इतिमृगेन्द्रसंहिता ॥ क्रुञ्चति । क्रुञ्च० । ऋत्विगादिनाक्विन् । प्रज्ञाद्यण् ॥

क्रौञ्चदारक: । पु । कार्त्तिकेये ॥ दारयति । दृविदारणे । ण्यन्तात्ण्वु । क्रौञ्चस्य गिरिविशेषस्य दारण' ॥

क्रौञ्चनिसूदन । पु । क्रौञ्चमर्दने । षडानने । कार्त्तिकेये ॥

क्रौञ्चा । स्त्री । क्रौञ्चखगस्य भार्याया म् ॥ गाद्धयाम् ॥

क्रौञ्चादनम् । न । घेञ्चुली घेचु इति गौडभाषाप्रसिद्धेघेञ्चुलिकायाम् ॥ चिञ्चोटके । चेचुको इतिगौडभाषा ॥ मृणाले ॥ पिप्पल्याम् ॥

क्रौञ्चादनी । स्त्री । पद्मवीजे ॥

क्रौञ्चारण्यम् । न । जनस्थानात् क्रोशत्रयान्तरे दण्डकारण्यपार्श्ववर्त्तिन्यरण्ये ॥

क्रौञ्चाराति । पुं । कार्त्तिकेये । कुमारे ॥ क्रौञ्चस्य अराति ॥ परशुरामे ॥

क्रौर्य्यम् । न । कोपजायामनोवृत्तौ ॥ क्रूरत्वे ॥

क्रौशशतिक । पु । भिक्षौ ॥ क्रोशशतादभिगमन मर्हति । ततोभिगमनमर्हतीति ठञ् ॥ त्रि । शतक्रोशगमनकर्त्तरि ॥ क्रोशशतङ्गच्छति । क्रोशशतयोजनशतयोरिति ठञ् ॥

क्लम. । पु । आशासे । श्रमे ॥ योऽनायास श्रमो देहे प्रवृद्ध श्वासवर्जित । क्लम: स इति विज्ञेय इन्द्रियार्थप्रवाधक ॥ ग्लानौ ॥ क्लमनम् । क्लमुग्लानौ । घञ् । नोदात्तोपदेशस्येतिनवृद्धि ॥

क्लमथ' । पु । क्लमे ॥ क्लमनम् । क्लमु० । शमादिभ्योथच् ॥

क्लान्त । त्रि । क्लान्तियुक्त । श्रान्ते । श्रमार्त्ते ॥

क्लिन्न । त्रि । आर्द्रे । भीजा इतिभाषा ॥ क्लिद्यति स्म । क्लिन्दू आर्द्रीभावे । अकर्मकत्वात् कर्त्तरि क्त ॥

क्लिन्नाक्ष । त्रि । श्लेष्मादिना क्लिन्नचक्षुषि । चक्षुरोगे ॥ क्लिन्ने अक्षिणी अस्य । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् ॥

क्लिशित । त्रि । क्लिष्टे । क्लेशान्विते ॥ क्लिश्यते स्म । क्लिश उपतापे क्लिशू विबाधने वा । क्त । क्लिश क्त्वानिष्ठयोरिति वेट् ॥ न । अन्योन्यपराहते वचसि ॥

क्लिष्टम् । न । पूर्वापरविरुद्धे वचसि । परस्परपराहते । सङ्कुले ॥ त्रि । क्लिशिते । क्लेशयुक्ते ॥ क्लिश्यते स्म । क्लिश° । क्लिशू° वा । क्त । क्लिश क्त्वानिष्ठयोरिति पक्षे इड भाव ॥

क्लिष्टि । स्त्री । क्लेशे ॥ सेवायाम् ॥

क्लीतम् । न । अधाष्टर्ये ॥

क्लीतकम् । न । मधुयष्ट्याम् ॥ क्लीवनम् । क्लीट्ट अधाष्टर्ये । भावे क्त । आगमशासनमनित्यम् । क्लीतम् माष्टर्यं कायति । कशब्दे । चुरादिभ्यो णिजेवेतिणिजभाव । अन्येभ्योपीतिड ॥

क्लीतकिका । स्त्री । नील्याम् ॥ क्लीतकं क्रयेोऽस्यस्या । कपित्थकादित्वात्सत्त्वम् । अतइनिठनाविति ठन् ॥

क्लीतनकम् । न । मधूलिकायाम् ॥

क्लीव । पु । न । नपुंसके । तृतीया प्रकृतौ ॥ तल्लक्षण यथा । न मूत्र फेनिल यस्य विष्ठा चाप्सु निमज्जति । मेढ्रश्चोन्मादशुक्राभ्या हीन क्लीव स उच्यते इति ॥ त्रि । विक्रमहीने ॥ क्लीवते । क्लीट्ट अधाष्टर्ये । इगुपधेति क । अयमोष्ठ्योपध । केचित्तु पवर्गमध्ये पाठस्तु भ्रमाद्बयोरभेदाबोध्य ॥ धर्मकृत्यादौ निरुत्साहे ॥

क्लृप्त । त्रि । रचिते । कल्पिते ॥ विहिते । निर्म्मिते ॥

क्लेदः । पु । पूतीभावे ॥ यथा । यदस्थितस्य पद्मस्य बन्धू वरुणभास्करौ । पदच्युतस्य तस्यैव क्लेदक्लेशकरावुभाविति ॥ क्लेदनम् । क्लिन्दू आर्द्रीभावे । घञ् ॥

क्लेदा । पु । चन्द्रे । इन्दौ ॥ क्लिद्यति । क्लिन्दू° । श्वन्नुक्षन पूषन् प्लीहन्क्लेदन्निति कनिन् प्रत्यय ॥

क्लेदन । पु । कफे ॥ पञ्चप्रकारश्लेष्मान्तर्गतश्लेष्मविशेषे ॥ न । आर्द्रीभावे ॥

क्लेदु । पु । चन्द्रमसि । हिमांशौ ॥ क्लिद्यति । क्लिन्दू° । शस्वृस्निहित्रप्य

सिवसिद्धनिक्लिदिवन्धिमनिभ्यश्चे त्यु । क्लिन्दति वा । क्लिदिपरिदेवने ॥

क्लेश । पु । दुखे ॥ कोपे ॥ व्यवसाये ॥ रोगादौ ॥ अविद्यास्मितारागद्वेषाभिनिवेशेषु ॥तत्र विद्याविरोधिनी अविद्या । अहं मस्मीत्यहङ्कारोऽस्मिता । इच्छाविशेषो राग । वैरभावोद्वेष । मरणभय मभिनिवेश ॥ क्लिश्यन्त्यनेन । क्लेशन वा। क्लिशूविवाधने। घञ्। अत्वाकर्त्तरि॥

क्लेशक । पु । क्लेशशीले ॥ क्लिश्यते तच्छील । क्लिशउपतापे क्लिशू° वा । निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् इति वुञ् ॥

क्लेशापह । पु । पुत्रे ॥ क्लेशमपहन्ति इति विग्रहे अपेक्लेशतमसोरिति अपपूर्वाद्धन्ते क्लेशकर्मोपपदेड प्रत्यय ॥

क्लेशित । चि । क्लेशयुक्ते ॥

क्लैतकिकम् । न । मद्ये ॥

क्लैव्यम् । न । श्रोजस्तेजआदिभङ्गरूपाधैर्ये । निष्पौरुषत्वे ॥ क्लीवस्यभाव कर्म वा । ष्यञ् ॥

क्लोम । न । फुप्फुसे । औदर्यजलाधारे । तिलके ॥ वाङ्को हृदयोर्मध्येवच तन्मध्ये हृदयम् तत्पार्श्वेक्लोमपिपासास्थानमितिवेद्या । अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहिशिरामूल तृष्णाच्छादनक मतम् ॥ एतत्तु वातरक्तजम् । तदुक्तंवृद्धवाग्भटेन । रक्तादनिल सयुक्तात् कालेयकसमुद्भव इति ॥ क्लवते । क्लुङ्गतौ । मनिन् ॥

क्व । अ । कुत्रेत्यर्थे । कहा इति भाषा॥ कस्मिन् । किमोऽदित्यति प्रत्यये क्वातीतिकिम क्वादेश ॥ अत्यन्तासम्भावनाया क्वच प्रयुज्यते ॥ द्वौक्वशब्दौ महदन्तर सूचयत ॥

क्वचन । अ । क्वचिदर्थे ॥

क्वचित् । अ । कस्मिंश्चित्काले ॥ कस्मिंश्चिद्देशे ॥ कदाचिदर्थे ।

क्वण । पु । वीणाया क्वणिते । निक्वणे ॥ ध्वनिमात्रे ॥ कटकादिभूषणशब्दे॥ शब्दकरणे ॥ क्वणनम् । क्वण शब्दे । क्वणो वीणायाञ्चेत्यप् ॥

क्वणनम् । न । वीणाया क्वणिते । क्वणे॥ क्वणो वीणायाञ्चेत्यवभावे ल्युट् ॥ पु । हरिडकायुते । छोटीघाडी इति भाषा । मञ्जुम्भ्रट इतिचमर्षेती वभाषा इतिचिकाण्डशेष. ॥

क्वथित । चि । अतिशयपक्वव्यञ्जनदुग्धमूलादौ । निष्पक्वे । कषाये । क्वाथे

।काढा इति भाषा ॥ क्ष्यते स्म । कथेनिष्पाके । क्त । स्त्रट् ॥

कथिता । स्त्री । कढी इतिप्रसिद्धे व्यञ्जने ॥ यथा । स्थाल्या घृतेवातैले वा चरित्रा हिङ्गु भर्जयेत् । अवलेहनसंयुक्ततक्रतचैवनि क्षिपेत् ॥ एषा सिद्धा समरिचा कथिता कथिता बुधै । कथिता पाचनी रुच्या च लीवह्निप्रदीपनी ॥ कफानिलविबन्धघ्नोकिञ्चित् पित्तप्रकोपनी ॥ अस्ली कामलस्याः शुष्कावा किञ्चित् कथित या युता । बृंहणा रोचना वृष्या बल्या वातगदापहा. ॥ कोष्ठशुद्धिकराःशुक्ता किञ्चित् पित्तप्रकोपना' । अर्दिते सहनुस्तम्भे विशेषेण हिता स्मृता इति ॥

काथः । पु । कथे ॥ कथो वीणायाच्च स्यवभावे पाणिको घञ ॥

काथ. । पु । अतिदुःखे ॥ व्यसने ॥ द्रव्यस्यनिष्पाके ॥ तुर्याशशेषमक्रे ॥ यथा । काथे विचूर्णितं चिप्त्वा तत् षोडशगुणा म्पचेत् । पादशेष प्रकर्त्तव्य मेष काथविधि स्मृत. ॥ काथ्य मानतोय त्रिविधम् । पादावशेषम् । अर्द्धावशेषम् । त्रिपादावशेषच्च । अस्यनाम पारिभाषिकमुष्णोदकम् । तत्रपादावशेषंकफनाशकं लघु अग्निवर्द्धकच्च । अर्द्धावशेष पित्तनाशकम् । त्रिपादावशेष वातनाशकम् । तेषा मध्ये त्रिपादावशेष जलं हेमन्ते शिशिरे चप्रशस्तम् । वसन्ते पादावशेषम् । शरद्ग्रीष्मेचार्द्धावशेषम् । वर्षायामष्टभागावशेषं जलं प्रशस्तम् ॥ दिनपक्व जल रात्रौगुरु रात्रिपक्वंजल दिवागुरु भवतीति विवेक ॥

काथोद्भवम् । न । कर्प्पर्य्याम । कृत्रिमरसाञ्जने ॥

चः । पु । सवर्णे ॥ राक्षसे ॥ नरसिंहे ॥ विद्युति ॥ क्षेत्रे ॥ नाशे ॥ क्षेत्रपाले ॥ एकपञ्चाशन्मातृकाणाना मन्तिमेवर्णे ॥ अस्यककारषकारसंयोगजन्यत्वेन पृथग्वर्णत्व केचिन्नमन्यन्ते । तेषां मते तन्त्रोक्तैकपञ्चाशद्वर्णाऽनुपपत्तिरागमोक्तरीत्या च कारस्य मेरुत्वेन कथनाऽनुपपत्तिश्च । तस्मात् चकारस्य पृथग्वर्णत्व मन्तव्यम् । यथोक्तमागमे । अकारादिक्षकारान्ता वर्णा पञ्चाशदीरिता. । संयोगात् कषयोरेव चकारामेरुरीरितइति ॥ तथापिमेदिनीहेमचन्द्रादिकोषानुरोधात् ककषसंयोगजत्वेन कादिवर्णमध्येलिखित ॥

क्षणः । पु । पर्व्वणि ॥ उत्सवे ॥ यथा। क्षणेऽस्या कुशलिन्यइति ॥ व्यापारे ॥ व्यापारविकलत्वे । निर्व्यापारस्थितौ ॥ अवसरे ॥ परतन्त्रतायाम् ॥ मध्ये ॥ अनेहसोमानविशेषे । चिंशत्कलापरिमितेकाले । दशपलपरिमिते ॥ लवद्वये ॥ निमेषक्रियावच्छिन्नस्यकालस्य चतुर्थभागे ॥ यथा । आयुष क्षणएकोपिनलभ्यःस्वर्णकोटिभिः । सचेत् तुविफलोयाति कानो हानिस्ततोऽधिकेति ॥ क्षणोतिदुःखम् । क्षणुहिंसायाम् । अच् ॥

क्षणक्षेप । पु । क्षणविलम्बे ॥

क्षणद । पु । गणके ॥ न । जले ॥ क्षणं ददाति । डुदाञ् । आत इतिकः ॥

क्षणदा । स्त्री । निशि । रात्रौ ॥ क्षणमुत्सवं निर्व्यापारस्थितिं वा ददाति । कः । टाप् ॥ हरिद्रायाम् ॥

क्षणनम् । न । वधे ॥ क्षणोतेर्भावे ल्युट् । त्यागे । दाने ॥

क्षणनिःश्वास । पु । शिशुमारे ॥ क्षणे निःश्वासोऽस्य ॥

क्षणप्रभा । स्त्री । विद्युति ॥ क्षणं प्रभायस्याः ॥

क्षणभङ्गः । पु । क्षणनाशे ॥

क्षणभङ्गुर । त्रि । क्षणैकनाश्ये ॥ दृष्टनष्टे ॥

क्षणिक । त्रि । अनित्ये ॥ क्षणमात्रस्थायिनि ॥

क्षणिकत्वम् । न । तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वे ॥ यथा। आकाशे शब्दस्य प्रथमक्षणेउत्पत्तिः द्वितीयक्षणे स्थितिः तृतीयक्षणे विनाश ॥

क्षणिका । स्त्री । तडिति । विद्युति ॥

क्षणिनी । स्त्री । निशि ॥

क्षतम् । न । ईर्म्मे । व्रणे । स्त्रवद्रक्तपूयादौ । घाव इतिभाषा ॥ क्षणनम् । क्षणु० । नपुंसके भावे क्तः । अनुदात्तोपदेशस्येत्यादिना णलोपः ॥ खण्डिते ॥ पक्षगृहे ॥ नष्टे ॥

क्षतकास । पु । पञ्चविधकासरोगान्तर्गतकासरोगविशेषे ॥

क्षतघ्नः । पु । कुकुरोंधा इतिप्रसिद्धे क्षुपविशेषे ॥ क्षतं हन्ति । हन० । हन्तेरमनुष्येत्यादिनाटक् ॥

क्षतघ्नी । स्त्री । द्रुमामये । लाक्षायाम् ॥ टित्वात् ङीप् ॥

क्षतजम् । न । रक्ते । रुधिरे ॥ पूये ॥ क्षताज्जातम् । जनी० । पञ्चम्यामितिड ॥

क्षततृष्णा । स्त्री । शस्त्रादिक्षतयुक्तस्य पिपासायाम् ॥

क्षतविध्वंसी । पु । वृन्दारकवृक्षे ॥

क्षतव्रण । पु । षट्प्रकारव्रणरोगान्तर्गतव्रणरोगविशेषे ॥

क्षतव्रत । त्रि । ध्वस्तव्रते । अवकीर्णिनि । खण्डित ब्रह्मचर्यादिव्रते ॥ क्षतं खण्डित व्रतमस्य ॥

क्षतहरम् । न । अगुरुणि ॥ त्रि । क्षतघ्ने ॥

क्षतिः । स्त्री । क्षते ॥ अपचये । क्षये । घटती इति भाषा ॥ यथा । जलमुचि वितरणविमुखे का क्षतिरस्यखिलाम्बुपातृणाम् । केवलघनरसभक्षी चातकपक्षी क्रमाक्षयतीक्ष्णुद्गट' ॥

क्षतोदर. । पु । उदररोगविशेषे ॥

क्षत्ता । पु । शूद्रात् क्षत्रियाया मुत्पन्ने ॥ शूद्रा दायोगवः क्षत्ता चण्डालश्चाधमो नृणाम् । वैश्यराजन्यविप्रासुजायन्ते वर्णसङ्करा ॥ प्रतीहारे ॥ सारथौ ॥ भुजिष्यातनये । दासीपुत्रे ॥ नियुक्ते ॥ वेधसि ॥ क्षदति क्षयते वा । क्षदि वौच संभृतौ । तृन्तृचौशसि क्षदादिभ्यः संज्ञायांचानिटौ ॥ क्षत्तार्यौशूद्रयो. सुतश्चामर ॥

क्षत्र । पु । क्षत्रिये ॥ न । तगरे ॥ शरीरे ॥ क्षदति । क्षदसंवरणे वौच. । गुधृवीपजिवञ्चियमिसदिक्षदिभ्यः ॥ क्षतात् त्रायते वा । सुपीति योगविभागात् कप्रत्ययः । पृषोदरादित्वात् पूर्वपदस्याकारलोप ॥ यद्वा । क्षणनम् । क्षणु हिंसायाम् । सम्पदादित्वात् क्विप् । गमादित्वादनुनासिकलोप । तुक् । क्षतोमाशात् त्रायते । त्रैङ् पालने । सुपीतियोगविभागात्क. ॥ क्षत्रियजातेःकर्मणि ॥

क्षत्रबन्धु. । पुं । क्षत्रियस्वनिर्देशे ॥ निन्द्यक्षत्रिये । अधिक्षिप्तक्षत्रिये ॥ क्षत्रस्य क्षत्रियजातेर्बन्धुरेवा ऽनुष्ठानाभावादिति जातिक्षत्रियो ऽभिधीयते ॥

क्षत्रविद्या । स्त्री । धनुर्वेदे ॥

क्षत्रवृक्षः । पु । मुचुकुन्दे ॥

क्षत्रिय. । पु । सर्वोपसर्जनरज प्रधानायां जातौ । मूर्द्धाभिषिक्ते । राजन्ये । बाहुजे ॥ क्षदति रक्षति जनान् । क्षदे ष्ट्रन् । गुधृवीपचीत्यादिना त्रोवा । क्षतात् त्रायते वा । सुपीति योगविभागात् कप्रत्यय. । पृषोदरादि ॥ यद्वा क्षदति क्विब्लोपप दात् त्रायतेः कप्रत्यय. । क्षत्रस्यापत्यम् । क्षत्राद्घ. ॥ क्षत्रजसेवते कर्म वेदाध्ययनसंयुत' । दानादानरतिर्यस्तु सवै क्षत्रियउच्यते ॥ क्षत्रि-

या सूर्यचन्द्रवंशजा राजानः। तेषु कले सहस्रवर्षपर्यन्तमासन्। ततो महानन्दिसुतो नन्दः शूद्रायामुत्पन्न शतवर्षपर्यन्तं राज्यं चकार। तदन्ते चाणक्यनामाब्राह्मणो नन्दं तत्पुत्रांश्च हत्वा मुरवंशजं चन्द्रगुप्तं राजानकृतवान्। कलौ नन्दान्त क्षत्रियवंश। इतिश्रीभागवते १२ स्कन्धे १ ऽध्यायात् सगृहीतम्॥

क्षत्रिया। स्त्री। क्षत्रियायाम्॥ अर्यक्षत्रियाभ्यां वा स्वार्थे इत्यानुगागमाभावेटाप्॥ क्षत्रियजातौ॥ योपधत्वान्न ङीष्॥

क्षत्रियाणी। स्त्री। क्षत्रियजातीयायाम्॥ अर्यक्षत्रियाभ्यामितिपाक्षिकआनुगागमोऽङीषच॥

क्षत्रियी। स्त्री। क्षत्रियपत्न्याम्॥ क्षत्रियस्यस्त्रीत्यर्थे पुंयोगादाख्यायामितिङीष्॥

क्षन्तव्य। त्रि। क्षमणीये॥

क्षन्ता। त्रि। क्षमायुक्ते। सहिष्णौ॥ क्षमते। क्षमूष॰। तच्छील। तृन्॥

क्षपण। त्रि। निर्लज्जे॥ इतित्रिकाण्डशेष॥

क्षपणक। पु। बुद्धभेदे। दिगम्बरसिद्धान्ते॥ सन्न्यासिनि॥ यथा। एक क्षपणक आकाशर्ता तत्र क्षपणक इव आकाशः। यत्र क्षपणक इव आकाश तत्र क्षपणक आकाशः॥ इत्युद्भटः॥

क्षपण्यु। पु। अपराधे॥

क्षपयिता। त्रि। नाशयितरि॥ क्षपयति। क्षै॰। तृच्॥

क्षपा। स्त्री। निशि। रात्रौ॥ क्षपयति चेष्टाम्। क्षैक्षये। अन्येभ्योऽपिदृश्यन्तात् पचाद्यच्॥ हरिद्रायाम्॥

क्षपाकर। पु। चन्द्रे। नक्षत्रेशे॥ क्षपांकरोति। कृञोहेतुताच्छील्यानुलोम्येषु इतिटः॥ कर्पूरे॥

क्षपाचर। पु। राक्षसे॥

क्षपाट। पु। राक्षसे॥ क्षपायामटति। अट॰। पचाद्यच्॥

क्षपित। त्रि। दूरीकृते॥ नाशिते॥ विस्मृते॥

क्षमम्। न। युक्ते॥ त्रि। शक्ते॥ हिते॥ क्षमावति॥ पु। धूसरे ऽतिह्रस्वे चटके। धान्यभक्षणे॥ क्षमते क्षम्यते वा। क्षमूषसहने। पचाद्यच्। घञ्वा। नोदात्तोपदेशस्येति नवृद्धि॥

क्षमणीय। त्रि। क्षन्तव्ये॥ क्षमेरनीयर्॥

क्षमता। स्त्री। योग्यतायाम्। सामर्थ्ये॥ अर्थप्रकाशनसामर्थ्ये॥ यथा

। यद्दिर्हैधसहम दामी त्यनहामीति पदस्य छेदनप्रकाशनसामर्थ्यात् यद्दिरित्यस्य आत्तृतद्भेप्रकाशनसामर्थ्यात् आत्तृतद्भेच्छेदने समुदायमन्त्रस्यनियोगो ऽवगम्यते ॥ इतिधर्मदीपिका ॥

क्षमा । स्त्री । भूमौ ॥ तितिक्षायाम् । क्षान्तौ । सत्यपि सामर्थ्ये परिभवहेतुप्रति क्रोधस्यानुत्पत्तौ आक्रुष्टस्य ताडितस्य वा निर्विकार चित्ततायाम् । हर्षविषादयो रविकृतचित्ततायाम् ॥ तल्लक्षणंयथा । बाह्ये चाध्यात्मिके चैव दुःखे चोत्पातिके क्वचित् । न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तितेति ॥ अपिच । आक्रुष्टोऽभिहतो यस्तु नाक्रोशेन्न हनेदपि । अदुष्टैर्वाङ्मन कायै स्तितिक्षुस्त्व माक्षमेति ॥ क्रोधजेतु क्षमामेव मन्यन्तेखलु साधव । यथाऽऽह सा । क्रोधान्धकार विकटभ्रुकुटीतरङ्ग भीमस्य सान्ध्यकिरणारुणघोरदृष्टेः । निष्कम्पनिर्मलगभीरपयोधिधीरा धीरा. परस्य परिवादगिरः क्षमन्ते ॥ क्रमोनवाच्या शिरसो नमूर्द्धन चित्ततापोनतनोर्विमर्दे. । नचापिहिंसादिरनर्थयोग. श्लाघ्यापरक्रोधजये ऽक्षमेकेति ॥ क्रोधजयो पायमप्याह । क्रुद्धेस्तेरमुखावधीरणमयाविष्टे प्रसादक्रमोव्याक्रोशेक्षुशलोक्तिरात्मदुरितच्छेदात्सवस्ताडने । धिग्जन्तोरजितात्मनोऽस्यमहती दैवोपेता विपत् दुर्वारेति दयारसार्द्रमनसां क्रोधस्य कुतोदय इति ॥ स्वधर्मचिन्तामपहाययोयं मत्पापमुद्धर्तुमिह प्रवृत्त । नचेत् क्षमामप्यहमचकुर्यामत्तः कृतघ्नोवदकोइ धोन्य । इतिच ॥ क्षमते । अजन्तात् क्षमेष्टाप् ॥ क्षमणाम् । पिस्त्वादङ् वा ॥ खदिरे ॥

क्षमादश । पु । शिग्रौ ॥

क्षमावान् । त्रि । क्षान्तियुक्ते ॥ यथा । एक. क्षमावतां दोषो द्वितीयो नोपपद्यते । यदेनं क्षमयायुक्त मशक्तं मन्यते जन इतिगारुडे ११४ अध्याय ।

क्षमिता । त्रि । क्षमाशीले ॥ क्षमणशील । क्षमूष्० । तृन् । स्वरतीति वेट् ॥

क्षमी । त्रि । क्षमितरि । तितिक्षौ । सहिष्णौ ॥ क्षमते तच्छील । क्षमूष्० । शमित्यष्टाभ्योघिनुण् । नोदात्तो पदेशस्येति वृद्धिप्रतिषेध ॥ केसरे । अश्वखरजे । खच्चर इति भाषा ॥

चय: । पुं । कासरोगविशेषे । यक्ष्मणि । शोषे ॥ चयति देहम् । चिक्षये । चिनिवा सगस्त्योर्वा । अन्तर्भावितण्यर्थात् चिय: एरच् । क्रियाचयकरत्वात्तु चय इत्युच्यते बुधै ॥ अस्यौषधम् । यथा । श्वेतकोकिलाख्यमूलं छागीक्षीरेण संयुतम् । त्रिसप्ताहेनवैपीतं चयरोगं क्षयं नयेत् । रोगमार्गे ॥ वेश्मनि । निवासे ॥ सवर्त्ते । कल्पान्ते ॥ चीयन्ते प्राणिनोऽत्र ॥ अपचये । हानौ ॥ चययाम् चय ॥ नीतिवेदिनां त्रिवर्गान्तर्गते प्रथमवर्गे ॥ सतु राज्ञामष्टवर्गस्यापचय ॥ यथा । चय स्थानञ्च वृद्धिश्च त्रिवर्गोनीतिवेदिनामित्यमर ॥ ध्वंसे । शरीरसामर्थ्यस्य धनस्य सेनायाश्च नाशे ॥ पश्चिमोत्तरद्वारगृहे ॥ विरामे ॥ हिंसायाम् ॥ क्षीघ्रहिंसायाम् । एरच् ॥ धातुक्षयहेतौ ॥ चीयते ऽनेनेतिव्यु० पुंसिसञ्ज्ञायामितिघ ॥ ह० वतसरे ॥ मेदिनी चलते देवि सर्वभूतचराचरम् । देशभङ्गश्चदुर्भिक्षं संचये सचीयते प्रजा ॥सौराष्ट्रमालवेदेशे दक्षिणे कोङ्कणे तथा । दुर्भिक्षजायतेघोरं चये संवत्सरेप्रिये ॥ कौमुदीधर्मनर्मदोश्चयमुनानर्मदातटे । विन्ध्यायांसैन्धवेचापि विनश्यतिन संशय. ॥ सिंहलं मध्यदेशश्चकालञ्जरं तथैवच । चयेचय त्रिसर्वाणिनान्यथावरवर्णिनि ॥

चयतरु । पु । वेखियापीपर इति प्रसिद्धे नन्दीवृक्षे । स्थालीवृक्षे ॥

चयथु । पु । कासे ॥

चयनाशिनी । स्त्री । जीवन्तीवृक्षे ॥

चयपक्ष । पु । कृष्णपक्षे ॥

चयमास । पु । रविसङ्क्रान्तिद्वयसहितमासे ॥ यथा । द्विसङ्क्रान्तिमास चयाख्योमास सच कदाचिदेव भवति । चय कार्त्तिकादित्रये नान्यत स्यात् तदावर्षे मध्येऽधिमासद्वयंस्यादिति ॥ अपिचाह कालिदास । सौराद्दा चन्द्रमसो गरीयान् मासो द्विसङ्क्रान्तिरसौ चयाख्य । स यत्तदास्यात् चितिवेदरूपै १४१ रब्दैर्मिते वाक्वचिद इषुचन्द्रैरिति ॥

चयित । त्रि । नाशिते ॥

चयी । त्रि । नाशिनी ॥ चयशील । जिष्णुक्षिपिस्रिश्रीण्गमाव्यथाभ्य मपरिभूप्रसूभ्यश्चेति इनि ॥ राजयक्ष्मान्विते ॥ चयोऽस्यास्ति । अतइनि ठनावितीनि ॥

चय्य. । त्रि । क्षेतुमर्हे ॥ चि० । अचोयत् । चय्यजय्यौशक्यार्थे ॥

चर । पु । मेघे ॥ विनाशिनि कार्वरा

श्चे ॥ यथा । कार्यकारणरूपन्तु न श्वर क्षरमुच्यते । क्षरादिविरुद्धधर्मत्वा दक्षर ब्रह्म भण्यते इति ॥ क्षर सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत इतिच ॥ न । नीरे । जले ॥ क्षरति । क्षरसञ्चलने । पचाद्यच्

क्षरणम् । न । च्युतौ । चूवना इति भाषा ॥

क्षरित । त्रि । च्युते । चूवा गिरा इतिच भाषा ॥

क्षरी । पु । वर्षाकाले ॥ त्रि । क्षरण विशिष्टे ॥

क्षव. । पु । क्षुते । छिक्कायाम् । छींक इतिभाषा ॥ राजिकायाम् ॥ राजिकाप्रभेदे ॥ क्षौति । टुक्षुशब्दे । ण्यर्थे. । पचाद्यच् ॥ क्षवणम् । कर्ट्टेरप् वा ॥

क्षवक । पु । राजिकायाम् ॥ अपामार्गे ॥ भूताङ्कुशे ॥

क्षवकृत् । स्त्री । छिक्कन्याम् ॥ क्षवङ् करोति । कृञ क्विप् ॥

क्षवथु । पु । क्षुते ॥ कासे ॥ क्षौत्यनेन । टुक्षु० । द्वितोऽथुच् ॥

क्षवपत्रा । स्त्री । द्रोणपुष्प्याम् ॥ क्षव पत्रेषुयस्या ॥

क्षविका । स्त्री । हस्तीप्रभेदे । पीत तण्डुलायाम् । पुत्रप्रदायाम् । बहु फलायाम् ॥

क्षात्रम् । त्रि । क्षत्रियसम्बन्धिनि ॥

क्षात्रकर्म्म । न । क्षत्रियजाते. कर्म्मणि ॥ यथा । शौर्य्यं तेजो धृति र्दाक्ष्यं युद्धेचाप्यपलायनम् । दान मीश्वरभावश्चक्षात्र कर्मस्वभावजमिति ॥ क्षात्रञ्चतत् कर्मचेतिविग्रह ॥

क्षान्त । त्रि । सहिष्णौ । षोढे ॥ केनचित् पीडितोपि य समर्थ. संस्तत् पीडापराङ्मुख स्तस्मिन्नित्यर्थ. ॥ क्षम्यते स्म । क्षमूष्० । क्त । अनुनासिकस्येतिदीर्घ ॥

क्षान्ति । स्त्री । क्षमायाम् । तितिक्षायाम् । क्रोधप्राप्तौ चित्तसंयमने । सत्यपिसामर्थ्ये अपकारिण्यपकारानिकीर्षायाम् ॥ यथा । क्षमायाश्च जलवङ्के स्तमसो भास्करोदय । क्षान्ति कले रघौवस्य नामसङ्कीर्तनञ्च हरेरिति ॥ क्षमणम् । क्षमू सहने । दिवादि । अस्याषित्वात् क्तिन् । अनुनासिकस्येतिदीर्घ ॥ तुक्षमानोपि परुष नोत्तर प्रतिपद्यते ॥

क्षान्तु । त्रि । क्षमाशीले । मर्षके ॥ क्षाम्यति । क्षमू० । क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥

क्षाम । त्रि । क्षीणे ॥ अवले ॥ क्षैक्षये । गत्यर्था कर्मकेत्यादिना क्त. ।

क्षायोम इति निष्ठातरूम । आदे चउपदेशेभितीत्वाल्वम् ॥

क्षामवती । स्त्री । } यागविशेषे ॥
क्षामवतीष्टि । स्त्री । } यथोक्तम्भवि

ष्ये । क्षामवत्यादिना यज्ञकर्मणा पूतनापते । दैवदोषादकस्मे जाते दोषकदम्बके ॥ होमेनैकेन दोषाणां सर्वेषां चयमादिशेत् । एवञ्च एकप्रायश्चित्तेनानेकदोषक्षयाय क्षामवतीष्टि सर्वत्रदृष्टान्त । इति प्रायश्चित्ततत्त्वम् ॥

क्षामात्मम् । न । अपथ्ये । अहिते । रोग्ये ॥ त्रि । क्षीणवदने ॥ क्षाममास्येयस्य । क्षामश्वतदास्यञ्चेतिवा ॥

क्षार । पु । खार इति प्रसिद्धे रसे ॥ धूर्त्ते ॥ लवणे ॥ काचे ॥ भस्मनि ॥ गुडे ॥ न । टङ्कणे ॥ यवक्षारे ॥ विड्लवणे ॥ सर्जिकाक्षारे ॥ पलाशधवपूतीककरञ्जपाटलादिजा । क्षारा त्रूपाचना सर्वे रक्तपित्तकरा सरा ॥ गुल्मार्श कृमिपुस्त्वघ्ना शर्करा ऽ श्मरिनाशना इति राजवल्लभ ॥ क्षरति । क्षरसञ्चलने । ज्वलिति कसन्तेभ्योण । उपधावृद्धि ॥

क्षारक । पु । पक्षिमत्स्यादिपिटके ॥ जालके । नवकलिकावृन्दे ॥ क्षरति । क्षर० । खुल् ॥ पक्ष्यादिनाशे ॥

क्षारकर्द्दम । पु । नरकविशेषे ॥

क्षारतैलम् । न । पक्वतैलविशेषे ॥ यथा । शुष्कमूलकशुण्ठीनां क्षारोहिङ्गुलनागरम् । शतपुष्पावचाकुष्ठं द्रुशिग्रुरसाञ्जनम् ॥ सौवर्चलयवक्षारसामुद्र सैन्धवं तथा । भूर्ज्जग्रन्थिविडं मुस्त मधुशुक्त चतुर्गुणम् ॥ मातुलुङ्गरसञ्चैवकदली रसमेवच । तैलमेभिर्विपक्तव्य कर्णशूलापह परम् ॥ बाधिर्यङ्कर्णनादञ्च पूयस्रावञ्च दारुणम् । पूरणादस्यतैलस्यक्रुमय कर्णयो गिला ॥ क्षिप्रविनाशमायान्ति शशाङ्ककृतशेखर । क्षारतैलमिदञ्श्रेष्ठमुखदन्तामयापहम् ॥ इतिगारुडे १९८ अध्याय ॥

क्षारत्रयम् । न । त्रिविधक्षारे ॥ यथा । सर्जिकञ्च यवक्षारं टङ्कणक्षारमेवच । क्षारत्रयञ्च विज्ञेय क्षारत्रितयमेवच ॥

क्षारदला । स्त्री । चिल्लाम् । चुक्रावास्तूकशाके ॥ क्षारोदलेष्वस्या ॥

क्षारदशकम् । न । दशविधक्षारे ॥ यथा । शिग्रुमूलकपलाशचुक्रिकाचित्रकार्द्रकसनिम्बसम्भवै । इक्षुगोक्षुरकमोक्षकोद्भवै क्षारपूर्वदशक प्रकीर्त्तितम् ॥

क्षारद्रु । पु । घण्टापाटलिवृक्षे ॥

क्षारद्वयम् । न । सर्जिकायावशूकयो. ॥ क्षारयोर्द्वयम् ॥

क्षारपत्र । पु । } वास्तूकशाके ॥
क्षारपत्रक । पु । }

क्षारभूमि । पु । समुद्रोपान्तदेशे ॥ यथा । जीवन जीवन हन्ति प्राणान् हन्ति समीरण । किमाश्चर्यं क्षारभूमौ प्राणदा यमदूतिका ॥ स्त्री । लवणभूमौ ॥

क्षारमध्य । पु । अपामार्गे ॥

क्षारमृत्तिका । स्त्री । ऊषे ॥ क्षाराचासौमृत्तिकाच ॥

क्षारमेलक । पु । क्षारसङ्घे ॥

क्षारवृक्ष । पु । मुष्कके ॥

क्षारश्रेष्ठ । पुं । पलाशे । किंशुके ॥ मुष्ककवृक्षे ॥ न । वज्रक्षारे ॥

क्षारषट्कम् । न । षड्विधक्षारे ॥ यथा । यवापामार्गकुटजलाङ्गलीतिलमुष्ककैः । क्षारै रेतैस्तुमिलितैः क्षारषट्कमुदाहृतम् ॥

क्षारसिन्धु । पु । लवणसमुद्रे ॥ सतु जम्बुद्वीपस्यदक्षिणे शाकद्वीपस्यचोत्तरेवर्त्तते ॥

क्षाराच्छम् । न । सामुद्रलवणे ॥

क्षाराब्धि । पु । क्षारसिन्धौ ॥

क्षाराष्टकम् । न । अष्टप्रकारक्षारे ॥ यथा । पलाशवज्रिशिखरिचिञ्चार्कतिलनालजा । यवज सर्जिका चेति क्षाराष्टकमुदाहृतम् ॥ क्षारा एते ऽग्निनातुल्या शूलगुल्महराभृशमिति ॥ क्षाराणामष्टकम् ॥

क्षारिका । स्त्री । भोगपिशाचिकायाम् । क्षुधायाम् ॥

क्षारित । त्रि । स्त्रावितं ॥ क्षारे ॥ अभिशस्ते । अपवादग्रस्ते । प्राप्तदोषे ॥ क्षार्य्यते स्म । क्षर० । णयन्त. । क्त ॥

क्षारोद । पु । लवणोदे ॥ क्षारमुदकं यस्मिन् । उत्तरपदस्यचेत्युदकस्योदादेश. ॥

क्षालनम् । न । निर्णेजने । प्रक्षालने ॥

क्षालितम् । त्रि । धौते । निर्णिक्ते । कृत प्रक्षालने ॥

क्षि. । पु । निवासे ॥ गतौ ॥ क्षये ॥

क्षित । त्रि । हिंसिते ॥ क्षिधातो' कर्मणि क्त ॥

क्षिति । स्त्री । निवासे ॥ मेदिन्याम् ॥ महालयेऽथ यातिक्षितिस्तेन प्रप्रकीर्त्तिता ॥ क्षये ॥ रोचनाख्येगन्धद्रव्ये ॥ क्षियति । क्षिनिवासगत्योः । क्तिच्क्तौचेतिक्तिच् ॥ क्षयणम् क्षीयतेऽस्यावा । क्षिक्षये । क्षिनिवासगत्यो । स्त्रियांक्तिन् ॥ कालभेदे । प्रलयकाले ॥

क्षितिकण । पु । } धूलौ । रजसि ॥
क्षितकणा । स्त्री । }

क्षितिक्षम । पु । खदिरद्रुमे ॥

क्षितिक्षित् । पु । क्षितीशे ॥ क्षितिं क्षियति । क्षि० तुदादि । क्विपि तुक् । क्षितिपतिश्चैवासौ क्षितिक्षिदितिभट्टमल्लः ॥

क्षितिज । पु । उपरसविशेषे । भूनागे ॥ मङ्गलग्रहे ॥ वृक्षे । मनौवृक्षे ॥ क्षितेर्जात । जनी० । ड ॥ न । खगोले आकाशमध्यान्नवर्त्तंशान्तरे तिर्य्यग्वृत्ते ॥ त्रि । भूमिजाते ॥

क्षितिजन्तु । पु । भूनागे ॥ क्षितेर्जन्तुरिव ॥

क्षितिधर । पु । पर्वते ॥ कूर्मवासुकिदिग्गजेषु च ॥

क्षितिनाग । पु । उपरसविशेषे । भूनागे ॥

क्षितिनाथ । पु । राजनि ॥

क्षितिप । पु । भूपतौ ॥

क्षितिपति । पु । नृपे । भूपे ॥

क्षितिपाल । पु । भूपाले । राज्ञि ॥

क्षितिपालभाज् । पु । राजनि ॥

क्षितिपुत्र । पु । नरकराजे । नरकासुरे ॥

क्षितिरन्ध्रम् । न । अवटे ॥ क्षितेः रन्ध्रम् ॥

क्षितिरुह । पु । वृक्षे ॥ रोहति । रुह० । इगुपधत्वात्क । क्षितौ रुह । सप्तमीतिसमास ॥ क्षितौ रोहतिवा । रुहेरिगुपधेतिक ॥

क्षितिवदरी । स्त्री । भूवदर्याम् । भडबेरी इतिभाषा ॥

क्षितिवर्द्धन । पु । शवे ॥ त्रि । भूमिवर्द्धके ॥

क्षितिव्युदास । पु । भुइरा इतिप्रसिद्धे भूमिगृहे ॥

क्षितिसुत । पु । भौमे ॥ नरकासुरे ॥

क्षितीश । पु । राज्ञि ॥ श्रीरामे ॥ क्षितेर्भूमेरीश ॥

क्षित्यदिति । स्त्री । देवक्याम् ॥

क्षित्वा । पु । वायौ ॥ क्षयति क्षियति वा ॥ क्षिक्षये क्षिनिवासगत्योर्वा । शीङ्क्रुशीत्यादिनाक्वनिपितुक् ॥ काले ॥

क्षिप । पु । क्षेपणे ॥ क्षेप्तरि ॥ क्षिपेरिगुपधेतिक ॥

क्षिपक । त्रि । योधे ॥ क्षिपति । क्षिपमेरणे । इगुपधज्ञाप्रीकिरःक । ततोऽज्ञातादौक ॥ स्त्री । क्षिपका । क्षिपकादीनाञ्चेतीत्वाभाव ॥

क्षिपणम् । न । क्षेपणे । क्षिपायाम् ॥

क्षिपणि । स्त्री । नौकादण्डे ॥ आयुधे ॥ वडिशे ॥ क्षिप्यतेऽनयेति वा ।

क्षिपे किश्चेत्यनि । क्षिपति क्षेपया मितिवेदभाष्यम् ॥

क्षिपणी । स्त्री । क्षेपणयाम् । नौकादण्डे ॥ कृदिकारादिति ङीष् ॥

क्षिपणु । पु । वायौ ॥ क्षिपति । क्षिप० । अनुङ्नदेश्चेतिचकारात् क्षिपेरप्यनुङ् ॥

क्षिपण्यु । पु । वसन्ते । इण्युज्ज्वलदम ॥ देहे ॥ त्रि । सुरभौ ॥

क्षिपा । स्त्री । क्षेपणे ॥ क्षेपणम् । क्षिप० । भिदाद्यङ् । टाप् ॥

क्षिप्त । त्रि । प्रेरिते ॥ निक्षेपकृतवस्तुनि । त्यक्त । नुत्ते । मुक्ते ॥ विकीर्णे ॥ अवज्ञाते ॥ न । रागद्वेषादिवशाद्विषयेष्वभिनिविष्टेचित्ते । क्षित्यामप्रथमभूमौ ॥ क्षिप्यते स्म । क्षिप० ॥ क्त ॥ वायुग्रस्ते ॥

क्षिप्तकुक्कुर । पु । अलर्के ॥

क्षिप्ता । स्त्री । रात्रौ ॥ इतिहलायुध ॥

क्षिप्नु । त्रि । निराकरिष्णौ । निराकरणशीले ॥ क्षेपणशील । क्षिप० । त्रसिगृधिधृषिक्षिपेःक्नु ॥

क्षिप्रम् । न । शीघ्रे ॥ नक्षत्रवारविशेषाणांसञ्ज्ञायाम् ॥ पुष्याश्विन्यभिजिद्धस्ताःलघु क्षिप्रं गुरु कथा ॥ क्षिप्यति । क्षिप० । स्फायितञ्चीति रक् ॥ शीघ्रार्थे क्रियाविशेषणत्वात् द्रव्येवर्त्तमान क्लीबे । द्रव्येतु त्रिलिङ्ग ॥ शीघ्रगेच ॥

क्षिप्रकारी । त्रि । शीघ्रप्रयोक्तरि ॥

क्षिप्रपाकी । पु । गन्धमुण्डे । गर्दभाण्डे । गेडीतिभाषाप्रसिद्धेवृक्षे । गन्धभादालिया इतिगौडभाषा ॥ त्रि । शीघ्रपाकिनि ॥

क्षिप्रा । स्त्री । अवन्तीतलवाहिन्यांसरिति ॥

क्षिया । स्त्री । अपचये । क्षये ॥ क्षिये । क्षिनिवासगत्योर्वा । भिदाद्यङ् । टाप् ॥



क्षीजनम् । न । कीचकानां नादे ॥

क्षीण । त्रि । अमांसे । दुर्बले । क्षामे ॥ क्षियते । क्त । निष्ठायामण्यदर्थे इतिदीर्घ । क्षियोदीर्घादितिन ॥ धर्मार्थं क्षीणकोशस्य क्षीणस्य भपिशोभते । सुरै पीतावशेषस्य कृष्णपक्षे विधोरिवेति कामन्दक ॥

क्षीणचन्द्र । पु । विनष्टज्ञ्वमयाष्टम्योर्मध्यस्थेन्दौ ॥ यथा । कृष्णाष्टमीदलादूर्द्ध यावच्छुक्लाष्टमीदलम् । तावत् कालमशीणोस चन्द्रस्तवोपरि स्मृतइति ॥

क्षीणवान् । त्रि । क्षयविशिष्टे ॥

क्षीणाष्टकर्म्मा । पु । जिने ॥

क्षीयमाण । त्रि । अपचीयमाने ॥

क्षीरम् । न । जले । वारिणि ॥ दुग्धे । पयसि ॥ शाकाम्लफलपिण्याककुलत्थलवणामिषैः । करीरदधिमाषैश्च प्रायः क्षीरं विरुध्यते ॥ स्निग्धशीतगुरुक्षीरं सर्वकालं न सेवयेत् । दीप्ताग्निं कुरुते मन्दं मन्दाग्निं नष्टमेव च ॥ क्षीरं न भुञ्जीत कदाप्यतप्तम् तप्तञ्च नैतल्लवणेन सार्द्धम् । पिष्टान्नसन्धानकमाषमुद्गकोषातकीकन्दफलादिकैश्च ॥ तथाच । मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः । शाकजाम्बवरसादिसेवितं मारयत्यबुधमाशु सर्पवत् ॥ क्षियति । क्षिनिवासगत्योः । शुसिचिक्षिमीनांदीर्घश्चेतिक्रन्दीर्घश्च ॥ यद्वा । घस्यते । घस्लृ अदने । घसेकिच्चेतिईरन् । गमहनेत्युपधालोपः । खरि चेति चर्त्वम् । शासिवसीति षत्वम् ॥ यद्वा क्षयणम् । क्षीष् हिंसायाम् । सं॰ क्विप् । क्षियमीरयति । ईरगतौ । ण्यन्तः । कर्मण्यण् ॥

क्षीरक । पु । क्षीरमोरटलतायाम् ॥

क्षीरकञ्चुकी । स्त्री । क्षीरीशवृक्षे ॥

क्षीरकण्ठ । पु । } बालके । स्तनन्धये ॥
क्षीरकण्ठक । पु । }

क्षीरकन्द । पु । क्षीरविदार्याम् ॥

क्षीरकन्दा । स्त्री । क्षीरवल्ल्याम् । काश्मीरकूष्माण्ड इति गौड भाषा ॥

क्षीरकाकोलिका । स्त्री । क्षीरविदार्याम् । क्षीरशुक्लायाम् ॥ पयस्काकोलीम् ॥

क्षीरकाकोली । स्त्री । अष्टवर्गपठितौषधिविशेषे । जीवबल्याम् ॥ रसवीर्यविपाकेषु काकोल्या सदृशी च सा ॥ दुग्धिकाभेदे । शुक्लकाकोल्याम् ॥ पयस्काकोलीम् । अश्वगन्धामूलम् ॥

क्षीरकाण्डक । पु । स्नुह्याम् ॥ अर्कवृक्षे ॥

क्षीरकाष्ठा । स्त्री । वटीवृक्षे ॥

क्षीरकीट । पु । दुग्धजातकीटे । कालिकायाम् ॥

क्षीरखव । पु । क्षिरगोखा इति गौड भाषा प्रसिद्धे दुग्धपाषाणे ॥

क्षीरजम् । न । दधनि । मङ्गल्ये ॥ त्रि । क्षीरजातद्रव्ये ॥

क्षीरदल । पु । अर्कवृक्षे ॥ क्षीरवन्ति दलान्यस्य ॥

क्षीरद्रुम । पु । अश्वत्थे । पिप्पले ॥

क्षीरधेनु । स्त्री । दानार्थं क्षीरनिर्मितायां गवि ॥

क्षीरनाश । पु । आखोटवृक्षे ॥ दुग्धक्षये ॥

क्षीरनीरम् । न । आलिङ्गने ॥ जलदुग्धसमाहृतौ ॥

क्षीरपर्णी । स्त्री । अर्कवृक्षे । विकीरणे ॥

क्षीरपायी । त्रि । दुग्धपानकर्त्तरि ॥

क्षीरमोचकः । पु । शोभाञ्जने ॥

क्षीरमोरट । पु । मोरटे । मधुस्रवे । क्षीरमोरटा इति गौड भाषा प्रसिद्धयांलतायाम् ॥

क्षीरवल्ली । स्त्री । क्षीरविदार्य्याम् ॥ क्षीरवतीवल्ली ॥

क्षीरविकृति । स्त्री । क्षीरसा इति गौडभाषाप्रसिद्धया कूर्च्चिकायाम् ॥ दध्ना सह पय:पक्कं यत् तत् स्याद् दधि कूर्च्चिका । तक्रेण पक्कं यत् क्षीरं साभवेत्तक्रकूर्च्चिका ॥ क्षीरस्य विकृति: ॥

क्षीरविदारिका । स्त्री । क्षीरविदार्य्याम् ॥

क्षीरविदारी । स्त्री । शुक्लभूकुष्माण्डे । महाश्वेतौषधौ ॥ क्षीरवतीविदारी ॥ शुक्लकृष्णाभूकुष्माण्डयो ॥ क्षीरकन्दो द्विधा प्रोक्तो विनालस्तु सनालक । विनालो रोगहर्त्ता स्याद्यस्त्वन्यो सनालक ॥

क्षीरविषाणिका । स्त्री । क्षीरकाकोल्याम् ॥ वृश्चिकाल्याम् ॥

क्षीरवृक्ष । पु । राजादन्याम् ॥ उदुम्बरे ॥

क्षीरशर । पु । आमिक्षायाम् । छाना इति गौडभाषा ॥

क्षीरशाकम् । न । दुग्धविकृतौ ॥ अपक्व मेव यन्नष्ट क्षीरशाकं हितत्पय ॥

क्षीरशीर्ष: । पु । श्रीवासे ॥

क्षीरशुक्ला । स्त्री । क्षीरकाकोल्याम् ॥ क्षीरविदार्य्याम् ॥

क्षीरशुक्ल । पु । जलकण्टके । शृङ्गाटके । सिंघाडा इतिभाषा ॥ राजादने ॥

क्षीरशुक्ला । स्त्री । शुक्लभूकुष्माण्डे ॥ विदार्य्याम् । क्षीरकाकोलिकायाम् । कृष्णभूकुष्माण्डे ॥ क्षीरमिवशुक्ला ॥

क्षीरस । पु । क्षीरसारे ॥

क्षीरसन्तानिका । स्त्री । छाना इति नष्टक्षीर इति गौडभाषाप्रसिद्धे दुग्धविकार विशेषे । क्षीरसन्तानिका वृष्या स्निग्धा पित्तानिलापहा ॥

क्षीरसमुद्र । पु । क्षीराब्धौ ॥ अयंशुद्ध तद्वीपे वर्त्तते ॥

क्षीरसागर । पु । क्षीरसमुद्रे ॥

क्षीरसागरसुता । स्त्री । लक्ष्म्याम् ॥

क्षीरसार । पु । पालजिनु इति भाषा प्रसिद्धे क्षीर विशेषे । क्षीरसे ॥ यथा । ईषच्छ्लेष्मकर शैत्य पित्तघ्नं तर्पण गुरु । पुष्टिरेषाभिधा तस्य क्षीरसारस्तु क्षीरस ॥ इति रा० नि० ॥ नवनीते ॥ यथा । क्षीरसारमपनीय शङ्कया स्वीकृत यदि पलायन त्व

या । मानसे मम नितान्ततामसे नन्दनन्दन कथं न क्षीयसे ॥ क्षीर स्यसार ॥

क्षीरसिन्धु । पु । क्षीरार्णवे ॥

क्षीरस्फटिक । पु । क्षीरवर्णस्फटिक विशेषे ॥

क्षीरस्विच्छीर । पु । दुग्धफेने । शार्करे ॥

क्षीरा । स्त्री । काकोल्याम् ॥

क्षीराब्धि । पु । क्षीरसागरे ॥ क्षीरस्य अब्धि ॥

क्षीराब्धिज । पु । चन्द्रे । इन्दौ ॥ शेषे ॥ तार्क्ष्ये ॥ अमृतादिसमूहे ॥ न । सामुद्रलवणे ॥ मौक्तिके ॥

क्षीराब्धिजा । स्त्री । इन्दिरायाम् । लक्ष्म्याम् ॥ क्षीराब्धेर्जाता । जनी० । ड ॥

क्षीराब्धितनया । स्त्री । रमायाम् । लक्ष्म्याम् ॥ क्षीराब्धेः तनया ॥

क्षीरामृतम् । न । मधुरमांसे ॥

क्षीराविका । स्त्री । क्षीराव्याम् ॥

क्षीरावी । स्त्री । दुद्धीतिप्रसिद्धौषधौ । दुग्धिकायाम् ॥ क्षीरमवति । अवरक्षणादौ । कर्मण्यण् । ङीप् ॥

क्षीराह्व । पु । सरलद्रुमे ॥

क्षीरिका । स्त्री । राजादने । फलाध्यक्षे । खिरणी इतिभाषा ॥ क्षीरिकाया फल वृष्य बल्य स्निग्ध हिम ज्वर । तृष्णामूर्च्छामदभ्रान्तिक्षय दोषत्रयास्रजित् ॥ अपिच । क्षीरिकाय फल पक्व गुरु विष्टम्भि शीतलम् । कषाय मधुर साम्लं नाति वातप्रकोपनम् ॥ क्षीरमस्त्यस्या । अतइनिठनाविति ठन् ॥ परमान्ने । पायसे । खीर इतिभाषा ॥ यथा । शुद्धे ऽर्द्धपक्वे दुग्धे तु घृताक्तां स्तण्डुलान् पचेत् । ते सिद्धा क्षीरिका ख्याता सासिताज्ययुतोत्तमा ॥ क्षीरिका दुर्जरा बल्या धातुपुष्टिप्रदा गुरु । विष्टम्भिनी हरेत् पित्तरक्त पित्ताग्निमारुतान् ॥ नालिकेरक्षीरिकान्तु प्रोच्यते शास्त्रतोमया ॥ नालिकेर तनूकृत्य छिन्नपयसि गोक्षिपेत् । सितागव्याज्यसयुक्तां तत् पचेन् मृदुना ग्निना । नालिकेरोद्भवा क्षीरी स्निग्धा शीता तिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा ॥ एव कुष्माण्डमज्जा र्द्रीस्तथा वंशाङ्कुरानपि । कदलीनां फलान्मूलान् कर्त्तव्यान्नीरिकाबुधैरिति ॥ नारङ्गक्षीरिणोप्येवम् ॥

क्षीरिणी । स्त्री । काञ्चनक्षीरीलतायाम् । तिक्तदुग्धायाम् । पीतदुग्धायाम् । हिमाद्रिजायाम् ॥ क्षीरिणी तिक्तशीताच रेचना शोफतापनुत् ।

क्रिमिदोषकफघ्नीच पित्तज्वरहराप
हा ॥ क्षीरकाकोल्याम् ॥ दुग्धिका
याम् ॥ कुटुम्बिन्यामोषधौ ॥ गम्भा
र्याम् ॥ क्षीरमस्त्यस्याम् । इन् । ङीप् ॥
क्षीरी । पु । क्षुद्राम् ॥ अर्कवृक्षे ॥ राजा
दने ॥ दुग्धपाषाणे ॥ वटे ॥ प्लक्षे ॥
सोमलतायाम् ॥ स्नात्वोद्दस्वे ॥ क्षी
रमस्त्यस्मिन् वा । अतइनिठना
वितीनि ॥

क्षीरिवृक्ष । पु । न । क्षीरयुक्तवृक्षप
ञ्चके ॥ यथा । न्यग्रोधोदुम्बराश्वत्थ
पारिशप्लक्षपादपा. । पञ्चैते क्षीरि
णो वृक्षा स्तेषां त्वक् पञ्चवल्कलम् ॥
॥ केचित्तु पारिशस्थाने शिरीष वे
तस परे । वदन्तीतिशेष ॥ क्षीरिवृ
क्षा हिमा वर्ण्या योनिरोगव्रणाप
हा । रूक्षा कषाया मेदोघ्ना वि
सर्पामयनाशना ॥ शोथपित्तकफा
स्रघ्ना स्तन्या भग्नास्थियोजका । ए
षां त्वक्गुणा. । त्वक्पञ्चक हिमं
ग्राहि व्रणशोथविसर्पजित् । तेषाप
ञ्चगुणा' । तेषा पञ्च हिमङ्ग्राहि
कफवातास्रजुल्लघु । विष्टम्भाध्मान
जित् तिक्तं कषाय लघु लेखनमि
तिराजनिर्घण्ट ॥

क्षीरी । स्त्री । क्षीरिवृक्षे ॥ शिरगो
ला इतिगौडभाषाप्रसिद्धे वृक्षे । दु
ग्धपाषाणे । वज्राभे ॥ दुग्धिकायाम् ॥

क्षीरोश पु । क्षीरकञ्चुकी इति
गौडप्रसिद्धे क्षुद्रे ॥

क्षीरेयी । स्त्री । पायसे ॥ यथा । क्षी
रेय पायसं प्रोक्तं परमान्नञ्चसू
रिभिरिति हलायुध. ॥

क्षीरोद । पु । दुग्धसमुद्रे । क्षीराब्धौ,
॥ क्षीरमुदक यस्मिन् । उत्तरपदस्य
चेत्युदकस्योदादेश ॥

क्षीरोदतनया । स्त्री । लक्ष्म्याम् ।
श्रियाम् ॥ क्षीरोदस्य तनया ॥

क्षीरोदतनयापति । पु । विष्णौ ॥

क्षीरोदनन्दनः । पु । चन्द्रे ॥

क्षीब । त्रि । मत्ते ॥ क्षीवते स्म । क्षी
ब मदे । अकर्मकत्वात् कर्त्तरि क्तः
। अनुपसर्गात् फुल्लक्षीवेतिसाधु' ।
कोवा ॥

क्षीवा । त्रि । मत्ते ॥ बाहुलकात्कनिन् ॥

क्षु. । पु । सिंहे ॥

क्षुण । पु । अरिष्टवृक्षे ॥

क्षुण्ण । त्रि । अभ्यस्ते ॥ प्रहते । चू
र्णीकृते । सम्पिष्टे ॥ क्षुदे. क्तः ॥

क्षुत् । स्त्री । क्षुते । क्षवे । छिक्काया
म् ॥ क्षवथाम् । टुक्षुशब्दे । सं०
क्विप् । तुक् ॥ वक्तिनाक्षुतसक्षुत् ॥

क्षुतम् । न । नासिकात सशब्दवायो
र्नि. सरणे । क्षवे ॥ अश्वमकृत्नम् ।

विर्त्तं श्रमाणि कार्यसिद्धिरतुलाशङ्के हुताशे भय याम्यामग्निभय सुरदिग्निरृत्ति लाभ समुद्रालये । वायव्या वरवस्त्रगन्धसलिल दिव्याङ्गनाचो त्तरे सेशान्या मरण भुवनिगदित दिग्लक्षणव्यञ्जने ॥ ज्येष्ठीक्षुते क्षुतेऽप्येव भूक्षु किंचिन्न कोविदा ॥ आसने शयने दाने भोजने वस्त्र सङ्ग्रहे । विवादेच विवाहेच क्षुत सप्तसु शोभनम् ॥ असत्रुतमुखस्य क्षुन्निषेधो यथा । नासंवृतमुखः कुर्याद्धास्य जृम्भा तथा क्षुतम् ॥ यत्फल खञ्जनक्षुते क्षुतेनेयं तदेव हि ॥ त्रि । श्राणादिनातीक्ष्णीकृते ॥ क्षयणम् । टुक्षु शब्दे । भावेक्त ॥

क्षुतक । पु । राजिकायाम् ॥

क्षुताभिजनन । पु । कृष्णसर्षपे । राई इति भाषा ॥ क्षुतमभिजनयति । नन्द्यादित्वात् ल्यु ॥

क्षुत्करी । स्त्री । सर्पाक्ष्याम् ॥

क्षुत्पिपासे । स्त्री । द्वि० । लोभभयें यो ॥ यथा । क्षुत्पिपासे लोभभायें धन्येमान्येचपजिते । याभ्यांव्याप्त जगत्सर्वं नित्यचिन्तातुर भवेदिति ॥ चिन्तातुरस्य क्षुत्पिपासा नाशकान्नजलाचिन्तातुरमित्यर्थ ॥

क्षुद्र । त्रि । अधमे ॥ क्रूरे ॥ कृपणे ॥ अल्पे ॥ दरिद्रे ॥ कलान्वेषिणि ॥ क्षुणत्ति । क्षुदिर् सम्पेषणे । स्फायितञ्चीतिरक् ॥

क्षुद्रकण्टकारी । स्त्री । अग्निदमन्याम् ॥

क्षुद्रकण्टकी । स्त्री । इक्षुर्याम् ॥

क्षुद्रकण्टारिका । स्त्री । क्षुपविशेषे । अग्निदमन्याम् ॥

क्षुद्रकण्टिका । स्त्री । कण्टकारिकायाम् ॥

क्षुद्रकम्बु । पु । शङ्खनखे । शम्बूके ॥

क्षुद्रकारवेल्ली । स्त्री । कारवेल्लविशेषे । कारवेल्याम् । वनकरेला इतिभाषा ॥

क्षुद्रकारलिका । स्त्री । क्षुद्रकारवेल्याम् ॥ इतिराजनिर्घण्टः

क्षुद्रकुलिश । पु । न । वैक्रान्तमणौ ॥

क्षुद्रकुष्ठम् । न । स्वल्पकुष्ठरोगे ॥ तदेकादशविधं यथा । एक कुष्ठं स्मृत पूर्वं गजचर्मतत परम् । ततश्च मेदल प्रोक्तं ततश्चापिविचर्चिका ॥ विपादिकाभिधाचैवपामा कच्छूस्तत परा । ततोदद्रुस्त्रिविस्फोट किटिभञ्चतत परम् ॥ तस्माच्चालसकप्रोक्त शतारुश्च तत परम् । क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैरिति ॥

क्षुद्रखदिर । पु । दुष्खदिरे ॥

क्षुद्रगोक्षुरक । पु । छोटागोखरू इति

भाषा प्रसिद्धेन्द्रियकण्टके ॥

क्षुद्रघण्टिका। स्त्री। किङ्किण्याम्। घूघरू कौंधनी करधनी इतिच भाषा॥ घण्टेव। इवेतिकन्। यद्वा। घण्टयति घण्टतिवा। घटिदीप्तौ। ण्वुल्। क्षुद्राचासौ घण्टिकाच॥

क्षुद्रघोली। स्त्री। चिविल्लिकाक्षुपे॥

क्षुद्रचञ्चु। पु। क्षुपविशेषे। त्वक्सार भेदिन्याम्॥ स्त्री। पञ्चिकास्वल्पचञ्च्वाम्॥

क्षुद्रचन्दनम्। न। रक्तचन्दने॥

क्षुद्रचिर्भिटा। स्त्री। गोपालकर्कट्याम्। कचरी इति भाषा॥

क्षुद्रचूड। पु। धरमल्लखगे। गूथ खले॥

क्षुद्रजन्तु। पु। स्वल्पजन्तौ॥ आनकुलात् क्षुद्रजन्तव। क्षुद्रजन्तुरनस्थि स्यादथवा क्षुद्र एव य। शतं वाप्रसृतौ येषाङ्केचिदानकुलादपि॥ क्षुद्रश्चासौजन्तुश्च॥ शतपद्याम्॥

क्षुद्रजम्बू। स्त्री। भूमिजम्ब्वाम्। ह्रस्वफलायाम्॥

क्षुद्रजातीफलम्। न। आमलके॥

क्षुद्रजीरकम्। न। कणाजीरके। सुगन्धे॥

क्षुद्रजीवा स्त्री। जीवन्त्याम्॥

क्षुद्रतुलसी। स्त्री। अर्जके॥

क्षुद्रदंशी। स्त्री। क्षुद्रदंशिकायाम्। कोटाडांस इति भाषा। मसहू इति पर्वतीय भाषा॥

क्षुद्रदु स्पर्शा। स्त्री। अग्निदमन्याम्॥

क्षुद्रदुरालभा। स्त्री। स्वल्पदुरालभायाम्। मरुस्थायाम्। मरुसम्भवायाम्॥

क्षुद्रदुस्पर्शा। स्त्री। अग्निदमन्याम्॥

क्षुद्रधात्री। स्त्री। कर्कटवृक्षे॥

क्षुद्रधान्यम्। न। कङ्ग्वादिकुधान्ये। तृणधान्ये॥ क्षुद्रधान्य मनुष्णं स्यात् कषाय लघु लेखनम्। मधुर कटुक पाके रूक्षञ्च क्लेदशोषकम्॥ वातकृद्बद्धविट्कञ्च रक्तपित्तकफापहम्॥

क्षुद्रनासिक। त्रि। स्वल्पनासायुक्ते। न. क्षुद्रे॥

क्षुद्रपत्रा। स्त्री। चाङ्गेर्याम्॥

क्षुद्रपत्री। स्त्री। वचायाम्॥ इतिराजनिर्घण्ट.॥

क्षुद्रपनस। पु। डहौ। लकुचे॥ क्षुद्रश्चासौ पनसश्च॥

क्षुद्रपर्ण। पु। अर्जके॥ त्रि। सूक्ष्मपर्णे॥

क्षुद्रपाषाणभेदा। स्त्री। क्षुपविशेषे। चतुष्पत्र्याम्। कन्दरोद्भवायाम्। शैलोद्भवायाम्॥

क्षुद्रपिप्पली । स्त्री । वनपिप्पल्याम् ॥

क्षुद्रपोतिका । स्त्री । मूलपोत्याम् ॥

क्षुद्रफल । पु । } जीवद्रुमे । जी
क्षुद्रफलक । पु । } वनवृक्षे ॥

क्षुद्रफला । स्त्री । इन्द्रवारुण्याम् । गवादन्याम् ॥ गोपालकर्कट्याम् ॥ कण्टकार्य्याम् ॥ अग्निदमन्याम ॥ भूमिजम्ब्वाम् ॥

क्षुद्रभण्टाकी । स्त्री । वृहत्याम् । कण्टकार्याम् ॥

क्षुद्रमत्स्य । पु । छोटीमच्छीतिलोकप्रसिद्धेमत्स्ये । क्षुद्रमत्स्या स्वादुरसा दोषत्रयविनाशना । लघुपाका रुचिकरा सर्वदाते हितामता ॥ अतिसूक्ष्मा पुंस्त्वहरा वृष्या कासानिलापहा. ॥

क्षुद्रमुस्ता । स्त्री । कसेरुकन्दे ॥

क्षुद्ररोग । पु । द्विचत्वारिंशद्भेदभिन्ने भावप्रकाशोक्ते स्वल्पव्याधौ ॥

क्षुद्रवर्वणा । स्त्री । वरटायाम् ॥

क्षुद्रवल्ली । स्त्री । मूलपोत्याम् ॥

क्षुद्रवारुणी । स्त्री । सुरायाः प्रभेदे ॥

क्षुद्रवार्त्ताकी । स्त्री । वृहत्याम् ॥

क्षुद्रवार्त्ताकिनी । स्त्री । श्वेतकण्टकार्याम् ॥

क्षुद्रशङ्ख । पु । शङ्खनखे । क्षुद्रश्चासौ शङ्खश्च ॥



क्षुद्रशर्करा । स्त्री । यावनालशर्करायाम् ॥

क्षुद्रशार्दूल. । पु । चित्रके । मृगान्तके । चीता इतिभाषा ॥

क्षुद्रशीर्ष । त्रि । अल्पमस्तके ॥ पु । मयूरशिखावृक्षे ॥ क्षुद्रंशीर्षमस्य ॥

क्षुद्रशुक्ति । स्त्री । } जलशुक्तिका-
क्षुद्रशुक्तिका । स्त्री । } याम् ॥

क्षुद्रश्यामा । स्त्री । कट्भ्याम् ॥

क्षुद्रश्लेष्मातक. । पु । भूकर्वुदारके ॥

क्षुद्रसहा । स्त्री । मुद्गपर्ण्याम् । मार्जारगन्धायाम् ॥ इन्द्रवारुण्याम् ॥ सहतिसहते वा । षह० । अच् । टाप् क्षुद्रस्सहा ॥

क्षुद्रसुवर्णम् । न । रीतौ । पित्तले ॥

क्षुद्रश्वास । पु । अल्पश्वासरोगे ॥

क्षुद्रहिङ्गुलिका । स्त्री । } कण्टकार्या
क्षुद्रहिङ्गुली । स्त्री । } म् ॥ क्षुद्रा चासौहिङ्गुलीच ॥

क्षुद्रा । स्त्री । व्यङ्गायाम् ॥ नट्याम् ॥ कण्टकारिकायाम् ॥ कायेत्वस्याम् लघ्वाम्लम् ॥ सरघायाम् ॥ चाङ्गेर्याम् ॥ वेश्यायाम् ॥ हिंस्रायाम् ॥ मक्षिकामात्रे ॥ क्षुध्यति क्षुधतेवा । क्षुदिर्सम्पूर्णने । स्फायितञ्चीतिरक् । टाप् ॥ गवेधुकायाम् ॥ वादरतायाम् ॥

क्षुद्राग्निमन्थः । पुं । इश्रमूलप्रसिद्धे वृक्ष विशेषे । लघुमन्थे । तनुत्वचायाम् । छोटीगणियारी इतिभाषा ॥ अग्निमन्थद्वयञ्चैव तुल्यं वीर्यरसादिषु । तत्प्रयोगानुसारेण योजयेत् स्वमनीषया ॥

क्षुद्राञ्जनम् । न । सुश्रुतोक्तेचक्षूरोग औषधे ॥

क्षुद्राण्डमत्स्यसङ्घात । पु । पोताधाने । पोनामाछ इतिगौडभाषा ॥ क्षुद्राद्ण्डाज्जातामत्स्या क्षुद्राण्डमत्स्या । तेषांसङ्घात ॥

क्षुद्रापामार्ग । पु । रक्तापामार्गे ॥

क्षुद्रामलकम् । न । आमलके । काठआवला इतिभाषा ॥

क्षुद्रामलकसञ्ज्ञ । पु । कर्कटवृक्षे ॥

क्षुद्राम्र । पु । कोषाम्रे । सुकोशके ॥

क्षुद्राम्लपनस । पुं । लकुचे ॥

क्षुद्राम्ला । स्त्री । चाङ्गेर्याम् ॥ अश्मपत्र्याम् ॥

क्षुद्राम्लिका । स्त्री । शाखाम्लायाम् । चाङ्गेर्याम् ॥

क्षुद्रिका । स्त्री । दंशे ॥

क्षुद्रिमा । पु । क्षुद्रत्वे ॥ क्षुद्रस्य भाव । इमनिच् ॥

क्षुद्रेङ्गुदी । स्त्री । यवाम्ले ॥

क्षुद्रेवारु । पु । गोपालकर्कट्याम् ॥

क्षुद्रोदुम्बरिका । स्त्री । काकोदुम्बरिकायाम् ॥

क्षुद्रोपाय । पु । मायादिषु । क्रमेण पेन्द्रजलानि क्षुद्रोपायाश्चमेचय ॥

क्षुद्रोपोदकनाम्नी । स्त्री । मूलपोत्याम् ॥

क्षुद्रोपोदकी । स्त्री । स्वल्पपूतिकाशाके । मलट्याम् ॥ रसवीर्यविपाकेषु सदृशो पूर्वयास्वयम् । पूर्वया उपोदक्या ॥

क्षुद्रोलूक । पु । डुण्डुले । शाकुनेके । खखूसत्इतिभाषा ॥

क्षुत् । स्त्री । क्षुधायाम् । बुभुक्षायाम् ॥ क्षोधनम् । क्षुधबुभुक्षायाम् । क्विप् ॥

क्षुधा । स्त्री । भोजनेच्छायाम् । बुभुक्षायाम् । अशनायायाम् ॥ बुभुक्षोत्पादकौदर्य्याग्निविकारे ॥ भागुरिमतेन टाप् ॥

क्षुधाकुशल । पु । विल्वान्तरवृक्षे ॥

क्षुधातुर । त्रि । क्षुधापोडिते ॥ यथा । अर्थातुराणा न सुहृन्न बन्धु कामातुराणां नभयं नलज्जा । चिन्तातुराणा नसुखं न निद्रा क्षुधातुराणांनबलंनतेजइति ॥

क्षुधाभिजनन । पुं । राजिकायाम् ॥ त्रि । क्षुज्जनके ॥ क्षुधामभिजनयति । जनी० । नन्द्यादित्वाल्ल्युः ॥

क्षुधावती । स्त्री । भैषज्यरत्नावल्युक्तक्षुधोत्पादकवटिकायाम् ।

क्षुधासागररस । पु । भैषज्यरत्नावल्युक्ते औषधविशेषे ॥

क्षुधित. । त्रि । अशनायिते । बुभुक्षिते । क्षुधायुक्ते ॥ क्षुध्यति स्म । क्षुधेरकर्मकत्वात् कर्त्तरि क्तः । वसतिक्षुधोरितीट् ॥ क्षुत् सञ्जातास्य वा । तारकादित्वादितच् ॥

क्षुधुनः । पु । म्लेच्छभेदे ॥ क्षुध्यति । क्षुध० । क्षुधिपिशिमिथिभ्य.कित् इत्युनन् ॥

क्षुप । पु । ह्रस्वशाखाशिफे । शाखोटकादिक्षुद्रवृक्षे ॥ श्रीकृष्णात्मजे ॥ इक्ष्वाकुभूपतनये ॥ द्वारकापश्चिमदिक्स्थपर्वते ॥ क्षौति । टुक्षुशब्दे । बाहुलकात् प. । अगुणश्च ॥

क्षुपालु । पु । पानीयालौ ॥

क्षुपडोडमुष्टि । पु । विषमुष्टिक्षुपे ॥

क्षुब्ध । पु । मन्थे । मन्थानदण्डे ॥ क्षुभ्यति स्म । क्षुभसञ्चलने । क्त । क्षुब्धस्वान्तेत्यादिनासाधु । त्रि । क्षुभिते ॥ तथाच क्षुब्धोराजा क्षुब्धागिरिनदीत्यादिप्रयोगास्त्वागमशासनस्यानित्यत्वाद्बोध्या ॥

क्षुभ. । पु । प्रशंसके ॥

क्षुभा । स्त्री । निग्रहानुग्रहकर्त्र्यां देवतायामिति महाभारतम् ॥

क्षुभितः । त्रि । विलोडिते ॥ आकुले । त्रस्ते ॥ क्षुभे क्त. । इट् ॥

क्षुमा । स्त्री । अतस्याम् ॥ नीलिकायाम् ॥ छुंब इतिपर्वतीयभाषाप्रसिद्धे लताप्रभेदे ॥ क्षौति । क्षूयते वा । टुक्षु० । बाहुलकान् मक् । अर्त्तिस्तुसुहुसृधृक्षिक्षुभेतिमन्वा । संज्ञापूर्वकत्वान्नगुणः ॥

क्षुरः । पु । लोमच्छेदनद्रव्ये । नापितास्त्रे । छुरा इतिभाषा ॥ कोकिलाक्षे ॥ गोक्षुरे ॥ शफे ॥ महापिण्डीतके ॥ शरे ॥ क्षुरति । क्षुरविलेखने । इगुपधज्ञाप्रीकिर.क. ॥ यद्वा । क्षुब्जेन्द्राग्रेत्यादिनारन् । निपातनाद्रेफलोपोगुणाभावश्च ॥ क्षुरइव क्षुरोवा ॥

क्षुरक । पु । गोक्षुरे ॥ तिलकद्रुमे ॥ कोकिलाक्षे ॥ क्षुरक शीतलो वृष्य स्वादम्ल. पिच्छिल स्तथा । तिक्तो वातामशोथाश्मतृष्णादृष्टत्रनिलास्रजित् ॥ क्षुरति । क्षुर० । क्वुन् शिल्पिसञ्ज्ञयो. ॥ क्षुरइववा । इवे प्रतिकृताविति कन् ॥ भूताङ्कुशे ॥

क्षुरकर्म्म । न । चौरे ॥ देवकार्य्ये पितृश्राद्धे रवेरशपरिच्चये । क्षुरकर्म्म न कुर्वीत जन्ममासे च जन्मभे ॥

क्षुरधानम् । न । नापितोपस्कराधाने । गुच्छी इतिपर्वतीयभाषा ॥ क्षुरो धीयतेऽस्मिन् । धाञोल्युट् ॥

क्षुरधारः । पुं । नरकविशेषे ॥ अस्त्रविशेषे ॥

क्षुरपत्रः । पु । शरे ॥ त्रि । क्षुरतुल्यपर्णयुक्ते ॥

क्षुरपत्रिका । स्त्री । पालक्यशाके । पालक् इतिभाषा ॥

क्षुरप्रः । पु । शरविशेषे ॥ घासच्छेदनास्त्रे । खुरपा इतिभाषा ॥

क्षुरभाण्डम् । न । क्षुराधारे । गुच्छी इतिपर्वतीयभाषा ॥

क्षुरमर्दी । पु । नापिते ॥

क्षुरमुण्डी । पु । नापिते ॥ मुण्डं करोतीतिमुण्डी । क्षुरेण मुण्डी ॥

क्षुराङ्गः । पु । गोक्षुरे ॥

क्षुरिका । स्त्री । पालक्यशाके ॥

क्षुरिकापत्रः । पु । शरे ॥

क्षुरिणी । स्त्री । नमस्कार्याम् । वराहक्रान्तायाम् ॥ नापितभार्यायाम् ॥

क्षुरी । पु । नापिते ॥ क्षुरोऽस्यास्ति इनि. ॥

क्षुरी । स्त्री । छुरिकायाम् ॥

क्षुद्रः । त्रि । अल्पे ॥ स्वल्पे ॥ क्षोदनम् । क्षुदिर् सम्पेषणे । सं०क्विप् । क्षुदं लाति । आतोनुपेतिक । तोर्लि ॥ यद्वा । क्षुद्यते । स्फायितञ्चीतिरक् । रलयोरेकत्वम् । कपिलकादित्वाल्लत्वम् ॥

क्षुद्रकः । पु । क्षुद्रमत्स्ये ॥ नीचे । पामरे ॥ अल्पे ॥ कनिष्ठे ॥ दुःखिते ॥ खले ॥ क्षुद्रशब्दात् स्वार्थेकन् ॥ यद्वा । क्षुणत्ति क्षुद्यते वा । क्षुदिर्० क्षुदस्योरेवा । स्फायीतिरक् । क०लत्वम् ॥ यद्वा । क्षुधालक्काते । लकआस्वादने । पुसीतिघ ॥

क्षेत्रम् । न । शरीरे । इन्द्रियाद्य करणसंस्थिते भोगायतने ॥ यथोक्तम् । इन्द्रियाणि दशैकञ्च पञ्चेन्द्रियगोचराः । इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ॥ एतत् क्षेत्रं समासेनसविकारमुदाहृतमिति ॥ सस्यस्येवाभिनवसकृत्कर्मणः फलस्य निर्वृत्ते ॥ केदारे । व्रीह्याद्युत्पत्तिस्थाने ॥ सिद्धस्थाने ॥ कलत्रे । पत्न्याम् ॥ भारतादौ ॥ भगे ॥ अङ्गे ॥ मेषादिराशौ ॥ यथा । मेषस्तथा रश्च क्षेत्रं शुक्रस्य कीर्तितम् । मिथुनं बुधस्येव सोमस्य कर्कटस्तथा ॥ सूर्यक्षेत्रं भवेत् सिंहः कन्या क्षेत्रं बुधस्य च । तुलाक्षेत्रं तु शुक्रस्य भौमस्य दृश्चिकस्तथा । धनुः सुरगुरोः क्षेत्रं शनेर्मकरकुम्भकौ ॥ मीनः सुरगु

रोश्चैव ग्रहक्षेत्रं प्रकीर्त्तितम् ॥ ज्ञी लावण्यादि प्रसिद्धे गणितव्यवहारे ॥ क्षयति क्षीयते अनेन वा। चित्र वे क्षिनिवासगत्योर्वा। ष्ट्रन् ॥

क्षेत्रकर। पु। क्षेत्रस्य कर्त्तरि॥ क्षेत्र करोति। दिवाविभेत्यादिनाट ॥

क्षेत्रकर्कटी। स्त्री। वालुङ्क्याम्॥

क्षेत्रचिर्भिटा। स्त्री। चिर्भिटायाम्। पाण्डुफलायाम्॥

क्षेत्रज। पु। द्विपिष्टके पुत्रविशेषे। स्वपत्न्यामन्यद्वाराजनितेपुत्रे॥ यथाहवेदव्यासः। मृतस्य च प्रकृतौ यः क्लीबस्य व्याधितस्य वा। अन्येनानुमतौ वा स्यात् स्वक्षेत्रे क्षेत्रजः स्मृत इति। अस्यार्थः। क्लीवादेः स्वे क्षेत्रे तदनुमतौ ऽन्येन प्रहृत क्षेत्रजो भवति। मनुरप्याह। यस्तल्पजः प्रमीतस्य क्लीवस्यव्याधितस्य वा। स्वधर्मेणनियुक्तायां सपुत्रः क्षेत्रजः स्मृत इति॥ त्रि। क्षेत्रजाते॥

क्षेत्रजा। स्त्री। ताम्बुइति गौडभाषा प्रसिद्धेतृणविशेषे। गोमूत्रिकायाम्। रक्ततृणायाम्॥ चक्षिकायाम्॥ ग्रामवर्त्यलाम्॥ शिल्पिकायाम्॥ श्वेतकण्टकार्याम्॥

क्षेत्रज्ञ। पु। आत्मनि। पुरुषे। शरीरस्य कर्मसु प्रवर्त्तयितरि। शरीराधिदैवते॥ योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते। इति मनुः॥ क्षेत्राण्याहुः शरीराणि तेषाञ्चैव यथासुखम्। अत्मानं वेत्ति संयोगाद्दत क्षेत्रज्ञउच्यते इति ब्रह्मपुराणम्॥ क्षेत्रज्ञो नाम व्यष्टिदेहेद्रियमोचनुषि व्यवस्थितोऽष्टा चक्षुषो करणाना नियन्ता कार्यकरणस्वामी हिरण्यगर्भविराडात्मभ्यां समष्टिदेहाभ्यामन्य इतिव्याख्यातारः॥ त्रि। छेके। निपुणे। विदग्धे॥ कृषके॥ क्षीयते इति क्षेत्रं शरीरं तज्जानाति। ज्ञाअवबोधने। आतोनुपसर्गेक॥

क्षेत्रदूतिका। स्त्री। हहत्याम्॥

क्षेत्रदूती। स्त्री। श्वेतकण्टकार्याम्॥

क्षेत्रपति। पु। क्षेत्रपाले॥ रुद्रादिषु॥ यथा। रुद्रं क्षेत्रपतिम् प्राहुः केचित् हृष्णिं मयापरे। स्वतन्त्रएव वा कश्चित् क्षेत्रस्यपतिरुच्यतेइति॥

क्षेत्रपर्पटी। स्त्री। खेत्पापड़ा इति प्रसिद्धे क्षुप विशेषे॥

क्षेत्रपाल। पु। देवताविशेषे॥ भेदा एकोनपञ्चाशत् क्षेत्रपालस्यकीर्त्तिता। मातृकाक्षरभेदेन सम्भिन्नानाम भेदत इति॥ प्रयोजनन्त्वेतत्। नामयक्षस्यन्नामायोक्षरो मातृकान्तरे

। दृश्यते प्रथमं तत्र तत्रायं क्षेत्रपालक ॥ क्षेत्रपालमसम्पूज्यय' कर्म कुरुते क्वचित । तस्यकर्मफलं हन्ति क्षेत्रपालो नसंशयइत्यादि ॥ विशेष प्रयोगसारेद्रष्टव्य ॥

क्षेत्ररुहा । स्त्री । वालुकीकर्कट्याम् ॥ त्रि । क्षेत्रजाते ॥

क्षेत्रवित । पु । जीवात्मनि ॥ क्षेत्रज्ञे ॥

क्षेत्रसम्भव' । पु । चक्षुक्षुपे ॥ भिफ्लक्षुपे ॥ त्रि । भूमिजे ॥

क्षेत्रसम्भूत । पु । कुन्दरे ॥ त्रि । क्षेत्रोद्भवे ॥

क्षेत्राजीव । त्रि । कर्षके । किसाण इति प्रसिद्धे ॥ क्षेत्रम् आजीवोजीविकास्य ॥

क्षेत्राधिदेवता । स्त्री । तीर्थाधिप देवतायाम् ॥ देवं गुरुं गुरुस्थानं क्षेत्र क्षेत्राधिदेवताम् । सिद्ध सिद्धाधिकारांश्चश्रीपूर्वं समुदीरयेत् ॥ इति प्रयोगसार ॥

क्षेत्राधिप । पु । मेषाद्यधिपतिग्रहेषु ॥ कुजशुक्रबुधेन्द्वर्कसौम्यशुक्रावनीभुवाम् । जीवार्किभानुजेज्यानां क्षेत्राधिपाःसुरजादय.॥ इतिज्योतिषम् ॥

क्षेत्रामलकी । स्त्री । भूम्यामलक्याम्॥

क्षेत्रिक. । पु । क्षेत्रस्वामिनि ॥

क्षेत्री । पु । क्षेत्रविशिष्टे । कृषीवले ॥ इनि ॥ भर्त्तरि ॥

क्षेत्रिय । पु । असाध्यरोगे ॥ परदाररते । पारदारिके ॥ अन्यदेहचिकित्सार्हे ॥ परक्षेत्रेचिकित्स्य. । शरीरान्तरेचिकित्स्यइत्यर्थ । क्षेत्रियच् परक्षेत्रेचिकित्स्य इति परक्षेत्रशब्दात्घच् परशब्दस्यलोपश्चनिपात्यते ॥ अन्यस्यभार्यायामन्येनोत्पादिते । यथा विचित्रवीर्यस्यक्षेत्रे क्षत्रियायां ब्राह्मणोत्पादिता धृतराष्ट्रादय. क्षेत्रिया ॥ न । क्षेत्रजतृणे ॥

क्षेत्रेक्षु' । पु । यावनाले । जुन्हरी जुवार इति भाष ॥

क्षेप । पु । निन्दायाम् ॥ विक्षेपे ॥ लेपने ॥ गर्वे ॥ प्रेरणे ॥ लङ्घने ॥ विलम्बे ॥ हेलायाम् ॥ गुच्छे ॥ क्षेपणम् । क्षिपप्रेरणे । घञ् ॥

क्षेपक । त्रि । क्षेपकर्त्तरि ॥

क्षेपणम् । न । प्रेरणे । क्षिपायाम् ॥ प्रस्तरादीनां दूरप्रक्षेपणार्थं रज्जुनिर्मिते शिक्ययन्त्रे । गोफिया इति भाषा ॥ यापने ॥ यथा । विधवा यौवनस्थाच नारी भवति कर्कशा । आयुष क्षेपणार्थन्तु दातव्यंशोभनं सदेति हारीत ॥

क्षेपणि: । स्त्री । डाँड इतिख्याते नौ

गैलग्रहमिति राजमार्त्तण्ड ॥ व्य ञ्जनविशेषे । मत्स्यघण्टे ॥

गलत् । त्रि । स्रंसमाने ॥ स्रवति ॥

गलन्तिका । स्त्री । कर्कर्याम् । स्वल्प वारिधान्याम् । आल्वाम् ॥ गलति । गल० । लट शतृशानचावितिश तृ । उगित्वात् ङीप् । शप्श्यनो-रितिनुम् । स्वार्थे कन् ॥

गलमेखला । स्त्री । कण्ठाभरणविशेषे । कण्ठसूत्रे । सूत्राख्याम् । सकरी तोडा इतिच भाषा ॥

गलव्रतः । पु । मयूरे ॥ इति त्रिकाण्ड शेष ॥

गलशुण्डिका । स्त्री । तालूर्ध्वलम्ब जिह्वायाम् । घण्टिकायाम् । सुधा स्रवायाम् ॥

गलस्तनी । स्त्री । छाग्याम् ॥

गलहस्त । पु । अर्द्धचन्द्रे ॥ गलेहस्त ॥

गला । स्त्री । अलम्बुषायाम् । वल्लाल प्रभेदे ॥

गलाङ्कुर । पु । गलरोगविशेषे । रोहि ण्याम् ॥ तस्य सम्प्राप्तिपूर्वक लक्षण यथा । गले ऽनिल पित्तकफौच मूर्च्छितौ प्रदूष्य मांसञ्च तथैवशो णितम् । गलोपसरोधकरै स्तथा ङ्कुरैर्निहन्त्यसून् व्याधिरयञ्च रो हिणीति ॥

गलानिल । पु । चिङ्गिडिमाच् इति गौडप्रसिद्धे मत्स्ये । गङ्गाटेये ॥ गलानिक गलाविल इतिच क्वचि त्पाठ ॥

गलि । पु । दुष्टवृषे । शक्तोप्यधुर्वो हो वृषो गलिरित्युच्यते । गलियाबैल इति भाषा ॥ गुणानामेव दौरात्म्या द्दुरिधुर्यो नियुज्यते । असञ्जातकि णस्कन्ध सुखस्वपिति गौर्गलिः ॥

गलित । त्रि । च्युते । पतिते । स्रस्ते । हस्तादितोभ्रष्टे ॥ गल्यतेस्म । गल० । क्त ॥ गत्यर्थाकर्मकेतिक र्त्तरि वा क्त ॥ रिक्ते ॥

गलेगण्ड । पुं । पक्षिविशेषे । मर्कटे । अस्थिगिला हाडगिला इतिचभाषा॥

गलेस्तनी । स्त्री । छाग्याम् ॥

गलोद्देश । पुं । निगारे ॥ गलस्योद्दे श समीपभागः ॥

गल्या । स्त्री । गलसमूहे ॥ गलानांस मूह । पाशा०य । गलोहस्ताश्च ॥

गल्ल । पु । गण्डे । गाल इति भाषा ॥

गल्लक । पु । चषके । मद्यपानपात्रे ॥

गल्लर्क । पु । चषके ॥ इन्द्रनीलमणौ ॥

गवय । पु । रोझ इति भाषाप्रसिद्धे गलकम्बलहीने गोसदृशपशौ । ग वाक्षके । वनभद्रे । मणगन्ध ॥ अस्य मांसपाकविधिर्यथा । तैले स

म्याचिते तप्ते हिङ्गुसैन्धवसंयुते । मांसं गवयसम्भूतं सुस्विन्नं भूरिवा-खेति ॥ गवयो मधुरो वृष्य स्निग्धो ष्णःकफपित्तल । विदाही गुरुविष्ट म्भी विपाके विरस. सदेच्यस्य मां सस्य गुणा ॥ वैवस्वतपुत्रे वानरविशे षे । यथा । रामायणे । पुत्रा वैवस्व तस्याथ पञ्चकालान्तकोपमा । गयो गवाक्षो गवय शरभो गन्धमादन. इति ॥ गवते । गुङ् शब्दे । वा० अय ॥ यद्वा । गवनम् । ऋदोरप् । गव गवेनवा याति । या० । मू० क ॥

गवयी । स्त्री । गवययोषायाम् । वन धेनौ । भिल्लगव्याम् ॥ योपधप्रतिषे धे गवयहयमुकयमनुष्यमत्स्यानाम प्रतिषेधइति जातिलक्षणोङीष् ॥

गवराज । महोक्षे । वृषे ॥ इति शब्द चन्द्रिका ॥

गवलः । पु । वनमहिषे ॥ न । महिष शृङ्गे ॥ अलति । अलभूषणादौ । अच् । गवामलम् ॥ यद्वा । गवनम् । गुङ्० । ऋदोरप् । गवलाति । क ॥

गवाक्ष । पु । जाली झरोखा इतिच भाषाप्रसिद्धे वातायने । वधूदृगयने । जालके ॥ वैवस्वतपुत्रे कपिविशेषे ॥ गवाक्षिरणा नामश्चैव । अक्षिशब्दो रन्ध्रवाची । अक्ष्णोदर्शनादित्यच् ॥ गावोजलानि किरणानि वा । अ श्नन्ति व्याप्नुवन्ति एतमनेन वा । अ शूव्याप्तौ । अकर्त्तर्येर्थे घञ् ॥

गवाक्षी । स्त्री । इन्द्रवारुण्याम् ॥ गो डुम्बायाम् । गोमुक् इति गौडभा षा ॥ शाखोटे । शेउडा इति भाषा ॥ अपराजितायाम् ॥ गां भूमिम श्नोति । अशू० । कर्मण्यण् । ङीप् ॥

गवाची । स्त्री । पाँकालमाछ इति गौडभाषाप्रसिद्धे मत्स्ये ॥

गवादनम् । न । घासे ॥ गोभिरद्यते । अद० । ल्युट् ॥

गवादनी । स्त्री । इन्द्रवारुण्याम् ॥ ग वादनीद्वयं तिक्तं पाके कटुरसं लघु । वीर्योष्णं कामलापित्तकफप्लीहोद रापहम् ॥ श्वासकासापह कुष्ठगुल्म ग्रन्थिव्रणप्रणुत् । प्रमेहमूढगर्भाभग ण्डामयविषापहम् ॥ गवांघासादना ख्ये । गोदंलडावनीइतिच भाषा ॥ नीलापराजितायाम् ॥ गौ० ङीष् ॥

गवाशीरः । पु । गवये । गोसदृशे ऽर ण्यपशौ ॥

गवाशन । पु । गोभक्षके । मोची इति भाषा ॥ यथा । माताप्येका पिताप्ये को मम तस्य च पक्षिण । अहं मु निभि रानीत सचनीतो गवाशनै रित्युद्धट ॥

गवाषिका। स्त्री। लाक्षायाम्। जतुनि॥

गविनी। स्त्री। गवांसमूहे॥ खला दिभ्यइनिर्वक्तव्यः॥

गविष्ठः। त्रि। भूमिस्थे॥ स्वर्गस्थे॥

गविष्ठिर। त्रि। गविस्थिरे॥ हलद न्तादित्यलुक्। गवियुधिभ्यांस्थिर इतिषत्वम्॥

गवीश्वर। पु। गवांस्वामिनि। गोम ति। गोस्वामिनि॥ गवामीश्वरः॥

गवेङ्गितम्। न। शुभाशुभाय गवामाका रे॥ यथा। गावो दीना पार्थिवस्या ऽशिवाय पादैर्भूमिं कुट्टयन्त्यश्च रोगात्। मृत्युं कुर्वन्त्यश्रुपूर्णाय ताक्षाः पत्युर्भीता स्तस्करानाद्रव न्त्य॥ अकारणे क्रोशति चेदनर्थो भयाय रात्रौ वृषभः शिवाय। भृश निरुद्धा यदि मक्षिकाभि स्तदाशुह ष्टिंसरमात्मजै र्वा॥ आगच्छन्त्यो वे श्म रम्भारवेण संसेवन्त्यो गोष्ठकृष्टे गवां गाः। आर्द्राङ्ग्यो वा हृष्टरो माढ्या धन्या गाव स्तु वृद्धि दायोपिचैवम्॥ इतिवाराहीसंहितोक्त नवति:॥

गवेडु। स्त्री। आरण्यगोधूमाख्ये मु न्यन्ने। गरगह इतिगौडभाषा॥ गवे गवार्थंदीयते। दीङ्क्षये। मृगय्वादित्वात् कु। नैवतोदकार स्य ङः। तत्पुरुषेकृतीत्यलुक्॥

गवेधु। स्त्री। गवेडौ॥ गवेधु कटुका स्वादी कार्श्यकृत् कफनाशिनी॥

गवेधुकम्। न। गैरिके॥ इतिराज निर्घण्टः॥

गवेधुका। स्त्री। तृणधान्यविशेषे। ग ड्गडइति देधानइतिचगौडभाषा। गवेडौ॥ नागबलायाम्॥ गक्रिकूमौ धक्ते। गधा०। काहुलकादु। संज्ञा यांकन्॥

गवेरुकम्। न। गैरिके॥

गवेरुका। स्त्री। गोरक्षचाकुलिका इ तिगौडप्रसिद्धे वृक्षविशेषे॥ ‹ ‡।

गवेषणा। स्त्री। अन्वेषणायाम्। पर्ये षणायाम्। मार्गणे॥ धर्मान्वेषणे॥ गवेषमार्गणे। चु०। ण्यासश्रन्थोयुच्॥

गवेषितम्। त्रि। अन्वेषिते। मार्गिते॥ गवेष्यतेस्म। गवेष०। क्तः॥

गव्यम्। न। ज्यायाम्॥ रामइत्यो॥ त्रि। गोदुग्धादौ। गोसम्बन्धिनि सर्व स्मिन्॥ गव्य त्रिषु गवां सर्वम्। स र्वम् भवविकारावयवादि गवां गव्य म्॥ गविभवम् गौर्देवतास्य वा। गोरजादिप्रसङ्गे यत्॥ गोश्चिते॥ गवेच्छितम्। उगवादिभ्यो यत्॥ गोनिमित्तं संयोग उत्पातो वा। गोद्व्यो ऽसंख्यापरिमाणाश्वादेर्यत्

॥ गोरिदम् । गोपयसोर्यत । वान्तो यि प्रत्यये ॥

गव्या । स्त्री । गोत्रायाम् । गोवृन्दे ॥ गवांसमूह । खलगोरथात् इतिय ॥ गव्यूतौ ॥ गोरोचनायाम् ॥

गव्यूतम् । न । क्रोशे ॥ गव्यूतौ ॥

गव्यूति । स्त्री । क्रोशयुगे । द्विसहस्र धनुषि । गोरुते ॥ धन्वन्तरसहस्र न्तु क्रोश. क्रोशद्वय पुन । गव्यूत स्त्रीतु गव्यूति गोरुत गोमतच्च तत् ॥ गोर्यूतौ छन्दस्युपसख्यानम् । अ ध्वपरिमाणेचेत्यवादेश. ॥

गहनम् । न । घना इति भाषा प्रसिद्धे कानने । वने ॥ गह्वरे ॥ दु खे ॥ चि । कलिले । दुर्गमे । दुष्प्रवेशे ॥ पुं । परमात्मनि ॥ दुष्प्रवेशत्वात अवस्थात्रयभावाभावसाक्षित्वात् वा गहन. परमात्मा । अस्यस्वरूप सा मर्थ्यचेष्टितं वाज्ञातुंनशक्यते ऽतो गहन' ॥ गाह्यते गाहूविलोडने । बहुलमन्यत्रापीति युच् । पृषोदरा दित्वात् ह्रस्व । कृच्छ्र गहनयोरिति निर्देशाद्वा ह्रस्व: ॥

गहना । स्त्री । अलङ्कारे ॥ इति देवी पुराणम् ॥

गह्वर. । पु । निकुञ्जे ॥ न । गुहा याम् ॥ दम्भे ॥ वने ॥ विषमस्था



ने । अनेका ऽनर्थसङ्कटे ॥ गाह्यते । गाहू० । छित्वर छत्वरेतिसाधु. ॥

गह्वरी । स्त्री । गुहायाम् ॥

गा । स्त्री । गाथायाम् ॥

गाङ्ग । पु । भीष्मपितामहे ॥ कार्त्ति केये । गुहे ॥ गङ्गाया अपत्यम् । शि वादिभ्योऽण् ॥ त्रि । गङ्गासम्भूते ॥ न । गङ्गाजले ॥ धाराजले ॥ यदा स्या दाश्विने मासिसूर्ये स्वाति विशा खयो । तदा न्तु जलदै र्मुक्त गाङ्ग मुक्त मनीषिभि ॥ आकाशगङ्गास म्बन्धि जल माहाय दिग्गजा । मे घै रन्तरिता वृष्टि कुर्वन्तीतिवच सताम् ॥ गाङ्ग माश्वयुजे मासि प्रा यो वर्षति वारिद । सर्वथा तज्जल देय तथैवचरकेवच. ॥ स्थापिते हेमजेपात्रे राजते मृन्मये ऽपिवा । शाल्यन्नं येन ससिक्त भवे दक्लेद वर्णवत् । तद् गाङ्ग सर्वदोषघ्न ज्ञेय सामुद्र मन्यथा ॥ सामुद्र माश्विने मासि गुणै गाङ्गवदादिशेत् । यतो ऽगस्त्यस्य दिव्यर्क्षोदयात् सकलं ज लम् । निर्मल निर्विष स्वादु शुक्लं स्या ऽद्दोषलम् ॥ यत आह । भू त्कारविषवातेन नागाना कोपका रिणाम् । वर्षासु सविष तोय दि व्य अगस्त्योदयमं विनेत्ति ॥

गाङ्गट । पु । ⎫
गाङ्गटक । पु । ⎬ चिङ्गडिमाच् इति गौडभाषाप्रसिद्धे मत्स्ये ॥ इतिशब्दरत्नावली ॥
गाङ्गटेय । पु । ⎭

गाङ्गायनि । पु । भीष्मे । शान्तनवे ॥ गुहे ॥ गङ्गाया अपत्यम् । तिकादिभ्य फिञ् ॥

गाङ्गेय । पु । भीष्मे ॥ स्कन्दे ॥ इल्लीशमीने ॥ भद्रमुस्तायाम् ॥ न । कशेरुणि ॥ मुस्ते ॥ स्वर्णे ॥ य गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्ब पर्वते न्यस्तं हिरण्यसमपद्यत ॥ गङ्गाया अपत्यम् । शुभ्रादिभ्य श्चेति ढक् ॥

गाङ्गेरुकी । स्त्री । गोरक्षतण्डुलायाम् । नागबलायाम् ॥ गाङ् गजलमीरयति । ईरगतौ चेपणेच । मृगय्वादयश्चेति कु । स्वार्थेकन् । गौरादिङीष् ॥

गाङ्गेष्ठी । स्त्री । कटशर्करालतायाम् । नटा इतिगौडभाषाइति हारावली ॥

गाजरम् । न । गृञ्जने । नारङ्गवर्णके ॥ गाजर मधुरं तीक्ष्णं तिक्तोष्णं दीपन लघु । सङ्ग्राहि रक्तपित्ताशौ ग्रहणीकफवातजित् ॥

गाञ्जिकाय' पु । वर्त्तिकापक्षिणि ॥

गाढम् । न । दृढे ॥ तीव्रे ॥ त्रि । तद्युते ॥ अवगाढे । सेविते ॥ तपस्विगाढांतमसां प्रापेतिरघु' ॥ गाह्यते स्म । गाहू विलोडने । क्त ॥

गाढमुष्टि । पुं । खड्गे ॥ त्रि । कृपणे ॥ गाढामुष्टिर्यस्य ॥

गाढावटी । स्त्री । चतुरङ्गक्रीडामध्ये क्रीडाविशेषे ॥ यथा । नौकैका वटिका यस्य विद्यते खेलने यदि । गाढावटीति विख्याता पद तस्य न दुष्यतीति ॥

गाणपत । त्रि । गणपतिदेवताके ॥ गणेशोपासके ॥ गणपतिर्देवताऽस्य । अश्वपत्यादिभ्यश्चेतिण्यापवादोऽण् । गाणपत्योमन्त्रइतितु प्रामादिकमेव । गणपतिश्चेत्नपत्यादीनामश्वपत्यादिषुपाठात् ॥ गणपतिसम्बन्धिनि ॥

गाणपत्यम् । न । गणपतित्वे ॥ गणपते कर्मभावो वा । गुणवचनब्राह्मणादिभ्य कर्मणिचेतिष्यञ् । गणपत्यधिपतिशब्दयोर्ब्राह्मणादिषु पाठात् ॥

गाणिक्यम् । न । वेश्यावृन्दे ॥ गणिकानां समूहः । गणिकाया यञिति वक्तव्यमिति यञ् ॥

गाणेयः । त्रि । गणनीये । गणयितुं शक्ये ॥ गण्यते । गण सङ्ख्याने । श

चोयत् । सञ्ज्ञापूर्वकत्वान्न खिलो प । चिन्तिपूजी त्यङ् वि धानाद्वा भावार्थाद्वा ॥ अन्यथा ऽप्रत्ययादि त्यनन्तर पठित्वा अकारमेव विद् ध्यात् ॥

गाण्डिव । पु । न । अर्जुनस्यधनुषि ॥ कार्मुकमात्रे ॥ गाण्डि ग्रन्थि रस्या स्ति । गाण्ड्यजगात्सञ्ज्ञायामितिव ॥

गाण्डीव । पु । न । गाण्डिवे ॥ गाण्डी ग्रन्थिरस्यास्ति । कृदिकारादितिङी षन्तात् गाण्ड्यजगादितिव ॥

गाण्डीवभूषण । पु । अर्जुने ॥ ध नुष्के । धनुष्मति ॥ गाण्डीव भूषणमस्य ॥

गाण्डीवी । पु । अर्जुने । कौन्तेये ॥ चापिनि । धानुष्के ॥ अर्जुनवृक्षे ॥ गाण्डीवोस्यास्य । इनि ॥

गातु । पु । पुंस्कोकिले ॥ भृङ्गे ॥ ग न्धर्वे ॥ त्रि । रोषणे ॥ गायति । गैशब्दे । गातेवा । गाङ्गतौ । क मिमनिजनिगाभा याहिभ्यश्चेतितु ॥ गायने ॥

गाता । पु । गायके ॥ गायति । गै० ॥ तृच् ॥

गात्रम् । न । गजाग्रजङ्घादौ । गजाग्र भागे ॥ अङ्गे ॥ कलेवरे । इन्द्रिया यतने । शिर पाण्याद्यवयव नां समु दये । गात इति भाषा ॥ गातेऽने न वा । गाङ्गतौ । ष्ट्रन् ॥ इति वा । बहुलतमीत इत्योगा ॥ यद्वा । गच्छति । गम्लृ० । गमेराचेति त्रन् । आचान्तादेश ॥

गात्रभङ्गा । स्त्री । शूकशिम्ब्याम ॥

गात्रवत्य । पु । तापसविशेषे ॥ केवल गात्रैरेव य शेते स ॥

गात्रसङ्कोची । पु । जाहकजन्तौ ॥

गात्रसम्प्लव । पु । प्लवपक्षिणि ॥

गात्रानुलेपनी । स्त्री । अनुलेपनवर्त्यां म् । वर्णके । विलेपने । गात्रानुले पयोग्ये पिष्टद्रव्यसुगन्धिद्रव्ये ॥ गा त्रमनुलिप्यते ऽनया । करणेति ल्युट् । ङीप् ॥

गात्रिका । स्त्री । गाती इति लोकप्र सिद्धे ॥

गाथक । पु । गायके । गानोपजीविनि ॥ गायति । गै० । गस्थकन् ॥

गाथा । स्त्री । श्लोके ॥ संस्कृतान्यभा षायाम् । प्राकृतभाषायाम् ॥ गेये ॥ वृत्ते । अचरसङ्ख्यातपद्ये ॥ यथा । पादे द्वादश विषमे मात्रा स्त्वष्टादश द्वितीयेहि । पञ्चदश चैत तुरीये कथिता गाथा तथैवार्येति ॥ गीयतेऽसौ । गाङ्० । उषिकु षिगार्तिभ्यस्थन् ॥

गाध । पु । तलस्पर्शे । स्थाने ॥ लुप्त

रे। गाछन इति पाँजइतिचभाषा ॥ खिष्पायाम् ॥

गाधि । पु । कान्यकुब्जदेशाधिपेचन्द्रवंशीयकुशिकराजस्यपुत्रे विश्वामित्रमुने पितरि ॥

गाधिज । पु । विश्वामित्रमुनौ ॥ गाधेर्जात । जनी०। ड ॥

गाधिपुरम् । न । कान्यकुब्जे कनौज इतिख्याते महोदयपुरे ॥

गाधिभू । पु ।
गाधिसुत. । पु । } विश्वामित्रे ॥
गाधेयः । पु ।

गानम् । न । गीते । गेये ॥ ध्वनौ ॥ गैशब्दे । ल्युट् ॥ मार्गो देशीच गानस्य प्रकारौ द्वा वुदीरितौ ॥

गानिनी । स्त्री । वचायाम् ॥

गान्तु । त्रि । गन्तरि ॥ गच्छति । गम्लृ०। कमिगमि चमिभ्यस्तुन्ह्रस्वश्च ॥

गान्त्रम् । न । शकटे ॥ गम्यतेऽनेन । गम्लृ० । भ्रसृजिगमिनमिहनिविश्यशांवृद्धिश्चेतिष्ट्रन ॥

गान्दिनी । स्त्री । श्रीगङ्गायाम । जाङ्व्याम् ॥ अक्रूरयादवमातरि ॥

गान्दिनीसुत । पु । भीष्मपितामहे ॥ अक्रूरयादवे ॥

गान्धर्वः । पु । गन्धर्वे ॥ विवाहविशेषे यथा । इच्छयाऽन्योन्यसयोगः कन्यायाश्च वरस्य च । गान्धर्वः सतु विज्ञेयो मैथुन्य. कामसम्भव इति ॥ गान्धर्वः समयान्मिथइतिच । यत्र कन्यावरयो रन्योन्यानुरागात् त्व मे भार्य्या त्व मेपति रितिनिश्चय स इत्यर्थ. ॥ अष्टविधदैवसर्गान्तरे ॥ भारतवर्षीयोपद्वीपविशेषे ॥ न । गाने ॥ सामवेदस्योपवेदे । पदावस्थितगानपरिच्छेदप्रयुक्तावधानेन पृथक्षड्जादिस्वरसमुदाये ॥ तदाहदत्तिल । पदस्थस्वरसङ्घात स्तालेन स मितस्तथा । प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते ॥ इति ॥ गन्ध सौरभम् अर्वति । अर्वगतौ । कर्मण्यण् । शकन्ध्वादि । तत प्रज्ञाद्यण् ॥ त्रि । गन्धर्वसम्बन्धिनि ॥

गान्धार' । पु । सिन्दूरे ॥ रागप्रभेदे ॥ तत्स्वरूप यथा । जटां दधानः कृतभूतिभूषणा काषायवासा स्तमुदेवयष्टि' । सयोगपट्ट कृतनेत्रमुद्रोगान्धाररागः कथित स्तपस्वीति ॥ अयंभैरवरागस्य पुत्र । प्रत्यूषोऽस्यगानसमय ॥ कन्धार इति भाषाप्रसिद्धे देशे ॥ गन्धारदेशे भव । कच्छादिभ्यश्चेत्यण् ॥ गन्धारोऽभिजनोऽस्यवा सिन्ध्वाद्यण् ॥ न्वपान्तरे ॥ गान्धारिः अपत्यम् । साल्वेयगान्धारि-

भ्याञ्चेत्थम् । तस्य राजन्यप्येवम् ॥ तन्त्रीकण्ठोत्थिते सप्तस्वरान्तर्गते तृतीयस्वरे ॥ अजाविकौच गान्धारं नदत । तस्योत्पत्त्यादि यथा । वायु समुद्गतो नाभेः कण्ठशीर्षसमाहत । नानागन्धवहः पुण्यो गान्धारस्तेन हेतुनेति ॥ अपिच । नाभेः समुद्गतो वायुर्मन्थशीर्षे च चालयन् । स शब्दस्तेन निर्याति गान्धारस्तेन कथ्यते ॥ चतस्रः पञ्चमे षड्जे मध्यमे श्रुतयो मताः । ऋषभे धैवते तिस्रो द्वे गान्धारनिषादकेइति ॥ न । गन्धरसे ॥

गान्धारराज । पु । महाभारतप्रसिद्धे शकुनिनाम्नाख्याते दुर्योधनस्य मातुले ॥

गान्धारी । स्त्री । धृतराष्ट्रस्य पत्न्याम् ॥ जिनानां शासनदेवताविशेषे ॥ यवासे ॥ दुरालभायाम् ॥ नाडीविशेषे ॥ यथा । इडापृष्ठेतु गान्धारी मयूरगलसन्निभा । सव्यपादादिनेत्रान्तागान्धारीपरिकीर्त्तितेति ॥ गाँभा इतिप्रसिद्धे मादक द्रव्यविशेषे ॥ इति विष्णुसिद्धान्तसारावली वैद्यक ग्रन्थ ॥

गान्धारेय । पु । दुर्योधनन्टपे ॥ गान्धार्या अपत्यम् । स्त्रीभ्योढक ॥

गान्धिक । पु । लेखके ॥ सुगन्धिद्रव्यव्यापारिणि । गन्धवणिजि ॥ सतु अम्बष्ठात् राजपुत्र्यांजात.सङ्करजाति । अस्यकर्म लिखन गन्धदानञ्चेति पराशर ॥ गाँधियोन्ना इति गौडभाषा प्रसिद्धे कीटविशेषे ॥

गामुक । त्रि । गमनशीले । गन्तरि ॥ गच्छति तच्छील । गम्लृ० । लषपतपदस्थाभूटषहनकमगमशृभ्य उकञ् इत्युकञ् ॥

गाम्भीर्य्यम् । न । अक्षोभ्यत्वे ॥ गम्भीरेभवम् । गम्भीरात्ञ्य. ॥ गम्भीरत्वे । अगाधत्वे ॥ पीत्वा शर्वन्यपत्तौ दिशि दिशि जलदा स्व शरण्यो गरीणां क्रूचामान्नासभाजा ममरविटपिनां जन्मभूमि स्वमेव । गाम्भीर्यं किञ्च तादृक् त्वयि सलिलनिधे किन्त विद्मापयाम सर्वोपायेन मैनाकस्यामुनिकृपाद्दष्टय काकुत्स्थीया ॥

गायक । त्रि । गातरि । गायने ॥ गन्धर्वे ॥ गायति । गै० । ण्वुल ॥

गायत्रम् । न । सामविशेषे ॥ त्रि । गायत्री सम्बन्धिनि ॥

गायत्री । पु । खदिरवृक्षे ॥ वह्निगायत्रियातथेति वैद्योक्ते । ब्री० इनि ॥ गायन्तस्त्रोचवत्युद्गातरि ॥

गायत्री । स्त्री । त्रिपदादेव्याम् । वेद

मातरि ॥ गायन्तं त्रायते । त्रैङ्पालने । आतोनुपसर्गे इतिक । गै० ङीष् ॥ यथाहव्यास । प्रतिग्रहान्न दोषाच्च पातका दुपपातकात् । गायत्री प्रोच्यतेतस्माद्गायन्तंत्रायतेयत इति ॥ अपिच । न भिन्नां प्रतिपद्येत गायत्री ब्रह्मणा सह । सोहमस्मीत्युपासीत विधिनायेनकेनचिदिति ॥ अस्या स्थान पुष्करे ॥ उपलभ्यचसावित्रीं नोपतिष्ठेतयो द्विज । कालेचिकालंसमाहात् सपतेन्नात्र संशय ॥ गायत्रीमन्त्रतोयाच्युदत्तयेनाञ्जलित्रम् । कालेसाविचिकेण स्यात् तेनदत्त जगत्त्रयमिति पद्मपुराणम् ॥ दुर्गायां देव्याम् । भवान्याम् ॥ यथा । गायनाद् गमनादापि गायत्रीत्रिदशार्चितेतिदेवी निरुक्ताध्याय ॥ यद्वा । गानङ् गाय । भावे घञ् । युक । गायेन गानेन त्रायते । त्रैङ्० । सुपीतियोगविभागात् क ॥ खदिरद्रुमे ॥ षडक्षरे छन्दोवि । तस्यावृत्तिस्त्रिविधा । यथा । तनुमध्या १ शशिवदना २ सोमराजीति । उदाहरणन्तु तत्तत्स्थाने द्रष्टव्यम् ॥

गायन । त्रि । गायके । गाथके ॥ गायति । गै० । ण्युट्चेति शिल्पिनि कर्त्तरि ण्युट । आतोयुक् ॥ जल्पाके ॥

गायनी । स्त्री । गानकर्त्र्याम् ॥ टित्त्वान्ङीप् ॥

गायिका । स्त्री । गायन्याम् ॥ ण्वुलन्तात् गायकात् स्त्रियां टाप । प्रत्ययस्थादितीत्त्वम् ॥

गारित्रम् । न । ओदने ॥ गीर्यते । गॄ० । भूवादिगॄभ्योणित्रन् इति णित्रन् प्रत्यय ॥

गारुडम् । न । क्ष्वेडमन्त्रे ॥ मरकतमणौ ॥ विषशास्त्रे ॥ गरुडपुराणे ॥ अस्यश्लोकसंख्योक्तादेवीभागवते यथा । एकोनविंशत्साहस्रं गारुडं हरिभाषितमिति ॥ स्वर्णे ॥

गारुडिक । पु । विषवैद्ये ॥

गारुडी । स्त्री । पातालगरुडीलतायाम् ॥ विद्याविशेषे ॥

गारुत्मतम् । न । मरकते । हरिन्मणौ । पन्ना इति भाषा ॥ गरुत्मतो जातम् । तस्येदमित्यण् ॥

गारुत्मतपत्रिका । स्त्री । पाचीलतायाम् ॥

गार्गी । स्त्री । बृहदारण्यकोपनिषत्प्रसिद्धायां ब्रह्मवादिन्यां वचक्नुतनयायाम् । वाचक्नव्याम् ॥ गर्गस्यापत्यं स्त्री । गर्गाद्यञ् । यञश्चेतिङीप ।

कलस्तद्धितस्येतियलोप ॥

गार्गीयम् । त्रि । गर्गप्रोक्त ॥

गार्ग्य । पु । मुनिविशेषे ॥ गर्गस्यगोत्रापत्यम् । ग० यञ् । वहुत्वेगर्गाः ॥

गार्ध्यम् । न । लिप्सायाम् । आकाङ्क्षायाम् । तृष्णाभरे ॥ गृध्नुभाव । चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ॥

गार्भपत्र । पु । गृध्रपक्षयुक्ते वाणे ॥

गार्भ । पु । गर्भशुद्ध्यर्थं क्रियमाणे कर्मविशेषे ॥ त्रि । गर्भसम्बन्धिनि ॥ तस्येदमित्यण् ॥ गर्भाधानादौ ॥

गार्भिकम् । त्रि । गर्भसम्बन्धिनि ॥

गार्भिणम् । न । गर्भिणीना समूहे ॥ तस्यसमूह इत्यधिकारे भिक्षादिभ्योण् इत्यणि भस्याढे इति पुंवद्भावेचकृते इनण्यनपत्ये इति प्रकृतिभाव ॥

गार्ष्टेय । पु । गृष्टिवत्से ॥ गृष्ट्याऽपत्यम् । गृष्ट्यादिभ्यश्चेतिढञ् ॥

गार्हपत्य । पु । यज्ञाग्निविशेषे ॥ गृहपति यजमान तेन सयुक्त । गृहपतिना सयुक्तेञ्य । काचसज्ञायामित्यनुवृत्तौ राजन्यादीनाति प्रसङ्ग ॥

गार्हस्थ । पु । गृहस्थे यागपुत्रादिकारणे द्वितीयाश्रमे ॥ स्वार्थिकेण् ॥

गार्हस्थ्यम् । न । गृहस्थत्वे ॥ गृहस्थस्य कर्म भावोवा । ष्यञ् ।

गालनम् । न । चालने चुवावना पसावना इति गलाउना इतिच भाषा ॥

गालव । पु । मुनिविशेषे ॥ लोध्रे ॥ केन्दुके ॥ गालवस्यापत्यम । कस्य न्यक्रोत्यण ॥

गालि । पु । शापे ॥ इतिविश्वात्रशेष । यथा । ददतु ददतु गालिं गालिमन्तो भवन्तोवय मिह तदभ वा ह्यालिदानेप्यशक्ता । जगति विदितमेतद्दीयते विद्यमान नहि शशकविषाण दीयतेय दद्यान्यैरित्युद्भट ॥

गालित । त्रि । कृतगालने । चुवायानिचोडा इतिच भाषा ॥ यथा । गालित दधि सुस्निग्ध मित्यादि ॥ द्रवीकृते ॥ यथा । गालितस्य सुवर्णस्य षोडशांशेन सीसकम् इति । गलाया इति भाषा ॥

गालिनी । स्त्री । मुद्राविशेषे ॥

गालोड्यम् । न । पद्मबीजे । कमलगट्टा इति भाषा ॥

गावल्गणि । पु । सञ्जये ॥ गवल्गणस्यापत्यम् । अतइञ् ॥

गावेधुक । त्रि । गवेधुकायाअवयवे । तद्विकारच ॥ बिल्वादित्वाण् ॥

गाहनम् । न । प्रवेशने ॥ गाहमादृनि

ख्याते निलोडने ॥

गी । स्त्री । भाषायाम् । वाचि । सरस्वत्याम् ॥ गृणात्यनेनाम् । गॄ शब्दे । । सं० क्विप् । ऋतइद्धातो ॥

गिरा । स्त्री । भणितौ । वचने ॥

गिरि । पु । गोत्रे । पर्वते ॥ मेरुमन्दरकैलासमलया गन्धमादन । महेन्द्र श्रीपर्वतश्च हेमकूट स्तथैव च ॥ अष्टा वेते तु सम्पूज्याभिरय पूर्वादिक् क्रमात् ॥ गिरियके ॥ नेत्ररुक्प्रभेदे ॥ पारदस्यदोषविशेषे ॥ सन्यासिना नामविशेषे ॥ यथा । सदोर्द्धबाहु र्यो वीरो मुक्तकेशो दिगम्बर । सर्वत्र समभावेन भाव ये चोमरोत्तम ॥ इष्टदेवीधिया नारीं स गिरि परिकीर्त्तितइति ॥ स्त्री । गोर्वो । गिलनार्हति भाषा ॥ बालमूषिकायाम् ॥ त्रि । पूज्ये ॥ गिलनम् । गॄ० । दृक् कृष्यादिभ्य ॥ बाहुलकात् किर्वा । ऋतइत् ॥ गिरतिवा । इगुपधात्कृटीमिदं किल् ॥

गिरिकण्टक । पु । वज्रे ॥

गिरिकदम्ब । पु । धाराकदम्बे । नीपे ।

गिरिकदली । स्त्री । बहुवीजायाम् । वनरम्भायाम् ॥

गिरिकर्णिका । स्त्री । पृथिव्याम् ॥ श्वेतकिणिहीवृक्षे ॥ अपराजिता-याम् ॥

गिरिकर्णी । स्त्री । अपराजितायाम् ॥ यवासे ॥ गिरि र्बालमूषिका कर्णाख्या' तत्कर्णतुल्यपत्रत्वात् । ङीष् ॥

गिरिका । स्त्री । बालमूषिकायाम् ॥ गिरे सञ्ज्ञायाकन् ॥

गिरिकाण । त्रि । गिरिरोगेणैकचक्षुर्हीने ॥

गिरिगुड । पु । गेण्डुके ॥

गिरिज । पु । मधूकवृक्षविशेषे । गौरशाके ॥ न । अभ्रके ॥ शिलाजतुनि ॥ शैलजे ॥ लोहे ॥ गैरिके ॥ त्रि । गिरिसम्भूते ॥ गिरेर्जातम् । जनी० । पञ्चम्यामितिड ॥ गिरौ जात वा । सप्तम्यांजनेर्ड. ॥

गिरिजा । स्त्री । गौर्याम् । पार्वत्याम् ॥ मातुलुङ्ग्याम् ॥ श्वेतवृन्ताकायाम् ॥ क्षुद्रपाषाणभेदायाम् ॥ नागमाताखतायाम् ॥ कारीवृक्षे ॥ मल्लिकायाम् ॥ गिरिकदल्याम् ॥ गिरेर्जाता । जनी० । पञ्चम्यामजाताविति ड. ॥

गिरिजामलम् । न । अभ्रके ॥ गिरौ-जात गिरिजम् । कम.त । अममतौ । इत्यादित्वात् कस । न मलमस्तेि ता । गिरिजश्चतदमलञ्च ॥ गिरिजाया मलं वा ॥

गिरिज्वर । पु । वज्रे ॥

गिरित्र । पु । शिवे ॥

गिरिदुर्गम् । न । पर्वतपृष्ठे ऽतिदुरारोहे सङ्कटैकमार्गोपेते ऽन्नर्नदीप्रस्रवणाम्बुदकयुक्ते बहुसस्योत्पन्नवृक्षान्विते राज्ञांनिवासस्थाने ॥ सर्वेषां तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् । एषांहि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥ एषां धन्वदुर्गादीनाम् । गिरिदुर्गे श्रमदुरारोहत्त्व महत्प्रदेशाद्ल्पप्रयत्नप्रेरितशिलादिना बहुविपक्षसैन्यव्यापादनमित्यादयो बहवो गुणा विद्यन्ते तस्मात् प्रयत्नेन तदाश्रयेत् ॥

गिरिधातु । पु । गैरिके ॥

गिरिनदी । स्त्री । शैलापगायाम् ॥ गिरेः प्रसृता नदी । गिरिनद्यादीनां चेतिपाक्षिको णत्वाभाव. । तेन पक्षे गिरिणदीत्यपि बोध्यम् ॥

गिरिनिम्ब । पु । महारिष्टवृक्षे ॥

गिरिपीलु । पु । पद्मपककवृक्षे । फालसा इति भाषा ॥ इतिराजनिर्घण्टु ॥

गिरिपुष्पकम् । न । शैलेये ॥

गिरिप्रिया । स्त्री । चमर्याम् ॥

गिरिभिद् । पु । पाषाणभेदवृक्षे ॥

गिरिभू । स्त्री । पार्वत्याम् ॥ क्षुद्रपाषाणभेदे ॥

गिरिमल्लिका । स्त्री । कुटैया इतिभाषाप्रसिद्धे कुटजवृक्षे ॥ गिरिमल्ली व । इत्यर्थकम् ॥

गिरिमल्ली । स्त्री । गिरिमल्लिकायाम् ॥

गिरिमृद् । स्त्री । गैरिके ॥

गिरिमृद्भवम् । न । गैरिके ॥

गिरिमेद । पु । विट्खदिरे ॥ इरिमेद इत्यपिपाठ ॥

गिरियक । पु । कन्दुके । गेन्दुके ॥ इतिहेमचन्द्र. ॥

गिरिवासी । पुं । हस्तिकन्दे ॥

गिरिश । पु । सदाशिवे । शङ्करे ॥ गिरि शेते ऽस्मत्वेना ऽस्यास्तीतिविग्रहे लोमादित्वात् श ॥ गिरौशेते गिरिश्यति उपभोगेन तनूकरोति वा । गिरौडच्छन्दसि । लोकेतु छान्दसानां क्वचिद्भाषायामपि प्रयोग इत्याशु मुखपित दिखाह स्वामी ॥

गिरिशालिनी । स्त्री । अपराजितायाम् ॥

गिरिशृङ्ग. । पु । गणेशे । विनायके ॥ न । अद्रिशिखरे ॥

गिरिसार. । पु । लोहे ॥ रङ्गे ॥ मलयाचले ॥

गिरिसुत. । पु । मैनाकपर्वते ॥

गिरिसुता । स्त्री । पार्वत्याम् ॥ यथा । अवतु वो गिरिसुता प्रभिभूत. प्रि

यतमा । विशतु वो हृदि सदा भग वत पदयुगमिति ॥

गिरीश । पु । स्थाणौ । रुद्रे । शिवे ॥ अद्रिपतौ । हिमाचले ॥ वृहस्पतौ ॥ गिरे कैलासस्य ईश ॥

गिलः । पु । जम्बीरे ॥ गिलति । गॄ० । मू० क । अचिविभाषेतिलत्वम् ॥

गिलग्राह । पु । कुम्भीरे । नाका इति भाषा ॥

गिलनम । न । गिरणे । भक्षणे ॥

गिलि । स्त्री । गिलने ॥ गरणम् । गॄ० । इक् कृष्यादिभ्य । अचिविभा षेतिलत्वम् ॥

गिलित । त्रि । भक्षिते ॥ गिलिर्जाता ऽस्य । तारकादित्वादितच ॥

गिष्ण । पु । सामवेदविदि ॥ गायके ॥

गीतम् । न । गाने ॥ तल्लक्ष० यथा । धातुमातुसमायुक्तं गीत मित्युच्य ते बुधैः । तत्र नादात्मको धातु र्मा तु रक्षरसञ्चय इति ॥ तद्द्विविध य था । गीतञ्च द्विविध प्रोक्तं यन्त्रगा त्रविभागत । यन्त्र स्याद्वेणुवीणादि गात्रन्तु मुखजमतम् ॥ अपिच । नि बद्ध मनिबद्धञ्च गीत द्विविध मुच्य ते । अनिबद्ध भवेद्गीत वर्णादिनि यम विना ॥ यत्तालमकधातुभि रनि बद्ध विना कृतम् । निबद्ध ञ्च भवे



द्गीत तालमानरसान्वितम् ॥ छ न्दोगमकधातुत्र वर्णादिनियमै कृ तम् ॥ * ॥ क्रमेण पञ्चमभूत्गीत सामभ्य समपद्यत । यजुर्भ्यो ऽभि नया जाता रसा श्चा ऽथर्वणः स्मृता ॥ ॥ अङ्गे रागलये गीत हस्तेना र्थं प्रदर्शयेत् दृष्टिभ्यां भावयेद्भावं पादाभ्यां ताल निर्णय ॥ गीत पी नपयोधरा समदना नारी विचित्रा कथा रम्य हर्म्यतल सुधांशुकिरण प्रोद्दीपिता यामिनी । चित्तज्ञाः सु हृदः सुता सुमनसो भक्ता पुन सेवका शुद्ध गीतफल कविश्व मत ख ससारसारामता ॥ सङ्गीतकेन रम्येण सुखं यस्य न चेतसि । मनु ष्यवृषभो लोके विधिनैव सवञ्चितः ॥ ससारदुःखदग्धानामुत्तमानां म नुग्रहात् । प्रभुणा शङ्करेणाद्य गीतं बाद्य प्रकाशितम ॥ गीतज्ञो यदि गीतेन नाप्नोति परम पदम् । रुद्र स्यानुचरो भूत्वा तेनैव सह मोदते ॥ गीतेन हरिणा रङ्गं प्राप्नुवन्त्यपि प क्षिणः । वना द्रायान्ति फणिनः, शि शवो न रुदन्तिच ॥ कृतिचमत्कृत ये किमत पर फणिवरो ऽश्वतरो बल पन्नग । आपदतां यदवाप म हादलसा मधुरगीतवशीकृतशङ्कर ॥

परमानन्दविवर्द्धन मभिमतफल व शीकरणम् । सकल जनचित्तहरण विमुक्तिवीज परगीतमिति प्रशसा ॥ त्रि । शब्दिते ॥ गै० । क्त ॥

गीतमोदी । पु । किन्नरे ॥ त्रि । गानानुरागिणि ॥

गीता । स्त्री । कृष्णार्जुनसंवादात्मकेशास्त्रविशेषे ॥ यथा । भारते सर्ववेदाऽर्थो भारतार्थश्च कृत्स्नश । गीतायामस्ति तेनेय सर्वशास्त्रमयी मता ॥ इय मष्टादशाध्यायी क्रमात् षट्कत्रयेण हि । कर्मोपास्तिज्ञानकाण्डत्रितयात्मा निगद्यते इतिनीलकण्ठचतुर्धर ॥ गीतासुगीताकर्त्तव्या किमन्यै शास्त्रविस्तरै रित्यादिश्रीधरस्वामी ॥ एतदन्या । आश्वमेधिकपर्वोक्ते ब्राह्मणगीतानुगीते । देवीभागवतोक्ताभगवतीगीता । अध्यात्मरामायणोक्तारामगीता । श्रीविष्णुभागवतोक्ता गोपीगीता । शिवगीताद्याश्चबह्वयो ऽध्यात्मविद्या निरूपणपरा सन्ति ॥

गीतासार । पु श्रीकृष्णार्जुनसवादात्मकेमुक्त्यर्थे ऽष्टाङ्गादियोगग्रन्थे गरुडपुराणोक्ते ॥

गीति । स्त्री । गाने ॥ आर्याछन्दोविशेषे ॥ यथा । आर्याप्रथमार्द्धसमद्वितीय मपि चार्द्ध मीरयते यस्याम् । सागीति फणिपतिना निर्मलमतिना निवेदिता नूनमिति ॥

गीतिका । स्त्री । कृतिसञ्ज्ञकविंशत्यक्षरावृत्तिविशेषे ॥ यथा । सजजा भरौसलगा यदा कथिता तदा खलु गीतिका ॥ वरपाणिशोभिसुवर्णकङ्कणरत्नरज्जुविभूषिता सुपयोधरा पदसङ्गिनूपुरहूपकुण्डलमण्डिता । फणिराजपिङ्गलवर्णिता कविसार्थमानसहारिका वरकामिनीव मनोहिता नहि कस्यसा किलगीतिकेति ॥

गीरथ । न । जीवे । वृहस्पतौ ॥

गीर्ण । त्रि । वर्णिते । स्तुते ॥ गिलिते ॥ गीर्यतेस्म । गृनिगरणे शब्देच । क्त. ॥

गीर्णि । स्त्री । गिरौ । गिलने ॥ गिलनम् । गॄ० । क्तिन् । ऋल्वादिभ्य. क्तिन्निष्ठावत् । तेनत्वम् ॥

गीर्देवी । स्त्री । सरस्वत्याम् ॥

गीर्लता । स्त्री । महाज्योतिष्मत्याम् ॥

गीर्वाण । पुं । देवे । सुरे ॥ गीरेव निग्रहाऽनुग्रहसमर्था वाणो ऽस्त्र यस्य स ॥ दन्तोष्ठ्यपाठे गिरवनुते याचते स्तुतिप्रियत्वात् । वनुयाचने । कर्मण्यण् । पूर्वपदादितिणत्वम् ॥

गीर्वाणकुसुमम् । न । लवङ्गे ॥

गीष्पति । पु । धिषणे । गुरौ । वृह

स्पतौ ॥ गिराम्पति । अहरादी नामितिरेफाभावपक्षे दृदुदुपधस्येति ष । अहरादीनामिति रेफपक्षे गीर्पति । रेफाभावपक्षे गीःपति गीष्पति ॥ पण्डिते ॥

गीष्पतीष्टि । स्त्री । वृहस्पतिसवनाम यागे ॥

गुग्गुल । पुं । स्वनामप्रसिद्धे वृक्षविशेषस्य निर्यासे । गुग्गुलौ ॥ रक्तशिग्रौ ॥

गुग्गुलु । पु । कुम्भे । उलूखलके । पुरे ॥ अस्य गुणादय । महिषाक्षो महानील कुमुद पद्म इत्यपि । हिरण्य पञ्चमो ज्ञेयो गुग्गुलो पञ्च जातय ॥ भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इतिस्मृत । महानीलस्तु विज्ञेय स्वनामसमलक्षण ॥ कुमुद कुमुदाभ स्यात् पद्मो माणिक्यसन्निभ । हिरण्याख्यस्तु हेमाभ पञ्चानामपि लक्षणमीरितम् ॥ महिषाक्षमहानीलौ गजेन्द्राणा हितावुभौ । हयाना कुमुद पद्म स्वस्थारोग्यकरौ परौ ॥ विशेषेण मनुष्याणा कनक परिकीर्त्तित । कदाचि न्महिषाक्षस्तु मत कैश्चिन्नृणा मपि ॥ गुग्गुलु र्विशद स्तिक्तो वीर्योष्ण पित्तल सर । कषाय कटुक पाके कटू



रूक्षो लघु पर ॥ भग्नसन्धानकृद्वृष्य सूक्ष्म स्वर्यो रसायन । दीपन पिच्छिलो बल्य कफवातव्रणापचि । मेदोमेहाश्मवाताश्च क्लेद कुष्ठाममारुतान् ॥ पिडकाग्रन्थिशोफार्शोगण्डमालाकृमीन् जयेत् ॥ माधुर्याच्छमयेद्वात कषायत्वाच्च पित्तहा । तिक्तत्वात् कफजित्तेन गुग्गुलु सर्वदोषहा ॥ स नवो वृंहणो वृष्य पुराणस्त्वतिलेखन । स्निग्ध काञ्चनसङ्काश पक्वजम्बूफलोपम ॥ नूतनो गुग्गुलु प्रोक्त सुगन्धि यस्तु पिच्छिल । शुष्को दुर्गन्धक श्चैव त्यक्तप्रकृतवर्णक ॥ पुराण स तु विज्ञेयो गुग्गुलु र्वीर्यवर्जित ॥ अम्ल तीक्ष्ण मजीर्णञ्च व्यवाय श्रम मातपम् । मद्य रोष त्यजेत् सम्यग् गुणार्थी पुरसेवक ॥ अस्य स्थानविशेषे जन्मादिकथन यथा । जायन्ते पुरपादपा मरुभुवि ग्रीष्मे ऽर्कसन्तापित शीतार्त्ता शिशिरे ऽपि गुग्गुलुरस मुञ्चन्ति ते पञ्चधा । हेमाभ महिषाक्षतुल्य मपर सत्पद्मरागोपम भृङ्गाभ कुमुदद्युतिञ्च विधिना ग्राह्या परीक्षा तत ॥ यस्मै ज्वलन्ति तपने विलय प्रयान्ति क्लिद्यन्ति कोष्णसलिले पयस समाना

। ग्राह्या शुभाः परिहरे चिरकाल जातान् अङ्गारवर्णसमपूयविगन्धव र्णानितिप्रयोगामृतम् ॥ पक्कस्यास्य पूर्णवीर्यत्त्व मासत्रयपर्यन्त तिष्ठती तिवैद्यकपरिभाषा ॥ गोजति । गु जस्तेये । क्विप् । गुजो व्याधे गुडति । गुडरक्षणे । वाहुलकात् क । ड लयोरैक्यम् ॥

गुच्छ । पु । स्तवके । कलिकादिकद म्बे । वहुभि पुष्पै फलैर्वा सम्बा ध पल्लवग्रन्थिर्गुच्छ । गुच्छा इति भाषा ॥ स्तम्बे । मूलत एव यत्र ल तासमूहो भवति न च प्रकाण्डानि ते गुच्छा मल्लिकादय । भुण्ड इति भाषा ॥ हारविशेषे । द्वात्रिंशद्यष्टि केहारे ॥ कलापे । मोरपङ्ख इति भाषा ॥ गुध्यते । गुधपरिवेष्टने । स्यादिभ्यश्छुरिति श्रीभोज ॥ गूय ते । गुङ्शब्दे । वाहुलकात् छगुवा ॥ यद्वा । गवनम् । गुङ्० । सं०क्वि प् । तुक् । गुतश्छ्यति । छोछेदने । आतोनुपेतिक ॥

गुच्छक । पु । स्तवके । पुष्पसङ्घाते ॥ स्तम्बे ॥ द्वात्रिंशद्यष्टिकेहारे ॥ कला पे ॥ रीठाकरञ्जे ॥ न । ग्रन्थिपर्णे ॥ गुच्छात्स्वार्थे कन् ॥

गुच्छकणिश । पु । रागीधान्ये । द्वयधा न्यविशेषोयम् ॥

गुच्छकरञ्ज । पु । सानन्दे । स्निग्ध दले ॥

गुच्छदन्तिका । स्त्री । कदल्याम् ॥

गुच्छपत्र । पु । तालवृक्षे ॥

गुच्छपुष्प । पु । सप्तच्छदवृक्षे ॥

गुच्छपुष्पक । पु । गुच्छकरञ्जे ॥ री ठाकरञ्जे ॥

गुच्छपुष्पी । स्त्री । धातक्याम् ॥ शिम्ब डीवृक्षे ॥

गुच्छफल । पु । रीठाकरञ्जे ॥ राजा दन्याम् ॥ कतके ॥

गुच्छफला । स्त्री । अग्निदमन्याम् ॥ काकमाच्याम् ॥ निष्पाव्याम ॥ द्रा क्षायाम ॥ कदल्याम् ॥

गुच्छवधा । स्त्री । गुण्डालावृक्षे ॥

गुच्छमूलिका । स्त्री । गुण्डासिनी तृणे ॥

गुच्छार्द्ध । पु । चतुर्विंशतियष्टिके हा रे ॥ न । अर्द्धगुच्छे । गुच्छस्य अर्द्ध । ग्रामार्द्धवत् समास ॥

गुच्छाल । पु । भूतृणे । गन्धखेड ॥

गुच्छाह्वकन्द । पु । गुलञ्चकन्दे । नि र्यासिकायाम् । कुली इति गौड भाषा ॥

गुच्छी । स्त्री । गुच्छकरञ्जे ॥

गुञ्जरी । स्त्री । रागिणी विशेषे ॥ अ

स्वारूप यथा । श्यामा सुकेशी म ग्नद्रुमाणां मृदूल्लसत्पल्लवतल्पयाता । श्रुत स्वराणा दधती विभाग तन्त्रीमुखाद् दक्षिणगुर्ज्जरीयम् ॥ अस्या कालनियमो यथा । नाटो गौडो वराडी च गुर्ज्जरी देशि रैव च । पूर्वोक्ते गान मेतेषां निषिद्धमिति तद्विद ॥ मतभेदेन पूर्वोक्ते प्रिगीयते ॥

गुञ्ज । पु । गुच्छे । पुष्पस्तवके ॥

गुञ्जत् । पु । भ्रमर ॥ गुञ्ज ध्वनिविशेष करोति । डुञ्ज् । क्विप्तुकौ ॥

गुञ्जनम् । न । भ्रमरादीना गुणगुणध्वनौ । गुञ्जिते ॥

गुञ्जा । स्त्री । लताविशेषे । काकचिञ्च्याम् । रक्तिकायाम् । घुघची चिरम्ठी रत्ती इत्यादिभाषाप्रसिद्धायाम् भिल्लभूषणायाम् ॥ श्वेत रक्त प्रभेदेन चेय गुञ्जाद्वय बुधै. गुञ्जाद्वयन्तु केश्य स्या द्वातपित्तज्वरापहम् । मुखशोषभ्रमश्वासतृष्णामदविनाशनम् ॥ नेत्रामयहर वृष्य बल्य कण्डूव्रण हरेत् । कृमीन्द्रलुप्त कुष्ठानि रक्तावर्द्धविलोपिच ॥ मौनि विशेषे ॥ तुल्या यवाभ्यां कथितात्र गुञ्जेति लीलावती ॥ त्रियवपरिमाणे । इति वैद्या ॥ चतुर्द्रोण्यपरिमा

णे ॥ गोधूमद्वयमाने ॥ पटहे ॥ मधुरध्वनौ ॥ मदिरागृहे ॥ चञ्चायाम् ॥ गुञ्जति । गुजिअव्यक्ते शब्दे । पचाद्यच ॥

गुञ्जिका । स्त्री । गुञ्जार्थे ॥ स्वार्थेक ॥

गुञ्जित । न । गुञ्जने ॥ न गुञ्जित तन्नजह.... यन्मन. इतिभट्टि ॥

गुटि । स्त्री ।
गुटिका । स्त्री ।
गुटी । स्त्री ।
} गोले । जपसङ्ख्यानसाधने । वटिकायाम् । गोली वडी इतिचभाषा ॥

गुड । पु । गोलके ॥ हस्तिसन्नाहे ॥ ग्रासे ॥ कार्पास्याम् ॥ इक्षोर्विकारे । इक्षुसारे । शिशुप्रिये ॥ इक्षो रसो य सम्पक्वो जायते लोष्टवद्दृढ । स गुडो गौडदेशेतु मत्स्यण्डीव गुडो मत ॥ गुडो वृष्यो गुरु स्निग्धो वातघ्नो मूत्रशोधन । नाऽति पित्तहरो मेद कफकृमिबलप्रद ॥ गुडो जीर्णो लघु पथ्यो ऽनभिष्यन्द्यग्निपुष्टिकृत् । पित्तघ्नो मधुरो वृष्यो वातघ्नो ऽसृक् प्रसादन. ॥ गुडो नव कफश्वासकासकृमिकरोग्निकृत् ॥ श्लेष्माण माशु विनिहन्ति सदार्द्रकेण पित्त निहन्तिच सएव हरीतकीभि । शुण्ठ्या सम हरति वात मशेष मित्थ दोषत्रयक्षयकरा

ल्मो । गुडाय ॥ गुडति । गुडवेष्टने । गुपधेत्विक ॥ यद्वा । गवते । गुङ् अव्यक्तेशब्दे । क्वादिभ्यः किदिति ड ॥ सिता चतुर्गुणा देया वटीषु द्विगुणो गुड ॥

गुडक । पु । गुडद्वारापक्वौषधविशेषे ॥ अस्य पूर्णातेज षण्मासपर्यन्त तिष्ठतीतिपरिभाषा ॥

गुडकरी । स्त्री । रागिणीविशेषे ॥

गुडतृणम् । न । इक्षौ ॥ गुडस्यतृणम् ॥

गुडत्वक् । न । त्वचे । चोचे । दारु चीनी इतिभाषाप्रसिद्धे गन्धद्रव्ये ॥

गुडत्वचम् । न । त्वक्पत्रे । गुडत्वचि ॥

गुडदारु । न । इक्षौ । रसाले ॥

गुडधाना । स्त्री । गुडमिश्रितधानासु । गुडधानी इतिभाषा ॥ गुडेन धाना गुडधाना । भक्ष्येणमिश्रीकरणमिति समास । मिश्रणक्रियाद्वारासामर्थ्यम् । तांविना मिश्रीकरणस्यायोगात् । बहुवचनान्तोयं धानाभृष्टयवेस्त्रिय इतिबहुवचननिर्देशात् ॥

गुडधेनु । स्त्री । दानार्थंगुडादिनिर्मितायांधेनौ ॥

गुडपुष्प । पु । मधूकवृक्षे । महुवा इतिभाषा ॥ गुडइवपुष्पमस्य ॥

गुडफल । पु । पीलुवृक्षे ॥

गुडभा । स्त्री । यावनालशर्करायाम् ॥

गुडमूल । पु । अल्पमारिषशाके ॥

गुडलम् । न । गौडीमदिरायाम् ॥ त्रि । गुडयुक्त । गुडला गुडली इति चभाषा ॥

गुडवीज । पु । मसूरे ॥

गुडशर्करा । स्त्री । पिष्टटायाम् ॥ इति त्रिकाण्डशेष ॥

गुडशिग्रु । पु । रक्तशोभाञ्जने ॥

गुडा । स्त्री । स्नुह्याम् ॥ गुडिकायाम् ॥ उर्णायाम् । लघुकाष्ठे ॥ गुडात् टाप् ॥

गुडाका । स्त्री । निद्रायाम् इतिश्रीधरस्वामिन ॥

गुडाकेश । पु । सदाशिवे ॥ गुडा सुहीतद्वत् केशा अस्य जटाधारित्वात् ॥ अर्जुने ॥ गुडाकायाईश ॥ त्रि । जितनिद्रे ॥ सर्वत्र सावधाने ॥

गुडालक । पु । न । केशचक्र ॥ मुख मकुन्दस्य गुडालकावृतम् ॥

गुडाशय । पु । आखोटे ॥ त्रि । गुडेच्छौ ॥

गुडिका । स्त्री । इस्वटिकायाम् ॥ वटिका गुडिका चेति संज्ञाऽशान्तरभेदत । इतिवैद्यकपरिभाषा ॥

गुडुची । स्त्री । गुडूच्याम् । अमृतायाम् ॥

गुडूची

गुडूची । स्त्री । गिलोय इतिभाषाप्रसिद्धायां लतायाम् । वत्सादन्याम् । छिन्नरुहायाम् । अमृतायाम् ॥ अस्या उत्पत्त्यादिकं यथा । अथ लङ्केश्वरो मानी रावणो राक्षसाधिपः । रामपत्नीं वनाच्छीतां जहार मदनातुरः ॥ ततस्तं बलवान् रामो रिपुं जायापहारिणम् । हतो वानरसैन्येन जघान रणमूर्द्धनि ॥ हते तस्मिन्सुराराती रावणे बलगर्विते । देवराजः सहस्राक्षः परितुष्टोऽतिराघवे ॥ तत्र ये वानराः केचिद्राक्षसैर्निहता रणे । तानिन्द्रो जीवयामास सिक्त्वाऽमृतवृष्टिभिः ॥ ततो येषु प्रदेशेषु कपिगात्रात् परिच्युताः । पीयूषबिन्दवः पेतुस्तेभ्यो जाता गुडूचिका ॥ गुडूची कटुका तिक्ता स्वादुपाका रसायनी । सङ्ग्राहिणी कषायोष्णा लघ्वी बल्याग्निदीपनी ॥ दोषत्रयामतृड्दाहमेहकासांश्च पाण्डुताम् । कामलाकुष्ठवातास्रज्वरकृमिवमीर्हरेत् ॥ गुडति । गुडरक्षणे । बाहुलकादूचट् । ङीप् ॥

गुडूचीकल्क । पु । कल्कविशेषे ॥ सयथा । अमृतायाश्च चूर्णं वाससा परिशोधितम् । पृथक् षोडशभागा स्युर्गुडमाक्षिकसर्पिषाम् ॥ यथाग्नि भक्षयेद्देतत् नरो हितमिताशनः । न तस्य कश्चिद्भवेद्व्याधिर्न जरापलितं न च ॥ न ज्वरा विषमा नैव मेहना निःसरत्ककम् । न च नेत्रगता रोगाः परमेतद्रसायनम् ॥ मेधाकरं विदोषघ्नं प्रयोगाद्दस्य बुद्धिमान् । जीवेद्वर्षशतं साग्रं यथैवादितिजः स्वयमेति ॥

गुडूचीपत्र । न । अमृतापर्णे ॥ गडूचीपत्रमाग्नेयं सर्वज्वरहरं लघु । कषायं कटु तिक्तञ्च स्वादुपाकं रसायनम् ॥ बल्यमुष्णञ्च सङ्ग्राहि हन्याद्दोषत्रयं तृषाम् । दाहप्रमेहवातास्रकामलाकुष्ठपाण्डुताः ॥

गुडेर । पु । गुडके ॥ ग्रासे ॥ गुडति गुडः । पतिकठिकुठिगडिगुडिदंशिभ्यएरक् ॥

गुडेरक । पु । ग्रासे ॥

गुडोद्भवा । स्त्री । शर्करायाम् ॥

गुण । पु ॥ मौर्व्याम् । ज्यायाम् । धनुराकर्षणरज्जौ । चिल्ला इति भाषा ॥ अप्रधाने । शौर्यादौ रसगन्धादौ च ॥ तल्लक्षणं यथा । सत्त्वे निविशतेऽपैति पृथक्जातिषु दृश्यते । आधेयश्च क्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ सत्त्वं द्रव्यम् । सत्त्वएव

मिविशतेइतिसावधारणव्याख्येयम्।
एतेनसत्ताव्यावर्त्यते। साहिनकेव
लं द्रव्येवर्त्तते किन्तुद्रव्यगुणकर्मसु।
ननुद्रव्यएवद्रव्यत्ववर्त्ततेइतितत्राति
व्याप्तिरतआह । अपैतीति । अप
गच्छतीत्यर्थः । अर्थात्सत्त्वादेव । य
थापीतताया जातायां फलादेर्नील
तापैति नैवद्रव्यत्वं द्रव्यादपैति। एव
मपि गोत्वंगोषुवर्त्तते अश्वादेरपा
पैति तत्रातिव्याप्तिरतआह। पृथग्जा
तिषुदृश्यतइति । गोत्वं हिद्रव्यत्वा
वान्तरनानाजातिषु नदृश्यते गुण
स्तुदृश्यते। यथा अश्वेदृष्टा नीलताद्र
ष्टादिष्वपिदृश्यते। एतेन पूर्वार्द्धेन स
कलजात्यव्यवच्छेद । एवंतर्हिकर्म
द्रव्येवर्त्तते ततोऽपैति पृथग्जातिषु
दृश्यतेचेतितत्रातिव्याप्तिरतआह ।
आधेयश्चाक्रियाजश्चेति ।उत्पाद्या
नुत्पाद्यइत्यर्थः। उत्पाद्योयथा। घ
टादेः पाकजोरूपादिः । अक्रियाज
अनुत्पाद्य । सयथा। आकाशादेर्मह
त्त्वादि । क्रियातु सर्वाप्युत्पाद्यैव न
नित्येति तस्या द्वैविध्याभावाद्गुणत्वा
भाव ।एवमपि द्रव्यस्यगुणत्वप्राप्नोति
अवयविद्रव्यं हि अवयवद्रव्येषुनिवि
शते। असमवायिकारणसंयोगनिवृ
त्तौ विनाशात्ततोपैति भिन्नजातौ



येषु च हस्तपादादिषुदृश्यते। द्विवि
धश्चभवति नित्यानित्यभेदेन। निर
वयवस्यात्मपरमाण्वादेर्नित्यत्वादव
यविद्रव्यस्यतु घटादेर नित्यत्वादत
आह । असत्त्वप्रकृतिरिति। अद्रव्य
स्वभावइत्यर्थः ॥ ॥उपैत्यन्यज्जहा
त्यन्यद्दृष्टो द्रव्यान्तरेष्वपि। वाचक
सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृत
॥ इति पारिभाषिकोगुणो ऽप्रधान
एवान्तर्भवति ॥ तेजोबलवीर्यैश्व
र्यवैराग्यमक्षयश्चपराश्रितत्वादेव
गुणा ॥ शुक्लादौ ॥ सच शुक्लादिश
ब्दानां पटादौ प्रवृत्तिनिमित्तभव
ति ॥ विशेषाधानहेतौ सिद्धेवस्तुध
र्मे। शुक्लादयोहि गवादिकं स्वजा
तीयेभ्य कृष्णगवादिभ्यो व्यावर्त्तय
न्ति ॥ अपिच । द्रव्यत्वव्यापकतावच्छे
दकसत्तान्यजातिमत्त्व तदर्थ ॥ यथा
। रूपरसगन्धस्पर्शसङ्ख्यापरिमाण
पृथक्त्वसंयोगविभागपरत्वापरत्वगुरु
त्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छा-
द्वेषप्रयत्नधर्माधर्मसंस्कारास्तुविंश
तिगुणाइति ॥ कर्मव्यतिरिक्तत्वेसति
जातिमात्राश्रये ॥ विवेकवैराग्योप
रतितितिक्षासमाधनेषु ॥ आकाशा
दौ । सांसिद्धिकवैनयिकप्राकृति
कभेदभिन्ने ॥ द्रव्याश्रिते फलादेर

समन्धादौ ॥ सूदे ॥ इन्द्रिये ॥ त्यागे ॥ शौर्यादौ ॥ सत्त्वरजस्तमसु ॥ गुणानाम् परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथ प्राप्त तन्मायैव सुतुच्छकमिति भगवान् वार्षगण्य । गुणानां सत्त्वादीनाम् परमं रूपम् अधिष्ठानमात्मेत्यर्थः ॥ राज्ञ. सन्धिविग्रहादौ ॥ यथा । सन्धिविग्रहयानानि संस्था प्यासन मेवच । द्वैधीभावश्च विज्ञेया षड्गुणा नीतिवेदिनामिति ॥ देशकालमतादिचतुर्दशसु ॥ तेच । देशकालज्ञता दार्ढ्यं सर्वक्लेशसहिष्णुता । सर्वविज्ञानता दाक्ष्य मूर्ज सवृतमन्त्रता ॥ अविसंवादिता शौर्य्यशक्तिश्च कृतज्ञता । शरणागतवात्सल्य ममर्षित्वमचापलम् ॥ एतेचतुर्दश गुणा प्रोक्ता' शास्त्रेषुसूरिभि' ॥ गौतमोक्तागुणा यथा । दयासर्वभूतेषु क्षान्ति अनसूया शौचम् अनायास मङ्गलम् अकार्पण्यम् अस्पृहेति ॥ काव्यगुणादौ । यथा । ये रसस्याङ्गिनो धर्मा शौर्यादय इवात्मन । उत्कर्षहेतव स्तेस्यु रचलस्थितयो गुणा इति ॥ तद्भेदा यथा । श्लेष' प्रसाद समता माधुर्यं सुकुमारता । अर्थव्यक्ति रुदारत्व मोज कान्तिसमाधय' ॥ इतिवैदर्भमार्गस्य प्राणा दशगुणा स्मृता । माधुर्यौज प्रसादाख्या स्त्रय स्ते न पुनर्दश ॥ तस्य दशसङ्ख्याभावे हेतुर्यथा । केचिदन्तर्भवन्त्येषु दोषत्यागात परेश्रिता । अन्येभजन्ति दोषत्त्व कुत्रचिन्न ततोदश ॥ आवृत्तौ ॥ रज्जौ ॥ तन्तौ ॥ भीमसेने ॥ उत्कर्षे । दोषान्यस्मिन् विशेषणे ॥ समानभागे ॥ यथा । सङ्ख्यायागुणस्यनिमानेमयड्वक्तव्य ॥ संज्ञाजातिक्रियाशब्दान् हित्वा ऽन्येगुणवाचिन । चतुष्टयी शब्दानां प्रवृत्तिरित्याकरग्रन्थनिष्कर्षादेषनिर्णय ॥ गुण्यते । गुण आमन्त्रणे । घञ् ॥ गुणा कुर्वन्ति दूतत्व दूरेपि वसतां सताम् । केतकी गन्धमाघ्राय स्वय गच्छन्तिषट्पद ॥

गुणक । पु । पूरकाङ्के ॥ यथा । गुण्यान्तमङ्कगुणकेनहन्यादिति ॥

गुणकार । पु । भीमसेने ॥ त्रि । गुणकारके ॥

गुणगृह्य । त्रि । गुणपक्षपातिनि ॥ गुणानाद्गृह्य । पदास्वैरिवाह्यापक्ष्येषु चेति ग्रहे क्यप् ॥

गुणज्ञ. । त्रि । गुणवेत्तरि ॥ यथा । गुणिनि गुणज्ञो रमते ना ऽगुणशीलस्य गुणिनि परितोष. । अलि रेति

वनात् कमल नहि भेक स्तेकवा सोपि ॥

गुणचयविनिर्म्मित । पु । मायाकल्पिते संसारवृत्ते ॥

गुणधर्म्म । पु । गुणाश्रितधर्मे ॥ यथा । यो गुणेन प्रवर्त्तेत गुणधर्मं सउच्यते । यथा मूर्द्धाभिषिक्तस्य प्रजानां परिपालनमिति ॥

गुणनिका । स्त्री । नृत्ये ॥ शून्याङ्के ॥ पाठनिश्चये ॥ मालायाम् ॥ आम्रेडिते ॥ गुणआम्रेडने । चु० । गुणास अन्योयुजितियुच् । कात्पूर्वस्येकार ॥ शास्त्रादीनांशीलने ॥

गुणनी । स्त्री । पाठनिश्चये । शीलने ॥

गुणनीय । पुं । शास्त्राद्यभ्यासे ॥ इति हारावली ॥

गुणप्रवाह । पु । चेतनाचेतनात्मके प्रपञ्चे ॥

गुणप्रवृद्ध । पु । संसारवृत्ते ॥ तच्छायाम् ॥ गुणै सत्त्वरजस्तमोभिर्देहेन्द्रिय विषयाकारपरिणतै र्जलसेचनीयैरिव स्थूलीभूतत्वात् ॥ गुणैर्गुणप्रवृद्ध ॥

गुणभोक्तृ । न । क्षेयेब्रह्मणि ॥ सत्त्वरजस्तमसा शब्दादिद्वारा सुखदुःखमोहाकारेण परिणतानामुपलब्धृत्वात् ॥

गुणभ्रंश । पु । गुणनाशे । बर्थ्यन्तिकायाम् ॥

गुणलयनिका । स्त्री । वस्त्रनिर्मितगृहे । कोणिकायाम् ॥ इतिहेमचन्द्र ॥

गुणलयनी । स्त्री । गुणलयनिकायाम् । पटकुट्याम् ॥ इतिहलायुध ॥

गुणवान् । त्रि । गुणविशिष्टे । मद्धीना एते गुणा इत्यभिमानवति ॥ गुणवन्त नियुञ्जीत गुणहीनन्तु वर्जयेत् । पण्डितस्यगुणा सर्वे मूर्खे दोषाहिकेवलमितिगारुडेनीतिसार ॥ गुणोस्त्यस्य । मतुप् ॥ सम्बन्धिनि ॥

गुणवाद । पु । प्रमाणान्तरविरोधेसत्यर्थवादे ॥ यथा । आदित्योयूप इत्यादिषु यूपे आदित्याभेदस्यप्रत्यक्षबाधितत्वात् आदित्यवदुज्ज्वलत्वरूपोगुणो ऽनेनलक्षणया प्रतिपाद्यते । इति ॥

गुणवित् । त्रि । साङ्ख्यज्ञे ॥ सत्त्वरजस्तमांसि त्रयोगुणा साम्येनावस्थिता जगतो महदादिलक्षणस्य कारणमिति कल्पयति ॥ गुणज्ञे ॥

गुणवृक्ष । पु । कूपके । नौकामध्यस्थे रज्जुबन्धनस्तम्भे । गुणधरा मसतूला इति भाषा ॥ गुणानां रज्जूनां वृक्ष ॥

गुणवृक्षक । पु । कूपके ॥ संज्ञायां-

कान् ॥

गुणसङ्ग । पु । शब्दादिषु सुखदुःख मोहात्मकेष्वभिलाषे ॥ गुणेषु सङ्गः ॥

गुणसङ्ख्यानम् । न । साङ्ख्ये कापिलशास्त्रे ॥ गुणाः सत्त्वरजस्तमांसि सम्यक् कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्ते ऽस्मिन्निति व्युत्पत्तेः ॥

गुणसम्मूढ । त्रि । गुणैः कार्यतया धर्मैर्देहादिभिर्विकारैः सम्यङ्मूढे । स्वरूपास्फुरणेन तानेवात्मत्वेन मन्यमाने ॥

गुणसागर । पु । ब्रह्मणि । विधातरि ॥ वृद्धविशेषे ॥ त्रि । सकलगुणाधारे ॥ गुणानां सागरः ॥

गुणा । स्त्री । दूर्वायाम् ॥ मांसरोहिण्याम् ॥

गुणाकर । पु । वृद्धे ॥ त्रि । गुणान्विते ॥ गुणानामाकरः ॥

गुणातीत । त्रि । परमेश्वरे ॥ गुणाः शीतोष्णसुखदुःखादयः सत्त्वादयो वा तान् अतीतो ऽतिक्रान्तः ॥ स्थितप्रज्ञे ॥

गुणान्वित । त्रि । विवेकवैराग्योपरतितितिक्षासमाधानयुक्ते ॥ सुखदुःखमोहात्मकगुणैर्युक्ते ॥ गुणयुक्ते ॥

गुणित । त्रि । आहते । पूरिते ॥ यथा । पञ्चधा गुणिता पञ्चसङ्ख्या पञ्चविंशतिर्भवतीत्यादि ॥ पिण्डिते ॥ आवर्त्तिते । अभ्यस्ते ॥ गुण्यते स्म । गुण आमन्त्रणे क्तः ॥

गुणी । पु । धनुषि । शरावापे । चापे ॥ त्रि । गुणविशिष्टे ॥ गुणोऽस्यास्ति । इनि ॥

गुणीभूत । त्रि । अप्रधानीभूते ॥

गुणीभूतव्यङ्ग्य । पु । काव्यविशेषे ॥ यथा । अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम् ॥

गुणेश । त्रि । सत्त्वादिगुणानां नियामके । ईश्वरे ॥

गुणेश्वर । पु । चित्रकूटाचले ॥ त्रि । गुणाढ्ये ॥ गुणानाम् ईश्वरः ॥

गुणोत्कर्ष । पु । अतिशये । गुणप्राधान्ये । परभागे ॥

गुणोत्कीर्त्तनम् । न । गुणकथने ॥ विरुद्धकालिकमित्रादिविषयकप्रशंसाप्रतिपादने ॥

गुण्ठित । त्रि । वेष्टिते ॥ गुण्डिते । रूषिते ॥ गुण्ठ्यते स्म । गुठि वेष्टने । क्तः ॥

गुण्ठ । पु । असिपत्रे । नीलपत्रे । तृणविशेषे ॥ यस्य कन्दः कशेरुः ॥

गुण्डक । पु । मलिने ॥ धूलौ ॥ कलोक्तौ ॥ स्नेहपात्रे ॥

गुण्डकन्द । पु । कशेरुणि ॥

गुण्डारोचनिका । स्त्री । काम्पिल्ले । कबीला इति भाषा ॥

गुण्डाला । स्त्री । क्षुद्रक्षुपविशेषे । जलोङ्गतायाम् । गुच्छवधायाम् ॥

गुण्डासिनी । स्त्री । तृणविशेषे । गुच्छमूलिकायाम् । चिपिटायाम् ॥

गुण्डिक । पु । स्त्री । गुण्डके । तण्डुलादिचूर्णे ॥ गुण्डिके सितपीतैश्च मण्डयन्तो गृहाङ्गनम् ॥

गुण्डिचा । स्त्री । श्रीपुरुषोत्तमदेवस्य रथारोहणानन्तरं वासार्थं मण्डपविशेषे । गुण्डीचावाडी इतिभाषा ॥ सप्ताहं ये प्रपश्यन्ति गुण्डिचामण्डपस्थितम् । मां च रामं सुभद्रां च मम सायुज्यं माप्नुयुरित्युत्कलखण्डम् ॥

गुण्डित । त्रि । रजसाकीर्णे । चूर्णिते ॥ गुण्ड्यतेस्म । गुडिवेष्टने । क्त ॥

गुण्य । त्रि । गुणवति । प्रशस्तगुणयुक्ते ॥ अन्येभ्योपिदृश्यतइतियप् ॥

गुत्य । पु । गवेधुकायाम् ॥

गुत्यकम् । न । ग्रन्थिपर्णे ॥

गुत्स । पु । स्तबके । विकासोन्मुखकलिकायाम् ॥ कलिकादिकदम्बे ॥ गुध्यते गुधपरिवेष्टने । उन्दिगुधिकुषिभ्यश्चेतिस कित् ॥ सर्गे ॥ द्वात्रिंशद्यष्टिकेहारे ॥ ग्रन्थिपर्णे ॥

गुत्सक । पु । स्तबके । गुच्छा इतिभाषा ॥ ग्रन्थपरिच्छेदे ॥

गुत्सकपुष्प । पु । सप्तपर्णे ॥

गुत्सार्द्ध । पु । गुच्छार्द्धे । चतुर्विंशतियष्टिकाभिर्निर्मितेहारे ॥ गुत्सस्य अर्द्धं ॥

गुदम् । न । अपाने ॥ गुदस्य मानं सर्वस्यसार्द्धं स्याच्चतुरङ्गुलम् । तस्य स्युर्वलय स्तिस्त्र शङ्खावर्त्तनिभा स्तता ॥ प्रवाहिनीभवेत् पूर्वा सार्द्धाङ्गुलमितामता उत्सर्जनीच तद्वत् सा सार्द्धाङ्गुलसम्मिता ॥ तस्या ऊर्ध्व संवरणी स्या देकाङ्गुलसम्मिता । अर्द्धाङ्गुलप्रमाणान्तु बुधै र्गुदमुखं मतम् ॥ मलोत्सर्गस्य मार्गोयं पायुर्देहे विनिर्मित ॥ गोदते । गुदक्रीडायाम् । इगुपधेतिक ॥ यद्वा । गूयतेऽनेन । गुपुरीषोत्सर्गे । गवते वा । गुङ्शब्दे । अब्दादयइतिसाधु ॥

गुदकील । पु । } अर्शोरोगे ॥
गुदकीलक । पु । }

गुदग्रह । पु । उदावर्त्तरोगे ॥

गुदभ्रंश । पु । रोगविशेषे ॥ तल्लक्ष० यथा । प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहि । रूक्षदुर्बलदेहस्य गुदभ्रंश तं मादिशेदिति ॥

गुदयोनि । पु । कुम्भीके ॥

गुदाङ्कुर । पु । अर्शोरोगे ॥

गुधेर । पु । लौहभ्रातके ॥ गोप्तरि । रक्षके ॥ गुध्यति । गुधपरिवेष्टने । मूलेराद्यश्चेत्येरक् ॥

गुन्दल । पु । मर्द्दलशब्दे ॥

गुन्द्र । पु । तेजनके । शराभिधतृणे ॥ गोंद्पटेरा इतिभाषाप्रसिद्धे वृक्षविशेषे । पटेरके । शृङ्गवेराभमूले ॥ गुन्द्र कषायो मधुर शिशिर पित्तरक्तजित् । स्तन्यशुक्राङ्गोमूत्रशोधनो मूत्रकृच्छ्रजित् ॥ गोदते । गुद० । बाहुलकात् रक् । पृषोदरादि ॥

गुन्द्रमूला । स्त्री । एरकायाम् ॥

गुन्द्रा । स्त्री । प्रियङ्गौ ॥ भद्रमुस्तके ॥ गांजल इति । द्रागतौ । आतोनुपेतिक । पृषोदरादि । टाप् ॥ एरकायाम् ॥ गवेधुकायाम् ॥ गुन्द्रयति । गुद्रिक्रीडे । पचाद्यच् ॥

गुन्द्राल । पु । जीवञ्जीवपक्षिणि ॥

गुपिल । पु । राज्ञि ॥ गोपायति । गुपूरक्षणे गुपादिभ्य किदिति इलच् ॥

गुप्त । त्रि । रक्षिते । कृतरक्षणे । वाते ॥ गूढे । कृतगोपने ॥ सङ्गते ॥ आहारनिर्हारविहारयोगा सुसंवृताधर्मविदातु कार्या । वाग्गुप्तिकार्यापि तप स्तथैव धन युषी गुप्ततमेतुकार्ये ॥ इतिवशिष्ठ ॥ वैश्यस्य संज्ञाबोधने ॥ गुप्यते स्म । गुपगोपनादौ । क्त ॥

गुप्तगति । पु । अपसर्पे । चरे ॥ गुप्ता गतिर्यस्य ॥

गुप्तचर । पु । बलदेवे । हलायुधे ॥ गुप्तचारे ॥ गुप्तश्चासौ चरश्च ॥ त्रि । पूर्वंगुप्ते ॥

गुप्तस्नेह. । पु । अङ्कोठवृक्षे ॥

गुप्ता । स्त्री । कपिकच्छाम् ॥ परकीयान्तर्गतनायिकाप्रभेदे ॥

गुप्ति । स्त्री । रक्षणे ॥ राज्ञा मात्मगतायां राष्ट्रगतायाञ्च रक्षायाम् ॥ कारागारे ॥ भूगर्त्ते ॥ अवस्करस्थाने । मोखरा इतिभाषा ॥ भूगर्त्ते ॥ यमे ॥ गुप्यते । गोपनञ्च । गुपू० । क्तिन् ॥ गोपने ॥ नगुप्तिरन्तविना ॥

गुप्तिकर्म्म । न । प्राकारपरिखादिनिर्माणे ॥

गुफित । त्रि । गुम्फिते । ग्रथिते ॥

गुम्फ । पु । गुम्फने । ग्रन्थने ॥ बाहोरलङ्कारे । दोर्भूषणे ॥ गुम्फ्गुफि ॥

गुम्फनम् । न । ग्रथिते । दृब्धे ॥

गुम्फना । स्त्री । रचनायाम् ॥ यथा । वाक्ये शब्दार्थयो सम्यग्रचना गुम्फना स्मृता । शब्दार्थक्रमपर्यायपदवाक्यकृतापरेति ॥

गुम्फित. । त्रि । दृब्धे । ग्रथिते ॥ गुम्फ

ग्रन्थे। ग्रथ्यन्ते। क्त॥

गुरणम्। न। उद्यमे। भाराद्युद्यमने॥ गुरीउद्यमे। कुटादि। ल्युट्॥

गुरु। पु। निषेकादिकृति॥ निषेकोगर्भाधानम् आदिना सीमन्तोन्नयनादे मन्त्रविद्यादानादेश्च ग्रहणम्। तत्कर्त्ता पित्रादिर्गुरु स्यात्। यथा। निषेकादीनि कर्म्माणि य करोति यथाविधि। सम्भावयतिचान्नेन सविप्रोगुरुरुच्यते इतिमनु॥ सगुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति॥ पितृमाताचार्यादौ॥ शास्त्रोपदेष्टरि॥ साङ्गवेदबोधके॥ उपदेष्टरि। सम्प्रदायप्रवर्त्तके॥ शान्तो दान्त कुलीनश्च विनीत शुद्धवेशवान्। शुद्धाचार सुप्रतिष्ठ शुचिर्दक्ष सुबुद्धिमान्॥ आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारद। निग्रहानुग्रहेशक्तो गुरुरित्यभिधीयते॥ उद्धर्त्तुञ्चैव संहर्त्तुं समर्थो ब्राह्मणोत्तम। तपस्वी सत्यवादीच गृहस्थो गुरुरुच्यते॥ तस्य देशभेदेन विशेषो यथा। मध्यदेशकुरुक्षेत्रलाटकोङ्कणसम्भवा। अन्तर्वेदीप्रतिष्ठाना आवन्त्याश्चगुरूत्तमा॥ गौडा शाल्वोद्भवा सौरा मागधा केरलास्तथा। कोसलाश्च दशार्णा



श्च गुरव सप्तमध्यमा॥ कर्णाटनर्मदारेवाकच्छातीरोद्भवा स्तथा। कालिङ्गाश्च कलम्बाश्च काम्बोजाश्चाऽधमा मता॥ मध्यदेशसमुद्भूत. शान्त सर्वगुणैर्युत। पुत्रदारैश्च सम्पन्नोगुरुरागमसम्मत॥ मध्यदेशसमुद्भूत इति श्रेष्ठत्वदर्शनार्थम्॥ शाक्ते शाक्तो गुरु शस्त शैवे शैवो गुरु मत। वैष्णवे वैष्णव सौरे सौरो गुरु रुदाहृत॥ गाणपे गाणपश्चैव कौल सर्वत्र सद्गुरु॥ इति श्रीमहानिर्वाणतन्त्रम्॥ रोगग्रस्तो यथा वैद्य पररोगचिकित्सक.। तथा गुरु मुमुक्षोर्मे गृहस्थो य विडम्बनेति श्रीदेवीभागवतम्॥ विशेषस्तन्त्रसाराद् ज्ञेय॥ शिष्येण सद्गुरो निन्दादिक न श्रोतव्य तत्रप्रमाणमाह। गुरो र्यत्र परीवादो निन्दावापि प्रवर्त्तते। कर्णौ तत्र पिधातव्यौ गन्तव्य वा ततोऽन्यत इति॥ अत्रनिन्दापरीवादयो सदसद्दोषविषयकत्वेन भेदोबोध्य॥ द्विमात्रे। दीर्घे॥ दीर्घस्वरो विन्दुयुतो विसर्गी सयुक्तपूर्वश्च गुरु द्विमात्र। पादान्तगामीतु गुरुर्लघुर्वा वर्णो विकल्पेन गुरु र्नियुक्त॥ बृहस्पतौ। सुराचार्ये॥ द्रोणाचार्ये॥ कपिकच्छ्वा

म् ॥ त्रि । गम्भीरार्थे ॥ वक्तवति ॥ पूज्ये ॥ महति ॥ दुर्ज्जरे ॥ अलघौ ॥ गृणाति उपदिशति धर्मादि । गॄ शब्दे । गिरत्यज्ञानं वा । गॄ निगरणे । कृग्रोरुच्चेतिकु । उत्वान्तादेश ॥

गुरुक्रम । पु । इतिह । पारम्पर्योपदेशे ॥ इतिहलायुध ॥

गुरुगृहम् । न । आचार्यवेश्मनि ॥ धनुर्मीनराश्योः ॥

गुरुघ्न । पु । गौरसर्षपे ॥ त्रि । गुरुहन्तरि ॥

गुरुच्छदः । पुं । तिलमयूरे ॥ इतित्रिकाण्डशेष. ॥

गुरुतर । त्रि । गरीयसि ॥ सारवत्तरे ॥

गुरुतल्पगः । पुं । विमातृगन्तरि ॥

गुरुता । स्त्री । गुरुत्वे ॥ भावेतल् ॥

गुरुताल । पु । तालविशेषे ॥ यथा । एक एव गुरुर्यत्र गुरुतालः स कथ्यते । अपर नियमविनेति ॥

गुरुत्वम् । न । महत्त्वे ॥ पतनप्रतियोगिनिगुणे । आद्यपतनासमवायिकारणे । अलघुतायाम् ॥ यथा । अतीन्द्रियं गुरुत्व स्यात् पृथिव्यादिद्वयेतु तत् । अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥ तदेवासमवायि स्यात् पतनाख्येतु कर्मणि ॥ इतिभाषा परिच्छेद ॥ गुरोर्भाव । तस्यभावस्त्वतलावितित्व । त्वान्तक्लीबम् ॥ पिण्डपुष्टौ ॥

गुरुदैवतम् । न । पुष्यनक्षत्रे ॥ त्रि । गुरुतत्परे ॥ गुरुर्दैवत यस्य ॥

गुरुपत्रम् । न । रङ्गे ॥

गुरुपत्रा । स्त्री । अम्लिकायाम् । तिन्तिडीवृक्षे ॥

गुरुभारिकम् । न । लघुपाके ॥

गुरुमर्दल । पु । डिण्डिमवाद्ये ॥

गुरुरत्नम् । न । पुष्परागमणौ ॥

गुरुवर्च्चाम्ल. । पु । निम्पाके । कागदी नींबू इतिभाषा ॥

गुरुवर्त्ती । त्रि । गुरुशुश्रूषके ॥

गुरुवासी । पुं । नैष्ठिकब्रह्मचारिणि ॥ अष्टाशीतिसहस्राणां यतीना मूर्द्धरेतसाम् । स्मृतं स्थानन्तु यत्तेषां तद्देवगुरुवासिनाम् ॥

गुरुशिंशपा । स्त्री । शिंशपाद्रुमे ॥

गुरुशुश्रूषा । पु । विद्यादातृसेवायाम् ॥ यथाह भगवान् । नाहमिज्याप्रजातिभ्यां तपसोपशमेनवा । तुष्येय सर्वभूतात्मा गुरुशुश्रूषयायथेति ॥

गुरुसारा । पु । शिंशपायाम् ॥

गुरुस्कन्ध । पु । श्लेष्मातावृक्षे ॥

गुरुचा । पु । गुरुमे । नरकीलके ॥

गुरूपदिष्टः । त्रि । शास्त्रीये ॥

गुर्ज्जर । पु । देशविशेषे ॥ तद्देशस्थे ।

पुम्भूम्नि ॥

गुर्ज्जरी । स्त्री । रागिणीविशेषे ॥ रीतिभेदे ॥ गुर्जरदेशवनितायाम् ॥ वसतिरतिपतिर्गुर्जरीणां कुचेषु॥

गुर्वादित्य । पुं । योगविशेषे । सूर्यजीवयोरेकराशिस्थितौ ॥

गुर्विणी । स्त्री । गर्भिण्याम् ॥ गुरुर्दुर्जरो लघुर्वा गर्भोऽस्यस्याः । ब्रीह्यादित्वात् इनिः । सञ्ज्ञापूर्वकत्वान्नगुणः ॥ यद्वा । गर्वति । गर्वगतौ । गर्वेरतउर्त्वे तीनन् । गौरादित्वान्ङीष्॥

गुर्वी । स्त्री । गुर्विण्याम् । गर्भवत्याम् ॥ नहि वन्ध्या विजानाति गुर्वीप्रसववेदनाम्॥ गुरुपत्न्याम् ॥ गुरुत्वयुक्तायाम् ॥

गुल । पु । ऐक्षवे । गुडे ॥

गुलञ्चकन्द । पु । गुच्छाह्वकन्दे । निघण्टिकायाम् । कुली इति गौड भाषा ॥

गुला । स्त्री । सुहीवृक्षे । भूचर इति भाषा ॥

गुलिका । स्त्री । गुटिकायाम् ॥ गोली इतिभाषाप्रसिद्धे आग्नेयास्त्रप्रक्षेप्य वस्तुनि ॥ गुडयुक्तक्षुद्र[illegible] विशेषे ॥ घृतेन गुडयुक्तेन गोलकुष्माण्डखण्डकान् । व[illegible]ताल[illegible] रिचै रिमान् सुगुलिका [illegible] ॥

रोगविशेषे ॥

गुली । स्त्री । गुटिकायाम् ॥ सीतला इति भाषा प्रसिद्धे रोगे ॥

गुलुच्छ । पु । गुच्छे । स्तबके ॥ पशुजङ्घायाम् । गुलुछु इति पर्वतीय भाषा ॥ गुच्छशब्दार्थेषु । गुत्सो गुच्छो गुलुच्छवदितिद्विरूपकोषात् ॥

गुलुञ्छ । पु । गुच्छे ॥

गुल्फ । पु । घुटिकायाम् । पादग्रन्थौ । टकुना इति भाषा ॥ गलति गलते वा । गलअदने । कलिगलिभ्या फगस्योच्चेतिफक् प्रत्यय । अतउत्त्वञ्च ॥

गुल्म । पु । सत्त्वप्रधानपुरुषाधिष्ठितेरक्षिष्टपुरुषसमूहे ॥ चिषु सेनामुखेषु ॥ तत्र इभा ९ रथा ९ अश्वा २७ पदातय ४५ । समुदायेन ९० । एतत्परिमाणविशिष्टासेना गुल्म इत्यर्थ ॥ सैन्यरक्षणे ॥ [illegible] ॥ रक्षार्थ सैन्यस्थाने ॥ अप्रकाण्ड-स्तम्बे । स्तम्बे । लताप्रतानादौ । तृणसमूहे । एकमूला सङ्घाता जाता शरेक्षुप्रभृतयो गुल्मा ॥ प्लीहरोगे ॥ वायुगोला इति प्रसिद्धरोगे ॥ यथा । दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारत । कुर्वन्ति पञ्चधा गुल्मं कोष्ठान्त ग्रन्थिरूपिणम्॥

तस्य पञ्चविध स्थान पार्श्वहृन्नाभिबस्तयः ॥ हृन्नाभ्यो रन्तरे ग्रन्थिः सञ्चारी यदि वा चल । वृत्त श्चयापचयवान् स गुल्म इति कीर्त्तित ॥ स च संजायते दोषै समस्तै रपि चोक्षितै । पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चापर इति ॥ गुध्यते ऽस्मात् । भीमादयोऽपादाने इति साधु ॥ यद्वा । गुध्यते गुडति वा । गुड वेष्टने रक्षणे वा । बाहुलकात् मक् । डलयो रैकत्वञ्च ॥

गुल्मकेतु । पु । अम्लवेतसे ॥

गुल्ममूलम् । न । आर्द्रके ॥

गुल्मवल्ली । स्त्री । सोमलतायाम् ॥

गुल्मी । त्रि । गुल्मवति । गुल्मविशिष्टे ॥

गुल्मिनी । स्त्री । त्रपुसीद्राक्षाताम्बूल्यादिरूपायां प्रतानिन्यां लतायाम् । सम्राखलतायाम् । उलपे ॥ गुल्मः प्रतानोऽस्त्यस्याः । अतइनिठनाविति नि । ङीप् ॥

गुल्मी । स्त्री । आमलक्याम् ॥ लवल्याम् ॥ एलायाम् ॥ वस्त्रवेश्मे । पटीकासि ॥ वन्याम् ॥ गुभ्रनखीवृक्षे । गुडकाँ ओली इति गौडभाषाप्रसिद्धे ॥

गुल्य. । पु । मधुरे । स्वादौ ॥

गुवाकः । पु । सुपारी इति प्रसिद्धे वृक्षे । घोण्टायाम् । पूगे । क्रमुके ॥ गुवन्त्यनेन । गुपूरीषोत्सर्गे । पिनाकादयश्चेति साधु ॥

गुहः । पु । कार्त्तिकेये । स्कन्दे ॥ अश्वे । घोटके ॥ शृङ्गवेरपुरवासिनि निषादाधिपतौ श्रीरामसखे ॥ गूहति रक्षति सेनाम् । गुहूसंवरणे । इगुपधेति क ॥ विष्णौ ॥ गूहते संवृणोति स्वरूपादीनि माययेति योगात् ॥

गुहषष्ठी । स्त्री । मार्गशीर्षशुक्लषष्ठ्याम् ॥

गुहा । स्त्री । सिंहपुच्छीलतायाम् ॥ गर्त्ते ॥ अकृत्रिमेऽद्रिविवरे । पर्वतान्तरावकाशे । देवखाते । बिले । गुफा द्वार इति च भाषा ॥ कप्रत्ययान्ताट्टाप् ॥ भिदाद्यङ् वा ॥ गूढा अस्यां ज्ञानज्ञेयज्ञातृपदार्था. इति व्याख्यानात् विदुषां बुद्धौ ॥ हृदये हृदाकाशे ॥ अज्ञाने ॥

गुहाचर । त्रि । बुद्धावुपलभ्यमाने ॥ गुहायाचरति । चरेष्ट. ॥

गुहाशय । पु । मूषिके ॥ सिंहादिषु ॥ सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिन स्तथा । बभ्रुजम्बुकमार्जारा इत्याद्याः स्यु र्गुहाशयाः ॥ गुहाशया वातहारा गुरूष्णा मधुराश्च ते । स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारि

याम् ॥ विष्णौ । परमात्मनि ॥ प्रश्नु
श्रमप्रश्रयणाभिवादन विधीयते सा
धु मिथ सुमध्यमे । प्राज्ञे परस्मै
पुरुषाय चेतसा गुहाश्रयायैव नदे
हमानिने ॥ गुहाया शेते । शीङ्० ।
अधिकरणे शेतेरित्यच् ॥

गुहाहित । त्रि । बुद्धिस्थे । गुहायामा
हित ॥

गुहिनम् । न । धने ॥ वने ॥ गूहति
गूहते वा । गुहू० । गुपादिभ्य किदि
तिइनच् ॥

गुहेर । पु । गोप्तरि ॥ लौहकारे ॥
गूहति गूहते वा । गुहू० । मूलेराद
यश्चेत्येरक् ॥

गुह्य । पु । कमठे ॥ दम्भे ॥ परमात्म
नि । विष्णौ ॥ रहस्योपनिषद्वेद्यत्वा
त् गुहाया बुद्धौ हृदयाकाशे वा नि
हित इति वा गुह्य । गुहामर्हति
। दण्डादिभ्यइतियत् ॥ न । रहसि ॥
उपस्थे । भगलिङ्गयो ॥ गुदे ॥ त्रि ।
रहस्ये । गोप्ये । यस्मै कस्मै चिदक्त
मनर्हे ॥ निर्जने ॥ गुहानिवासिनि ॥
गूहनम् गुह्यते वा । गुहू० । शसिदु
हीतिक्यप् ॥

गुह्यक । पु । देवयोनिविशेषे । कुबे
रनिधिरक्षके मणिभद्रादौ ॥ गूह
ति निधिरक्षति । गुहू० । ण्वुल् ।
पृषोदरादित्वाद्यागागम ॥ निधि रक्ष
न्ति ये यक्षास्तेस्युर्गुह्यकसज्ञका इति
व्याडि ॥ यद्वा । गुह्यं कुत्सितकायात्
। कैशब्दे । आतइतिक ॥ गुह्यगोपनी
य क सुखं यस्य ति वा । अनयो पक्ष
यो शसिदुहि गुहिभ्योवेतिकाशिको
क्तो क्यप् ॥ गूंझा इति प्रसिद्धे पक्वान्ने ।
तत्प्रकार । समिता सर्पिषा भृष्टां
सिताद्राक्षादिसम्भृताम् । एलालवङ्ग
कर्पूरमरीचपरिवासिताम् ॥ क्षिप्
त्वान्यसमिताखण्डपुटे वेष्टयेत्ते प
चेत् । तत खण्डेन्यसेत् पक्वो गुह्य
कोऽयमुदाहृत ॥ गुह्यको वृष्यो
हृद्यो हृष्य पित्तानिलापह । मधु
रोऽतिगुरु पाके किञ्चित् सन्धान
कृत्सर ॥

गुह्यकलोक । पु । पिशाचलोकादुप
रि गन्धर्वलोकादधो वर्त्तमाने भुवने ॥

गुह्यकाली । स्त्री । देवीविशेषे ॥ ने
पालस्थेतत्स्थाने ॥

गुह्यकेश्वर । पु । मनुष्यधर्मणि । कुबे
रे ॥ गुह्यकायन्तीतिगुह्यका । तेषा
मीश्वर ॥

गुह्यगुरु । पु । शिवे ॥

गुह्यदीपक । पु । खद्योते ॥

गुह्यनिष्यन्द । पु । मूत्रे ॥

गुह्यपुष्प । पु । अश्वत्थवृक्षे ॥

ह्वे खगे ॥

गून । त्रि । कृतपुरीषोत्सर्गे । हन्ने ॥ गूयते स्म । गु० । क्तः । दुग्वोर्दीर्घश्चेति नत्वम् ॥

गूरणम् । न । उद्यमे ॥

गूवाकः । पु । क्रमुके । गुवाके ॥ गुवत्वनेन । गु० । पिना० साधु ॥

गूषणा । स्त्री । मेचके । मयूरपिच्छचक्र ॥

गृञ्जन । पु । लसुन इति प्रसिद्धे रकोलके ॥ रक्तलशुने ॥ इतिराजनिर्घण्टः ॥ न । विषदिग्धपशोर्मांसे ॥ सालगम इति प्रसिद्ध कन्दे । शिखिमूले । वर्त्तुले । यवनेष्टे ॥ गृञ्जनः पित्तलो ग्राही तीक्ष्णोष्णो रोगनाशनः । गन्धाकृतिरसैस्तुल्य सूक्ष्मनाल पलाण्डुना ॥ गृञ्ज्यते भक्ष्यत्वेन कथ्यते रोगेषु । गृजि शब्दे । कर्मणि ल्युट् ॥

गृधजीव । पु । लोपाके । पृथुशृगाले । बड़ा मोटा सियाल इतिभाषा ॥ इतिहेमचन्द्रः ॥

गृत्सः । पु । कन्दर्पे ॥ गृध्यति । गृधु अभिकाङ्क्षायाम् । गृधिपण्योर्दकौ चेति स । धातोर्दान्तादेश ॥

गृत्समद । पु । ऋषिविशेष ॥

गृधि । स्त्री । महदभिलाषे ॥

गृधु । पुं । कामदेवे ॥ गृध्यति । गृधु० । भृमिदृब्यधिगृधिधृषिभ्यः कुरिति कुः ॥

गृध्नु । त्रि । लुब्धे ॥ गर्द्धनशील । गृधु० । त्रसिगृधिधृषीति क्नुः । नेड्वशि कृतीतीड्निषेध ॥

गृध्नुता । स्त्री । लुब्धत्वे । रागे । सङ्गे ॥

गृध्र । पु । दाक्षाय्ये । वज्रतुण्डे । परमांसभक्षणाभिकाङ्क्षिणि खगे । गीध इति भाषा ॥ आसन्नमृत्यो र्निपतन्ति गृध्रादयो मूर्द्धि गृहोर्द्धभागे ॥ त्रि । लुब्धके ॥ गृध्यति । गृधु० । सुसूधागृधिभ्य क्रन् ॥

गृध्रकूट । पु । मगधदेशस्थसीमाशैले ॥

गृध्रनखी । स्त्री । कोलिदृक्षे । वदर्याम् ॥ कालियाकड़ा इति गौड़भाषाप्रसिद्धे कुलिकवृक्षे ॥ शिखायाम् । हींस इति भाषाप्रसिद्धे वृक्षे ॥

गृध्रपत्रा । स्त्री । धूम्रपत्रावृक्षे ॥

गृध्रराज । पु । जटायुपक्षिणि ॥

गृध्रसी । स्त्री । ऊरुसन्धौ वातरोगविशेषे ॥ स० यथा । स्फिक्पायूरुकटिपृष्ठजानुजङ्घापद क्रमात् । गृध्रसी स्तम्भरुक्तोदै र्गृह्णाति स्पन्दते मुहुः ॥ वाताद्वातकफात्तन्द्रागौरवारोचकान्विता । इति ॥ गृध्रमपिस्यति । षोऽन्तकर्मणि । आतइति क । गौरा

द्विकाम् ङीष् ॥

गृहि. । स्त्री । सङ्कुतप्रकृतायां गवि ॥ वराहक्रान्तायाम् ॥ वदरायामोष धौ ॥ काश्मर्याम् ॥ गृह्णाति । ग्रह उपादाने । क्विप् । पृषोदरादिः ॥ स कृतप्रसूतायाम् ॥ अतएव गृष्ट्यास्तु ष्ट्याश्चेपि गृष्ट्यादिश्चश्चेत्यत्र पु मग्रहणकृतम् ॥

गृहम् । न । इष्टकादिरचिते वासस्थाने । गेहे । उदवसिते । वेश्मनि । घर इति भाषा ॥ गृह्णाति धान्यादिकम् । ग्रह०। गेहेक. ॥ यद्वा । गृह ग्रहणे । गर्हते । इगुपधेतिक. ॥ कलत्रे । भार्यायाम् । दारपरिग्रहश्च यो श्रौतस्मार्त्तयोरन्यतराग्निनिषेविते सर्वकर्मसम्पादके त्रिवर्गकारणे ॥ न गृहं गृहमित्याहु गृहिणी गृहमुच्यते । तया हि सहित. सर्वान् पुरुषार्थान् समश्नुते ॥ नामनि ॥ भवने । राशौ ॥ चतुर्थभवने ॥ गृह्णाति पुरुषं य स्माद्गृह तेन प्रकीर्त्तितम् ॥ अत्राहव्यास । न गृहं बन्धनागार बन्धने न च कारणम् । मनसा यो विनिर्मुक्तो गृहस्थोऽपि विमुच्यत इति ॥ नहि जड गृहं पुरुषं बध्नाति नचान्यबन्धने कारणमिति किन्तु मनस आसक्तिमात्रं कारणमतो

एव तां विहाय संसारं कुर्वीत इत्यु तमेवेत्यर्थ ॥

गृहा. । पुभूम्नि । कलत्रे । दारेषु ॥ तात्स्थ्यात् । भवतिहि तात्स्थ्यात् ताच्छब्द्यम् । अत्रा कोशकोषादौ अत्रशब्देन पुरुषार्थमित्यादि श्रयते । एवञ्च गृहशब्दो वेश्मनि मुख्यो दारेषुत्वोपचारिक. । अपेदम वधेयम् । गृहशब्दोयमर्द्धर्चादित्वादुभयलिङ्ग । तत्र नपुंसकलिङ्गोऽभिधेयवचन. । पुल्लिङ्गस्तु बहुवचनान्त एवेति ॥

गृहकच्छप. । पु । पेषणशिलायाम् ॥

गृहकन्या । स्त्री । घृतकुमार्याम् ॥

गृहकपोत. । पु । प्रासादकुक्कुटे । भित्तिकाके । पारावते ॥

गृहकर्त्ता । पु । धूसरेऽतिलघुचटके । धान्यभक्षके ॥

गृहकारक । पु । घरामी राज इतिच प्रसिद्धे वर्णसङ्करजातिविशेषे ॥ यथा । प्रतिमाघटकादेव कन्यायां नामितस्यच । सूत्रकारस्य सम्भूति सोपानगृहकारक इति पराशरपद्धति ॥

गृहकारी । पु । कुम्हारी इतिभाषाम् सिद्धकीटे ॥

गृहकूलक. । पु । चिचिण्डाख्येशाके ॥

गृहगोधा । स्त्री । विशम्भरायाम् । प-

ल्लिकायाम । छिपकली विस्तुय्याइति भाषा ॥

गृहगोधिका । स्त्री । मुषल्याम् । गृह गोधायाम् ॥ अल्पागोधा । अल्पार्थे कम् । गृहस्यगोधिका ॥

गृहगोलिका । स्त्री । पल्ल्याम् ॥

गृहजात । पुं । दास्यामुत्पन्ने दासविशेषे ॥

गृहणी । स्त्री । काञ्जिके ॥

गृहतटी । स्त्री । वीथ्याम् ॥ इतिहारावली ॥

गृहद्रुम । पु । मेषशृङ्गीदृक्षे ॥

गृहधूप । पु । गेहधूमे ॥

गृहनाशनः । पुं । वनकपोते । चित्रकण्ठे । घुघुती पिण्डुकिया इतिचभाषा ॥

गृहनीड । पु । चटके ॥

गृहपङ्क्ति । स्त्री । एचाकजनावासपङ्क्तौ । जिसे अववारिक कहते ॥

गृहपति । पु । गृहस्थे ॥ सन्निधि । सदाम्नदानकर्त्तरि गृहस्थे ॥ मन्त्रविशेषे ॥ धर्मे ॥ गृहस्यपति ॥ स्त्री । गृहपत्न्याम् ॥ विभाषासपूर्वस्येतिपाक्षिकोनस्याभाव ॥

गृहपाश । पु । मुनि ॥ गृहपार्श्वेति । पाशरचणे । कर्मण्यण् ॥

गृहपोतक । पु । वास्तौ । हवेली घर इति चभाषा ॥ इतिशब्दरत्ना-

वली ॥

गृहप्रवेश । पु । गृहान्तर्गमने ॥

गृहबभ्रु । पु । गेहनकुले ॥

गृहबलिप्रियः । पु । वकपक्षिणि ॥

गृहबलिभुक् । पुं । चटके ॥ काके ॥ वके ॥

गृहभूमि । स्त्री । वास्तौ । वेश्मभुवि ॥

गृहमणि । पु । दीपे ॥

गृहमाचिका । स्त्री । चर्मचट्याम् । अजिनपत्त्राथाम् । चाम् चिरैया इति भाषा ॥

गृहमृगः । पुं । कुक्कुरे ॥

गृहमेधी । पु । कृतदारपरिग्रहे । गृहस्थे ॥ गृहैः दारैः मेधते सङ्गच्छते । मेधृसङ्गमे । सुप्यजातौणिनि ॥

गृहमेधिनी । स्त्री । साध्विकार्यादौ ॥ गृहस्थपत्न्याम् ॥

गृहमेधीयम् । न । गृहमेधे ॥ गृहमेधो देवतास्य । द्यावापृथिवीतिछः ॥

गृहमेधीय । पु । गृहाश्रमविहितेकर्मादौ ॥

गृहमेध्यम् । न । गृहमेधीये ॥ गृहमेधो देवतास्य । द्यावापृथिवीति यत् ॥

गृहयाय्य । पु । गृहस्वामिनि ॥ गृहयतै । गृहग्रहणे । श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥

गृहयालुः । पु । गृहीतरि । ग्रहणशीले ॥ गृह्यते तच्छील । गृह०षु० । स्पृहिगृहिपतीत्यालुच् । अयामन्तेतिणेरयादेश ॥

गृहवाटिका । स्त्री । गृहान्तिकवृक्षारामे ॥

गृहसंवेशक । पु । गृहसन्निवेशोपदेशके । वास्तुविद्योपजीविनि ॥

गृहस्थ । पु । गृहिणि । गृहपतौ । ज्येष्ठाश्रमिणि । द्वितीयाश्रमिणि ॥ न्यायार्जितधन स्तत्त्वज्ञाननिष्ठोऽतिथिप्रिय. । श्राद्धकृत् सत्यवादी च गृहस्थो ऽपिविमुच्यते ॥ गृहशब्दस्य दारवचनत्वात् कृतदारपरिग्रहो गृहस्थ । गृहेतिष्ठति । स्था० । सुपिस्थइतिक. ॥

गृहस्थूणम् । न । गृहस्तम्भे ॥ गृहस्य स्थूणा ॥

गृहाक्ष । पु । वातायने ॥

गृहागत. । पु । अतिथौ ॥ त्रि । गेहमायाते ॥

गृहाधिप । पु । गृहस्थे ॥

गृहाम्लम् । न । काञ्जिके ॥

गृहाश्रमिक । पु । गृहिणि ॥

गृहाराम । पु । निष्कुटे । गृहोपवने ॥ गृहस्य आराम ॥

गृहालिका । स्त्री । अकुलकायाम् । गृहगोधिकायाम् ॥

गृहावग्रहणी । स्त्री । देहल्याम् ॥ गृहमवगृह्यते ऽनया । ग्रहउपादाने । करणे ल्युट् ॥

गृहाश्रया । स्त्री । ताम्बूल्याम् । नागवल्ल्याम् । पानकी बेल इतिभाषा ॥

गृहाश्मा । पु । मेषशृङ्गिकायाम् । सिल इतिभाषा ॥

गृहासक्त । पु । गृध्रके ॥ त्रि । गृहे आसक्तिविशिष्टे ॥

गृहिणी । स्त्री । भार्यायाम् ॥ इनिमत्वर्थीय' । ङीप् । गेहकर्मकुशलायाम् ॥

गृही । पु । गृहस्थे ॥ गृहा दारा सन्त्यस्य । इनि ॥

गृहीत । त्रि । स्वीकृते ॥ज्ञाते ॥ प्राप्ते ॥ धृते ॥ गृहीत इव केशेषु मृत्युना धर्म माचरेत् ॥

गृहीतदिक् । त्रि । पलायिते । तिरोहिते ॥

गृहीति । स्त्री । ग्रहणे ॥

गृहीती । स्त्री । गृहीतवति ॥ गृहीतमनेन । इष्टादिभ्यश्चेति कर्त्तरि इनि ॥

गृहेनर्दी । पु । गेहेशूरे ॥

गृहेश । पु । गृहपतौ ॥

गृहोलिका । स्त्री । पल्ल्याम् ॥

गृह्यः । पु । गृहासक्तमृगपक्षयोः ॥ गृह्यते । गृह° । पदास्वैरीतिक्यप् ॥ न । मलवर्त्मनि । गुदे ॥ ग्रन्थभेदे । गृह्यसूत्रे ॥ त्रि । अस्वैरिणि ॥ पक्षे ॥ गृह° । ऋदुपधाच्चाकॢपिचृतेरितिक्यप् ॥ गृहेभवो वा । यत् ॥

गृह्यक । पु । छेके । गृहासक्तपक्षिमृगयोः ॥ त्रि । निघ्ने । आयत्ते ॥ क्व चस्मात् स्वार्थे ऽनुकम्पायां वा कन् ॥

गृह्या । स्त्री । शाखापुरे ॥ इतिमेदिनी । टाप् ॥

गेन्दु । पु । } कन्दुके । गेंद इतिभाषा ॥ गे गमने इन्दुरिव ॥ गे इन्दुरिव प्रतिकृतिर्वा । इवेप्रतिकृतावितिकन् ॥ पृषोदरादित्वाद्दीर्घः ॥
गेन्दुक । पु ।
गेन्दूक । पु ।

गेयम् । न । गीते ॥ यथा । गेयगीता नामसहस्रम् ॥ त्रि । गातव्ये ॥ गायने ॥ अर्हेकृत्यतृचश्चेति योग्यतायामचोयत् । ईद्यति । गुण ॥ गायति । गैशब्दे । भव्यगेयेति कर्त्तरिवायत् । गीयते इतिवा ॥

गेष्ण । पु । पर्वणि ॥

गेष्णु । पु । गायने ॥ नटे ॥ गायति । गै° । गादाभ्यामिष्णुच् ॥ सामगानकर्त्तरि ॥

गेहम् । न । उदवसिते । गृहे ॥ गेन गणेशेन ईह्यते काम्यते । ईह° । कर्मणि घञ् ॥ गेगणेशो गन्धर्वो वा ईह ईप्सितोऽस्मिन् वा ॥

गेहधूप । पु । अपराजितधूपे ॥ यथा । मयूरपिच्छं निम्बस्य पत्राणि बृहतीफलम् । मरिच हिङ्गु मांसी च वीजं कर्पाससम्भवम् ॥ छागरोमाऽहिनिर्मोको विष्ठा वैडालिकी तथा । गजदन्तस्य तच्चूर्णं किञ्चिद्घृतविमिश्रितम् ॥ गेहेषु धूपनं दत्त सर्वान् बालग्रहान् जयेत् । पिशाचान् राक्षसान् हत्वा सर्वज्वरहर भवेदिति ॥

गेही । पु । गृहिणि ॥

गेहेनर्दी । पु । कापुरुषे । पिण्डीशूरे ॥

गेहेशूर । पु । गेहेनर्द्दिनि ॥ इतिहेमचन्द्रः ॥

गैरिकम् । न । रक्तधातौ । गेरु इतिभाषा ॥ गैरिकं रक्तधातुश्च गैरेय गिरिजन्तथा । सुवर्णगैरिकन्त्वन्यत् ततो रक्ततरं हि तत् ॥ गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम् । चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् ॥ स्वर्णे ॥ गिरौ भवम् ॥ अध्यात्मादित्वाट्ठञ् ॥

गैरिकाक्ष । पुं । जलमधूकवृक्षे ॥

गैरी । स्त्री । बाह्लिकोद्भवे ॥

गैरेयम् । न । शिलाजतुनि ॥ गिरौभव

वम् । नवाद्दिभ्यश्चेतिडक् ॥

गो. । पु । बलीवर्दे । अनडुहि ॥ स्वर्गे । रश्मौ ॥ कुलिशे । वज्रे ॥ चन्द्रे ॥ सूर्ये ॥ गोमेधयज्ञे ॥ ऋषभनामौषधे ॥ स्त्री । सौरभेय्याम् । अर्जुन्याम् । उस्रायाम् ॥ गोमासगुरु सुस्निग्धं पित्तश्लेष्मविवर्द्धनम् । वृंहणं वातहृद्बल्यमपथ्य पीनसप्रणुत् ॥ चक्षुषि ॥ वाणे ॥ दिशि ॥ मातरि ॥ वाचि ॥ भूमौ ॥ वृषराशौ ॥ नवाङ्के ॥ गच्छति गम्यते वा ऽनेन वा । गम्॰ । गमेर्डोः ॥

गाव । पुभूम्नि । उदके । जले ॥

गोकण्टक । पु । गोक्षुरके ॥ स्थपुटे । विषमोन्नते ॥ गोखुरैः स्थपुटीकृते इति हेमचन्द्र ॥ गवां खुरे ॥ विकङ्कतवृक्षे ॥ गोर्भूमेः पृथिव्या वा कण्टकः ॥

गोकर्ण । पुं । अश्वतरे ॥ सर्पे ॥ गौः कर्णोयस्य । गोशब्दस्य चक्षुः परत्वात् गोकर्णः सर्पः ॥ सारङ्गे । मृगविशेषे ॥ गोरिवकर्णोयस्य ॥ गणदेवताविशेषे ॥ अङ्गुष्ठानामिकोन्माने । अनामिकायुक्तविस्तृताङ्गुष्ठे ॥ गोः कर्णइव ॥ क्षेत्रविशेषे ॥ यथा । महाबलस्यगोकर्णे त्रिवभद्रार्चाचरितैश्चागमं । गोकर्णे भद्रकर्णीत्यादिति दिर्वीगीता ॥

गोकर्णी । स्त्री । मूर्वालतायाम् ॥ गोः कर्णइव । गौः कर्णोयस्या वा ॥ पाककर्णेतिङीष् ॥

गोकिराटिका । स्त्री । विट्सारिकायाम् ॥

गोकिराटी । स्त्री । सारिकाख्यखगे ॥

गोकिल. । पु । मुसले ॥ हले ॥

गोकील' । पु । मुषले ॥ लाङ्गले ॥

गोकुलम् । न । गोसमूहे । गोधने ॥ गोस्थाने ॥ यथा । गोकुले कन्दुकाचार्यां तैक्षयन्त्यंशुयन्त्रयो' । अक्षीमांस्यानि गोपानि स्त्रीपुमाकारारे पुच ॥ व्रजेप्रसिद्धेनन्दावासे ॥ गवांकुलम् ॥

गोकुलिक. । पु । कैवर्त्ते । वणिके ॥ पङ्कस्थगव्युपेक्षके ॥

गोकृतम् । न । गोमये ॥ त्रि । गोभिः कृते ॥

गोक्षुर' । पु । गोक्षुरके ॥ गोक्षुर. शीतल. स्वादुर्बलकृद्वस्तिशोधनः । मधुरो दीपनो वृष्यः पुष्टिकृच्चाश्मरीहर ॥ प्रमेहश्वासकासार्शः कृच्छ्रहृद्रोगवातनुत् ॥ क्षुरति । क्षुर विलेखने । इगुपधज्ञाप्रीकिरः कः । गोगोर्वा क्षुर. ॥

गोक्षुरक. । पु । गोक्षुर इतिभाषाप्र

सिद्धार्थापलङ्कषायाम् । स्वादुकण्ट के ॥ गौर्गावौ चुर ॥ स्वार्थेकन् ॥

गोखुर । पु । गोक्षुरे ॥ न । गवांशफे ॥

गोगोयुगम् । न । गोद्वये ॥ द्वौगावौ । द्वित्वेगोयुगच् ॥

गोगोष्ठम् । न । गवांस्थाने ॥ गोष्ठजा द्य' स्थानादिषु पशुनामभ्य' ॥

गोग्रन्थि । पु । करीषे ॥ गोष्ठे ॥ गो जिह्विकौषधौ ॥

गोघृतम् । न । गव्येघृते ॥ वर्षवो ॥

गोघ्न । पु । अतिथौ ॥ त्रि । गोघा तके ॥

गोचर । पुं । इन्द्रियार्थे । रूपशब्दग न्धरसस्पर्शस्वरूपे ॥ प्रयुञ्जतेहि । उ पादानगोचरज्ञानमिति ॥ देशे । गवांअधिस्थाने । वने ॥ तथाचभार वि । उपारता. पश्चिमरात्रिगोच रादिति ॥ जन्मराश्यवधिग्रहचक्रा न्तरराशिषु ॥ गावइन्द्रियाणि चर न्त्यस्मिन् । गोचरसञ्चरेतिनिपाति त ॥ चि । गोगामिनि ॥

गोचरफलम् । न । जन्मराशे सकाशा त् ग्रहाणां सञ्चारवशेन शुभ शुभ फ ले ॥ गोचरशुद्धिर्यथा । केतूपान्त्यौ भजन्दगतय' षष्ठचिसस्था शुभा स्व न्त्राकाविपि तेच तौच दशमौ चन्द्र पुन: सप्तम: । जीव: सप्तनवद्विप- ञ्चमगतो युग्मेषु सोम्यात्मज शुक्र: षड्दशसप्तवर्ज्जमितरे सर्वेष्युपान्ते शुभा इति ॥

गोचर्म्म । न । गोत्वचि ॥ परिमाण विशेषे ॥ सप्तहस्तेन दण्डेन त्रिंशद्द ण्डैर्निवर्त्तनम् । दशतान्येव गोचर्म दत्त्वा स्वर्गे महीयतइति वृहस्पति' ॥ यत् किञ्चित् कुरुते पाप ज्ञानतो ऽज्ञानतो ऽपिवा । अपि गोचर्ममा त्रेण भूमिदानेन शुद्ध्यतीत्याचारे मिताक्षरा ॥

गोची । स्त्री । हिमालयपत्न्याम् ॥ गाव स्तुतिरूपा श्रुतिस्मृतीतिहा सपुराणादिसम्बन्धिनी महादेववि षयिणी वाच अञ्चति पूजयति य- द्वा गच्छति प्राप्नोति तात्पर्यरूपेण शृणोति । अञ्चु० । क्विप् । ङीप् ॥

गोच्छाल । पु । भूकदम्बे । कोकशिमा इति गौडभाषा ॥

गोजर' । पु । वृद्धबलीवर्दे ॥

गोजलम् । न । गोमूत्रे ॥

गोजा । स्त्री । गोलोमिकाद्यम् ॥ पृ थिव्यां व्रीहियवादिरूपेणोत्पन्नया म ॥ गोषु जायते । जनी० । जनसने ति विट् । विड्वनोरित्यात्वम् ॥

गोजागरिक । पु । भक्ष्यकारके ॥ न । मङ्गले ॥

गोजापर्णी । स्त्री । क्षुद्रक्षुपविशेषे । दुग्धफेनीवृक्षे । शणकेतुघ्न्याम् ॥

गोजिह्वा । स्त्री । दार्विकायाम् । गोजियालता दारियाशाक इतिचगौडभाषा ॥ गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् । हृद्यामेहकासास्रशाखज्वरहरी लघु ॥ कोमला तुवरा तिक्ता स्वादुपाकरसा स्मृता ॥ पत्रशाकस्तुगुणाः । गोजिह्वा कुष्ठमेहास्रकृच्छ्रज्वरहरीलघु ॥ गोजिह्वेव ॥

गोजिह्विका । स्त्री । गोजिह्वालतायाम् ॥ गोजिह्वेव । कन ॥

गोडिम्ब । पु । शृगालजम्बाम् ॥

गोडुम्ब. । पु । शीर्षदन्ने । तरमूज इ-ति भाषा ॥

गोडुम्बा । स्त्री । गवाक्ष्याम् । चित्राक्षकर्कव्याम् । गोमुक इतिगौडभाषा ॥ गांभुवं तुम्बति । तुबिअर्दने । मू०क । पृषोदरादि. ॥

गोडुम्बिका । स्त्री । गोडुम्बायाम् ॥

गोणी । स्त्री । धान्याधारे गूण इतिभाषाप्रसिद्धे आवपने ॥ गोणशब्दादावपनेर्थे जानपदकुण्डगोणेतिङीष् ॥ छिद्रवस्त्रे । शाणाम् ॥ धान्यमानभेदे ॥ द्विशूर्पा गोणयुदाहृता तामेव भारंजानीयादित्युक्तः ॥ द्रोणीपरिमाणमिति वैद्यकपरिभाषा ॥

गोणीतरी । स्त्री । ह्रस्वगोण्याम् ॥ ह्रस्वागोणी । कासूगोणीभ्यांष्टरच् । षित्त्वान् ङीष् ॥

गोण्ड । पु । पामरजातौ ॥ वृद्धनाभौ । नाभिगुडके ॥ त्रि । वृद्धनाभिवति ॥ गो ग्रण्ड इव ॥

गोतम । पु । ब्रह्मण पुत्रे गौतममुनौ ॥

गोतमान्वय । पु । शाक्यमुनौ ॥

गोतीर्थम् । न । गोष्ठे ॥

गोत्र । पु । अद्रौ । पर्वते ॥ न । आख्यायाम् । नामनि ॥ सम्भावनीयबोधे ॥ कानने ॥ क्षेत्रे ॥ वर्त्मनि ॥ छत्रे ॥ सजातीयगणे ॥ पूर्वाचार्याणांमतेनाऽपत्ये ॥ कुले । अभिजने । ऋषिशब्दवाच्ये आदिपुरुषे स्वसन्तानसञ्ज्ञाकारिणि ब्राह्मणरूपे ॥ क्षत्रियवैश्ययो रुपदिष्टातिदिष्टगोत्रम् । शूद्रस्यातिदिष्टातिदिष्टगोत्रम् । यथा । न समानगोत्रां भार्यां विन्देतेत्यनेन शूद्रस्यापि सगोत्रा कथं न निषिध्यते इतिचेत् अत्रोपदिष्टातिदिष्टगोत्रस्यैवनिषेधो नत्वतिदिष्टातिदिष्टशूद्रगोत्रादेरितिनिर्णय. ॥ क्षत्रियवैश्यशूद्राणा मतिदिष्टातिदिष्ट गोत्रप्रवरम् अतएवैतेषांपुरोहितगोत्रप्रवरमित्यर्थः । तथाचाग्निपुराणे

गोत्रः

वर्णसङ्करोपाख्याने । चाग्निवैश्यशू द्रायां गोत्रञ्च प्रवरादिकम् । तथा न्यवर्णसङ्करायां येषां विप्राश्च याज का इति ॥ गोत्राणितुचतुर्विंशति । तथाचमनुः । शाण्डिल्य काश्यपश्चैव वात्स्य सावर्णिक स्तथा । भरद्वाजो गौतमश्च सौकालीन स्तथापर ॥ कल्किष श्चाग्निवेश्यश्च कृष्णात्रेयव शिष्ठकौ । विश्वामित्र कुशिकश्च कौशिक श्चतथापर ॥ घृतकौशिकमौद्गल्यौ आलम्यानः पराशर । सौपा यन स्तथाऽत्रिश्च वासुकी रोहितस्त था ॥ वैयाघ्रपद्यकश्चैव जामदग्न्य स्तथापर । चतुर्विंशति गोत्राणां क थिताःपूर्वपण्डितै ॥ अपिचमनुः । ज मदग्नि र्भरद्वाजो विश्वामित्रात्रिगौ तमा । वशिष्ठकाश्यपागस्त्या मु नयो गोत्रकारिणः ॥ एतेषा या न्यपत्यानि तानिगोत्राणिमन्यते- । एतदुपलक्षण मन्येषामपिदर्शना त् । तथाच । सौकालीनकमौद्ग ल्यौ पराशरवृहस्पती । काञ्चनोवि ष्णुकौशिकौ कात्यायनात्रेयकाल का ॥ कृष्णात्रेय साङ्कृतिश्च कौ- ण्डिन्यो गर्गसञ्जक । अङ्गिरसइति ख्यात अनाहकाख्यसञ्चितः ॥ अथ जैमिनिदृष्ट्या. शाण्डिल्यो वात्स्य

गोत्रा

एवच ॥ सावर्णआलम्यानवैयाघ्रपद्या- श्च घृतकौशिक ॥ शक्तिःकात्यायन श्चैव वासुकीगौतम स्तथा । शुनक सौपायनश्च मुनयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानि गोत्रा- णि मन्वते । सर्वेद्विजन्मास्रिशद्गोत्रा ॥ इतिवमजयकुलधर्मप्रदीपः ॥ गूय ते शब्द्यते स्वसम्बन्धप्रभवोऽनेन । गुङ्शब्दे । ष्ट्रन् । गुधृवीपचीत्या दिनाची वा ॥ गां त्रायते वा । नैकपा लने । आतोनुपसर्गे इति क ॥

गोत्रजः । त्रि । गोत्रोत्पन्ने ॥ सतु जन्म नामस्मृतिपर्य्यन्तसमानोदकभावात् पश्चाद्भवति ॥

गोत्रभिद् । पुं । इन्द्रे । शक्रे ॥ गोत्रा न् गिरीन् भिनत्ति । भिदिर्० । स त् सूद्विषेति भिदे क्विप् ॥

गोत्रवृक्ष । पु । धन्वनवृक्षे ॥

गोत्रसम्प्रव । पु । पक्षिविशेषे ॥

गोत्रस्खलनम् । न । अन्यस्त्रीनाम ग्रहणे ॥ यथा । गोत्रस्खलने आन्ति मानि निजानाहि केवलां मेऽच । व्याख्या नतो विशेषप्रतिपत्ति पाणिनीय- इवेति ॥

गोत्रा । स्त्री । कौ । पृथिव्याम् ॥ गोत्रा शैला सन्त्यस्याम् । अर्शआद्यच् ॥ गां त्रायते वा । चेड्० । क ।

टाप् ॥ गव्यायाम् । गर्वांगव्ये ॥ गवां समूह । इनिषकव्यचश्चेति च ॥
गोद । पु । मस्तिष्के ॥ चि । गोप्रदे ॥ गां ददाति । डुदाञ्० । आतश्चेतिकः ॥
गोदन्तम् । न । नटमण्डने । हरिताले ॥ पु । गोदन्ते ॥
गोदा । स्त्री । गोदावर्यां नद्याम् ॥
गोदानम् । न । व्रतविशेषे । केशान्ते ॥ गाव केशा दीयन्ते खण्ड्यन्ते ऽस्मिन् । डुदाञ्० । कर्मणि ल्युट ॥
गोदारणम् । न । हले ॥ कुद्दाले ॥ गां भूमिं दारयति । दृविदारणे । ल्युट् ॥ गौ भूमिर्दीर्यते ऽनेन । करणेल्युड्वा ॥
गोदावरी । स्त्री । नदीविशेषे । गौतमसम्भवायाम् । ब्रह्माद्रिजातायाम् ॥
गोदुग्धम् । न । गो क्षीरे ॥ अस्यगुणा । गव्यं दुग्धं विशेषेण मधुर रसपाकयो । शीतलं स्तन्यकृत् स्निग्ध वातपित्तास्रनाशनम् ॥ दोष धातुमलस्रोत किञ्चित् क्लेदकरं गुरु । जरासमस्तरोगाणां शान्तिकृत् सेवितं सदा ॥ * ॥ कृष्णाया गोर्भवं दुग्ध वातहारिगुणाधिकम् । पीताया हरते पित्त तथ वात हरं भवेत् ॥ श्लेष्मल गुरु शुक्लाया रक्ताचित्राच वातहृत् । बालवत्सविवत्साना गवां दुग्ध त्रिदोषहृत् ॥ वष्कयिण्या त्रिदोषघ्न तर्पणं बलकृत् पय । जाङ्गलानूपशैलेषु चरन्तीनां यथोत्तरम् । पयो गुरुतरं स्नेहो यथाहारं प्रवर्त्तते ॥ अल्पतृणभक्षणाज्जातं क्षीर गुरु कफप्रदम् । तत्तु बल्य परं वृष्य स्वस्थानां गुणदायकम् ॥ पलालतृणकार्पासवीजजं रोगिणो हितम् ॥ * ॥ अपिचाह राजनिर्घण्ट । गवां प्रत्यूषसि क्षीरं गुरुविष्टम्भि दुर्जरम् । तस्मा दभ्युदिते सूर्ये यामं यामार्द्धमेववा ॥ समुत्तार्य पयो ग्राह्यं तत पथ्य दीपनं लघु । विवत्सावालवत्सानां पयो दोषल मीरितम् ॥ अस्तु वत्सैकवर्णायाध वलीकृष्णायो रपि । इत्याद्या भाष पर्णाद्या ऊर्द्ध्वशृङ्गी च या भवेत् ॥ तासां गवां हितं क्षीर शृतं वा ऽशृतमेव वा । गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम् ॥ श्लेष्मघ्नं रक्तवर्णानां त्रीन् हन्ति कपिलापय. ॥ इति ॥
गोदुग्धदा । स्त्री । चत्रिकाहृयो सूनीलायाम् ॥
गोधुक् । पु । गोपे । गोदोग्धरि ॥ गां दोग्धि । दुह प्रपूरणे । सत्सूद्विषेतिक्विप् ॥

गोदुह । पुं । गोदुहि । गोपे ॥ गां दोग्धि । दुह० । मू० क ॥

गोदोहनम् । न । गवां दोहनस्थाने ॥ गावोदुह्यन्ते ऽस्मिन् । ल्युट ॥ कालविशेषे । मुहूर्त्ताऽष्टमभागे ॥ यथा । आचम्य च तत कुर्यात् प्राज्ञो द्वारावलोकनम् । मुहूर्त्तस्याष्टम भागमुद्दीक्ष्योह्यतिथिर्भवेत्दृति ॥

गोदोहनी । स्त्री । गोदोहनपात्रे । पात्राम् ॥ गोर्दुह्यते यस्याम् । दुहे करणाधिकरणयोश्चेतिल्युट् । ङीप्॥

गोद्रव । पु । गोमूत्रे ॥

गोधन । पु । स्थूलाग्रवाणे । तुक्का इति भाषा ॥ इतिहरिवंश ॥ न । गोसमूहे । गोकुले ॥ गवांधन समूह ॥

गोधा । स्त्री । तलायाम् । ज्याघात वारणे । धनुर्गुणाघातवारणाय प्रकोष्ठतआवद्धायां चर्मपद्याम् ॥ निहाकायाम् । गोधिकायाम । गोह इति भाषा ॥ अस्या मांसपाकविधि । गोधा चोष्णजलैर्भूय चालितां खण्डश कृताम् । स्विन्नाञ्च तक्रतोयाभ्यां चालितां सूक्ष्मखण्डिताम् ॥ तलये द्वेसवाराढ्ये प्रलेहो वा विधानत. ॥ विपाके मधुरा गोधा वातपित्तप्रशामिनी । कषाया कटुका प्रोक्ता कफघ्नी बलवर्द्धनी ॥ सा तु स्थलजलभेदाद्द्विधेति व्याख्यातार ॥ गुध्यते वाहुर्यया । गुधपरिवेष्टने । हलश्चेतिघञ् ॥

गोधापदिका । स्त्री । गोधापदीलतायाम् । गोयालिया इति गौड भाषा॥

गोधापदी । स्त्री । सुवहायाम् । गोधापदिकायाम् ॥ गोधा इवपादोमूलमस्या । कुम्भपदीषुचेति साधु ॥

गोधास्कन्ध. । पु । विट्खदिरे ॥

गोधि । पु । ललाटे ॥ गोधिकायम् ॥ गुध्यते । गुध० । इन ॥ गावो नेत्रेधीयेते यस्मिन् । कर्मण्यधिकरणेचेति किः वा ॥

गोधिका । स्त्री । गोधायाम् । निहाकायाम् ॥ गोहीति प्रसिद्धेजलचरे ॥ गुध्यति । गुध० । ण्वुल् ॥

गोधिकापुत्र । पु । गोधाशावके । गौधेये । सर्पाद्गोधायामुत्पन्ने चन्दनगोह इति प्रसिद्धे जन्तुविशेषे ॥ गुध्यति । गुध० । ण्वुल् । गोधिकाया पुत्र ॥

गोधिनी । स्त्री । वृहतीभेदे । चविकायाम् ॥

गोधुमः । पु । गोधूमे ॥ इति शब्दचन्द्रिका ॥

गोधूम । पु । नागरङ्गे ॥ ओषधीविशेषे ॥ गोहूं इति प्रसिद्धे व्रीहिविशे

घे । रसाले । सुमने ॥ गोधूम सुमनो ऽपि स्यात् त्रिविध. स च कीर्त्तित । महागोधूम इत्याख्य पश्चाद्देशात् समागत ॥ मधूली तु तत. किञ्चि दल्पा साम्यदेशजा । नि शूको दीर्घगोधूम. क्वचिन्नन्दी मुखाभिध ॥ गोधूमो मधुर शीतो वातपित्तहरो गुरु । कफशुक्रप्रदो बल्य स्निग्ध सन्धान कृत् सर ॥ जीवनो बृंहणो वर्ण्यो वण्यो वीर्यस्थिरत्वकृत् । कफप्रदो नवीनो मधपुराण । पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुगिति वाग्भटेनवसन्ते गृहीतत्वात् ॥ मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघु । शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखा स्मृता ॥ गुध्यति गुध्यते वा । गुध० । गुधेरूम ॥

गोधूमसम्भवम् । न । काञ्जिकभेदे । सौवीरे ॥

गोधूमसार । पु । सुमनस्य सारांशे । सीरा इति सत्प्रतिचख्याते ॥ तद्विधिर्यथा । निस्तुषान् गोधूमा न्दूखले कण्डयित्वा सायङ्काले मृत्तिकादिपात्रे जले मज्जक् कारयित्वा परेद्युने प्रभातसमये उपरिस्थजलंक्रमेण दूरीकृत्वा ऽधस्थसार आतपे शुष्कं कृत्वा पात्रान्तरे स्थापयेदिति स्थाव

राजेश्वर ॥

गोधूमी । स्त्री । गोलोमिकायाम् । गोधूमा इति पायरी इतिच गौडभाषा प्रसिद्धे क्षुद्रक्षुप विशेषे ॥

गोधूलि । पुं । स्त्री । समयविशेषे ॥ यथा । सन्ध्यातपाक्रमितपश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । क्षुद्रे गवां खुरपुटोत्क्षिप्तैरजोभि गोधूलि रेष कथितो भृगुजेन योग ॥ अपिच । यावत्सिन्दूरवर्णं गगनतलगतं भानुबिम्बं च नास याव नो दिक्षु यान्ति व्रजति खुरपुटे रुद्धतो रेणुसङ्घ. । तत्र वेलासिदोष: प्रशमयतिनच सा क्रूरदृष्टि ग्रेहाणां यात्रायां वा विवाहे सकलशुभकरी सर्वकार्यस्य सिद्धि ॥ सात्रिविधेति दीपिका । यथा । गोधूलि त्रिविधां वदन्ति मुनयो नारीविवाहादिके हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे । ग्रीष्मे ऽर्द्धास्तमिते वसन्तसमये भानौ गते दृश्यतां सूर्ये चास्त मुपागते च नियतं वर्षाशरत्कालयो. ॥ हेमन्तशिशिरयो मृदुतया पिण्डीकृतरविकाल. । ग्रीष्मे ऽर्द्धास्तरविकाल. ॥ वर्षाशरद्वसन्तेष्व ऽस्तगतरविकाल इत्यर्थ: ॥

गोनन्दी । स्त्री । सारसखगस्त्रियाम् ॥

गोनर्द । पु । सारसखगे ॥ पर्वतविशेषे ॥ न । कैवर्त्तीमुस्तके ॥ गांजलं नर्दयति । नर्द शब्दे । कर्मण्यण् ॥

गोनर्दीय । पु । पतञ्जलिमुनौ । गोनर्दे ॥ गोमर्द्दभव । इत्याद्य ॥

गोनस । पु । सर्पविशेषे । तिलित्से । मल्लीवोडे ॥ गौरिव नासिका अस्य । अच् नासिकाया इत्यच् नसा देशश्च ॥ वैक्रान्तमणौ ॥

गोनाथ । पु । अनडुहि ॥

गोनाय । पु । गोपाले ॥ गांनयति । णीञ् प्रापणे । कर्मण्यण् ॥

गोनास । पु । गोनसे ॥ गौरिव नासा यस्य ॥ न । वैक्रान्तमणौ ॥

गोनिष्यन्द । पु । गोमूत्रे ॥

गोप । पु । गुवाल इति भाषाप्रसिद्धे सङ्करजातिविशेषे । आभीरे । बल्लवे ॥ मणिवन्ध्यां तन्त्रवायात् गोपजाते श्च सम्भव इति पराशरपद्धति ॥ गोष्ठाध्यक्षे ॥ भूपतौ ॥ ग्रामौघाधिकृते ॥ बोले ॥ त्रि । रक्षके । उपकारके ॥ गोपायति । गुपूरक्षणे । आयादय आर्द्धधातुकेवा । अच् ॥ गांपातिवा । पारक्षणे । आतोनुपेतक ॥ गोर्जलात् पातिवा । पा० । सुपीतिक ॥

गोपक । पुं । गोपशब्दार्थे ॥ स्वार्थेक ॥

गोपकन्या । स्त्री । आभीरसुतायाम् ॥ शारिवौषधौ ॥

गोपघोण्टा । स्त्री । हस्तिकोलौ । बदरीछदायाम् ॥ बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत् । कण्ट्या मेवसा घोण्टा गोपघोण्टेतिचोच्यते ॥ विकङ्कतवृक्षे ॥

गोपति । पु । शिवे । शम्भौ ॥ षण्डे । साँड इति भाषाप्रसिद्धे वृषे ॥ स्वर्गे ॥ भास्करे ॥ चिद्रशाधिपे ॥ ऋषभनामौषधौ ॥ गवांपतिः ॥ श्रीकृष्णे ॥ गवांपालनात् । गौर्भूर्वास्याः पतिर्वा ॥

गोपद्म । पु । गुवाके ॥

गोपनम् । न । अपह्नवे ॥ गोपनाद्दीयते सच्चनगुप्तिरन्वतविना ॥ रक्षायाम ॥ तेजपात इति भाषाप्रसिद्धे तमालपत्रे ॥

गोपनीय । त्रि । गोपितव्ये । गोप्ये ॥

गोपभद्रम् । न । शालूके ॥

गोपभद्रा । स्त्री । काश्मर्याम ॥

गोपभद्रिका । स्त्री । गम्भार्याम् ॥

गोपवधू । स्त्री । शारिवायाम् ॥ गोपाङ्गनायाम् ॥ गोपीएववधू । स्त्रियाः पुंवद्भाषितादिनापुंवद्भावः ॥

गोपरस । पु । बोले । गन्धरसे ॥ गो

पे उत्पत्तौ रक्षे ॥

गोपवल्ली । स्त्री । मूर्वायाम् ॥ शारिवायाम् ॥ श्यामालतिकायाम् ॥

गोपा । स्त्री । गोपालिकायाम् ॥ श्यामालतायाम् ॥ गोपायति । गुपू० । पचाद्यच्‌ तस्मात् अजादित्वाट्टाप् इति केचित् ॥ गा पाति । पा रक्षणे । आतोनुपसर्गे इति के प्राप्ते । वासरूपन्यायेन आतोमनिन् क्वनिब्वनिपश्चेति येन विच् अदन्तत्वाभावात् टाब् विधेरभावे गोपा' विश्वपावदिति बोध्यम् ॥

गोपानसी । स्त्री । छादनाश्रुदावलिवडभ्याम् । कुड्येषु छादनार्थं दत्ते वक्रकाष्ठे ॥ छादनाधारे । पटलाधारवंशपञ्जरे ॥ गोपायति । गुपू० । बाहुलकात् असच् प्रत्ययः । अल्लोपयलोपौ ॥ गवां गोभिर्वा पानम् किरणानां ग्रहणम् किरणैर्वा शोषणम् । तत् स्यति निवर्त्तयति । षोन्तकर्मणि । आतोनुपेसिक । गौ० ङी ॥ष्

गोपायित । त्रि । रक्षिते ॥ गोपाय्यते स्म । गुपू० । क्त । आयादय आर्द्धधातुके वा ॥

गोपाल । पु । नृपे । भूपे ॥ गोपे । गवां पालके ॥ ईशे ॥ श्रीकृष्णे ॥ तन्नाम यथा । अक्षादुग्याकोपनीवान्तु-

जलधि रक्षणाम्भोजनेत्रो ऽम्बुजस्थो बालो जङ्घाकटीरस्थलकलितरणत् किङ्किणीको मुकुन्दः । दोर्भ्यां हैयङ्गवीनं दधदतिविमलं पायसं विश्ववन्द्यो गोगोपीगोपवीतो रुरुनखविलसत्कण्ठभूषश्चिरं वः इति तन्त्रसार' ॥ सर्वस्य जगतः पालनात् । विष्णौ ॥ गां भूमिं वेदं तन्मूलं यज्ञादिकं वा । पालयति । गा पालयति वा । पाल रक्षणे । कर्मण्यण् ॥ डगणे । मध्यगुरौ । ऽ । ॥

गोपालक' । पु । शिवे ॥ श्रीकृष्णे ॥ गवां पालके ॥ गोपाल एव । स्वार्थे कन् ॥

गोपालकर्कटी । स्त्री । ग्वालकाकडी इति प्रसिद्धे कर्कटीप्रभेदे । क्षुद्रेर्वारौ । क्षुद्रचिर्भिटायाम् ॥

गोपालिका । स्त्री । गोपालकस्त्रियाम् ॥ अत्र पुयोगलक्षणो ङीष् प्राप्तः पालकान्तान्नेति निषिध्यते ॥ कीटविशेषे । महाभीरौ ॥ शारिवायाम् ओषधौ ॥

गोपाली । स्त्री । गोपालकर्कट्याम् ॥ गोरक्ष्याम् ॥ गोप्याम् ॥ गोपाली करतालीनर्त्तनशाली पुनातु वनमाली ॥

गोपाष्टमी । स्त्री । गोष्ठाष्टम्याम् ॥ यथा । शुक्लाष्टमी कार्त्तिके तु स्मृता गोपाष्ट

मी बुधे । तद्दिने वासुदेवोऽभू द्गोप्र पूर्वन्तु वत्सप ॥ तत्र कुर्या द्गवां पूजा गोग्रास गोप्रदक्षिणम् । गवानुगमनं कार्यं सर्वान् कामान ऽभीप्सता ॥

गोपिका । स्त्री । गोपस्त्रियाम् ॥ गोपाय ति । गुपू॰ । ण्वुल् ॥ गोप्याम् ॥

गोपित्तम् । न । गोरोचनायाम् ॥

गोपिनी । स्त्री । श्यामालतायम् ॥

गोपी । स्त्री । गोपस्त्रियाम् ॥ गोप स्य स्त्रीत्यर्थे पुंयोगादाख्यायामिति ङीष् ॥ शारिवायाम् ॥ रक्तिकाया म् ॥ रक्तिकायाम् । मूलप्रकृतौ ॥ गोपायति । गुपू॰ । आयाभावे । प चाद्यच् । गौरादिङीष्॰ ॥

गोपीथ । पु । न । रक्षणे ॥ न । तीर्थे ॥ जलद्रोण्याम् ॥ गाव पिवन्त्यस्मि न् । पा॰ । निशीथगोपीथावगथादू तिथक् ॥ गोपीथ.सोमपानमिति वेदभाष्यम् ॥

गोपुच्छ । पु । हारविशेषे ॥ गोलाङ्गू ले ॥ गोलाङ्गूलवानरे ॥

गोपुटा । स्त्री । स्थूलैलायाम् ॥

गोपुटिकम् । न । शिववृषस्यमस्तके ॥

गोपुरम् । न । पुरद्वारे ॥ द्वारमात्रे ॥ कैवर्त्तीमुस्तके ॥ गां जलं पिपर्त्ति । पृपालनपूरणयोः । मू॰ क.॥ गौर्जं ल पुरमस्येतिवा ॥ यद्वा । पुरति । पुरअग्रगमने । इगुपधेति क. । ग वापुरम् ॥ गोपायति वा । गुपू॰ । बाहु लकादुरच् ॥ यद्वा । गोप्यते । पुलमह त्त्वे । इगुपधत्वात् क । रलयोरभेद. गोभि पुरम् ॥ गा पुरति वा । पुर॰ । मू॰ कोवा ॥

गोपुरक । पु । कुन्दुरुके । बहुगन्धे ॥

गोपुरीषम् । न । गोमये ॥

गोपेन्द्र । पु । विष्णौ ॥ गोपराजे ॥

गोपेश । पु । शाक्यमुनौ ॥ गोपराजे ॥ नन्दघोषे ॥

गोप्ता । त्रि । रक्षके ॥ गोपायति । गुपू॰ । तृच् ॥ श्रीकृष्णे ॥ सहिस्वमा यया स्वात्मानं संवृणोति ॥

गोप्त्री । स्त्री । गोपिकायाम् ॥ रक्ति कायाम् ॥

गोप्य: । पु । दासीपुत्रे ॥ त्रि । रक्षणी ये ॥ गुह्ये ॥ सङ्गोपनीये ॥ यथा । आयु र्वित्तं गृहच्छिद्र मन्त्रमैथुन भेषजम् । अपमानं तपो दानं नव गोप्यानि यत्नत इति ॥ गुप्यते । गुपू॰ । ऋहलोर्ण्यत् ॥

गोप्यक. । पु । दासे ॥ गोप्यात् स्वार्थे क. ॥ गोप्यं कायति वा । कै॰ । आतश्चोक

गोप्याधि । पु । बन्धकविशेषे ॥ तथा च नारदः । अधिक्रियत इत्याधि.

स विज्ञेयो द्विलक्षणा । भ्रूतकालो ऽपनेयश्च धान्यद्वेयोवत स्तथा ॥ स पुनर्द्विविध प्रोक्तो गोप्यो भोग्यस्त थैवच । गोप्योरक्षणीयः ॥

गोवाणी । स्त्री । ओषधिविशेषे ॥ पा कर्णादित्वात् ङीष् ॥

गोभण्डीरः । पु । जलकुक्कुभखगे ॥

गोमक्षिका । स्त्री । मक्षिकाविशेषे । दंशे । डाँस इतिभाषा ॥

गोमान् । त्रि । गवीश्वरे । गोमिनि ॥ मवेगावोऽस्य । भूम्नि तदस्यास्ती तिमतुप् ॥

गोमतम् । न । गव्यूतौ ॥

गोमतल्लिका । स्त्री । प्रशस्तायांगवि ॥ प्रशसावचनैश्चेति मिश्रसमासे ॥

गोमती । स्त्री । स्वनामख्यातायां नद्या म् । वाशिष्ठ्याम् ॥ वैदिकमन्त्रवि शेषे ॥ उगितश्चेतिङीप् ॥

गोमन्तः । पु । विन्ध्यप्रत्यन्तपर्वते ॥

गोमय । पु । न । गोविषि ॥ गो.पुरी षम् । गोश्चपुरीषे इतिमयट् ॥ अ त्यन्तजीर्णदेहाया वन्ध्यायाश्च विशे षत । रोगार्त्ताया. प्रसूताया न गो गोमयमाहरेत् ॥

गोमयच्छत्रम् । न । शिलीन्ध्रके ॥

गोमयच्छत्रिका । स्त्री । उच्छिलीन्ध्रे । शिलीन्ध्रे । द्विलीरे ॥

गोमयप्रियम् । न । भूतृणे ॥

गोमयोत्था । स्त्री । गोमयजातकीट विशेषे । गईम्याम् । गोबरौला इति भाषा ॥

गोमायु । पु । शृगाले ॥ गन्धर्वविशेषे ॥ गां भिकृतां वाचं मिनोति । डुमि ञ्० । कृवापेत्युण् ॥

गोमी । पुं । शृगाले ॥ वृद्धभिक्षुशिष्ये । आमलेरे ॥ त्रि । गोमति ॥ उपा सके ॥

गोमीनः । पु । मत्स्यविशेषे ॥

गोमुखः । पु । मातलिपुत्रे ॥ गणादे वगणान्तरे ॥ नक्रे ॥ यक्षविशेषे ॥ न । कुटिलागारे ॥ वाद्यभाण्डे ॥ ले पने ॥ चौरैःक्रियमाणे सुरङ्गायाः प्र भेदे ॥ जपमालागोपनाय पट्टवस्त्रा दिनिर्मिते गोमुखी इति प्रसिद्धे य न्त्रविशेषे ॥ यथा । चतुर्विंशाङ्गुल मित पट्टवस्त्रादिसम्भवम् । निर्मी या ऽष्टाङ्गुलिमुख ग्रीवां तत् षड्द शाङ्गुलम् ॥ चेयं गोमुखयन्त्रञ्च सर्व तन्त्रेषु गोपितम् । तन्मुखे स्थापये न्मालां ग्रीवामध्यगतः कर ॥ प्रजपे द्विधिनागुह्यंवर्णमालाधिकंप्रिये । इ ति मुण्डमालातन्त्रम् ॥ गोमुखादे ततोमालां गोपयेन्मातृजारवत् । इति भयातन्त्रम् ॥

गोमुखी । स्त्री । मन्त्रजपार्थकर्पटादिनिर्मितगुप्तिकायाम् । गोमुखे ॥ राढदेशस्थनदीविशेषे ॥

गोमूत्रम् । न । गोःजले ॥ अस्य गुणाः । गोमूत्रं कटु तीक्ष्णोष्णं क्षारं तिक्तकषायकम् । लघ्वग्निदीपनं मेध्यं पित्तकृत् कफवातहृत् ॥ शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक् कुष्ठनाशनम् ॥ कासश्वासापहं शोथकामलापाण्डुरोगहृत् ॥ * ॥ कण्डूकिलासगदशूलमुखाक्षिरोगान् गुल्मातिसारमरुदामयमूत्ररोधान् । कासं सकुष्ठजठरक्रिमिपाण्डुरोगान् गोमूत्रमेकमपि पीतमपाकरोति ॥ सर्वेष्वपि च मूत्रेषु गोमूत्रं गुणतोऽधिकम् । अतो विशेषात् कथने मूत्रं गोमूत्रमुच्यते ॥ प्लीहोदरश्वासकासशोथवर्च्चोग्रहापहम् । शूलगुल्मरुजानाहकामलापाण्डुरोगनुत् ॥ कषायं तिक्ततीक्ष्णञ्च पूरणात् कर्णशूलहृत् ॥

गोमूत्रिका । स्त्री । तृणविशेषे । क्षेत्रजायाम् । रक्ततृणायाम् ॥ चित्रकाव्यविशेषे । यथा । गतिरश्वावचा यत्र मार्गे मूत्रस्य गोरिव । गोमूत्रिकेति तत् प्राहुर्दुष्कराश्चित्रवेदिनः ॥ अपिच । वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुरिति ॥ षोडशकोष्ठद्वये पङ्क्तिद्वये ऽर्द्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिर्भवतीत्युद्धारः ॥

उदाहरणं यथा ॥

| प्र | व्र | त्ते | वि | ग | स | द्गा | नं | सा | ध | ने | प्य | त्रि | षा | दि | भि । |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| व | द | पे | वि | क | स | द्दा | न | यु | ध | ना | प्य | त्रि | षा | खि | भि ॥ |

इति माघे १९ सर्गे ४६ श्लोकः ॥ अस्याश्चत्वारो भेदाः । पादगोमूत्रिका अर्द्धगोमूत्रिका श्लोकगोमूत्रिका विपरीतगोमूत्रिकेति भेदा इति सरस्वतीकण्ठाभरणम् ॥

गोमेदः । पु । गोमेदकमणौ ॥ द्वीपविशेषे ॥ यथा । गोमेदे गोपतिर्नाम राजा भूत्तोसवोद्यत । याज्यो ऽभूद्वञ्चिकल्यानामौतथ्यानां मनोः कुले ॥ स तेष हरियज्ञाय प्रवृत्तेषु भृगून् गुरून् । वव्रे न गौतमं कोपाद्शपत् सोऽगमत् क्षयम् ॥ यज्ञवाटे ऽस्य ता गावो दग्धा कोपाग्निना मुनेः । तन्मेदसा मही छन्ना

गोमेद सततोऽभवदिति ॥

गोमेदक । पु । स्वनाम्ना प्रसिद्धे मणिविशेषे ॥ न । पीतमणौ ॥ राहुरत्ने । तन्नामणौ ॥ अस्यपरीक्षा यथा । हिमालयेवा सिन्धौवा गोमेदमणिसम्भव । स्वच्छकान्ति गुरु स्निग्धो वर्णाढ्यो दीप्तिमानपि ॥ वस्त्र पिञ्जरो धन्यो गोमेदइतिकीर्त्तित । चतुर्द्धा जातिभेदस्तु गोमेदेपि प्रकाश्यते ॥ ब्राह्मण शुक्लवर्णः स्यात् क्षत्रियोरक्तउच्यते । आपीतोवैश्यजातिस्तु शूद्रस्त्वानीलउच्यते ॥ छाया चतुर्विधा श्वेता रक्ता पीता ऽसिता तथा ॥ गुरुप्रभाढ्य सितवर्णरूप स्निग्धो मृदुर्वातिमहापुराण ॥ स्वच्छस्तु गोमेदमणि र्धनाय करोति लक्ष्मी धनधान्य वृद्धिम् । लघु र्विरूपो ऽतिखरोऽन्यमान स्नेहोपलिप्तो मलिन खरोपि ॥ करोति गोमेदमणि र्विनाश सम्पत्तिभोगावलवीर्य्यराशे ॥ ये दोषा हीरके ज्ञेया स्ते गोमेदमणावपि । परीक्षा वज्रित कार्या श्रयेवा रत्नकोविदै ॥ स्फटिकेनैवकुर्वन्ति गोमेदप्रतिरूपिणम । शुद्धस्य गोमेदमणे स्तु मूल्यं सुवर्णतो द्वैगुणमाहुरेके । अन्येतथा विद्रुमतुल्यमूल्यं तथा परेक्षामरतुल्य माहु ॥ चतुर्विधाना मेषातु धार्य्यं परिसम्भतमिति ॥ काकोले ॥ पनके ॥

गोमेदसन्निभ । पुं । दुग्धपाषाणे ॥

गोमेध । पु । यज्ञविशेषे ॥ तस्य कलौनिषेधो यथा । अश्वालम्भ गवालम्भ सन्न्यासंपलपैतृकम् । देवराच्चसुतोत्पत्ति कलौपञ्चविवर्जयेत् ॥

गोयुगम् । न । गोद्वये ॥ गवोर्युगम् ॥

गोरक्ष । पु । नागरङ्गे । नारङ्गे ॥ ऋषभनामौषधौ ॥ त्रि । गोरक्षके । गोपे ॥ रक्षतीतिरक्ष । गो रक्ष. ॥

गोरक्षकर्कटी । स्त्री । चिर्भिटायाम् ॥

गोरक्षजम्बू । स्त्री । गोधूमे ॥ गोरक्षतण्डुलायाम् ॥ घोण्टाफले ॥

गोरक्षतण्डुला । स्त्री । गोरक्षचाउलिया इति गौडभाषाप्रसिद्धे क्षुद्रलताविशेषे । गाङ्गेरुक्याम् । नागबलायाम् ॥

गोरक्षतुम्बी । स्त्री । कुम्भतुम्ब्याम् ॥

गोरक्षदुग्धा । स्त्री । क्षुद्रक्षुपविशेषे । ताम्रदुग्धायाम् । बहुपत्रायाम् । अमृतसञ्जीवन्याम् ॥

गोरक्षी । स्त्री । क्षुद्रक्षुपविशेषे । गन्धबहुलायाम् । पञ्चपर्णिकायाम् ॥ गोरक्षदुग्धायाम् ॥ कुम्भतुम्ब्याम् ॥

गोरक्ष्यम् । न । पाशुपाल्ये ॥ गोरक्षतो

ति गोरच । तस्यभावः ष्यञ् ॥

गोरङ्कु । पु । पक्षिविशेषे ॥ नग्नके ॥ वन्दिनि ॥

गोरट' । पु । दुर्खदिरे ॥

गोरणम् । न । गुरणे । उद्यमे । भारा युद्यमने ॥ गूर उद्यमे । चु० । ल्युट् ॥

गोरस. । पु । दुग्धे ॥ दधि ॥ दण्डाहते । घोले । तक्र ॥ गोरसस्य दुग्धस्य विकारत्वात् उपचारात् ॥

गोरसजम् । न । तक्रे ॥

गोराटी । स्त्री ।
गोराटिका । स्त्री । } शारिकाविहगे ॥
गोरिका । स्त्री ।

गोरुतम् । न । क्रोशयुग्मे ॥ गोशब्दे ॥

गोरोचम् । न । हरिताले ॥

गोरोचना । स्त्री । स्वनामख्यातपीत वर्णद्रव्ये । शोभनायाम् । मङ्गलाया म् । मेध्यायाम् ॥ गोरोचना किमा तिक्ता वश्या मङ्गलकान्तिदा । विषा ऽलक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्र कृत् ॥

गोर्दम् । न । मस्तिष्के । मस्तकभवस्ने हे ॥ गूर्यते गुरतेवा । गुरी उद्यम ने । कन्दादय इतिसाधु ॥

गोल. । पु । सर्ववर्त्तुले ॥ मदनवृक्षे ॥ जारात् विधवासुते ॥ भूगोले ॥ ख गोले ॥ यथा । शोल शोलु वदि तव मति र्भास्करीय शृणु त्वमिति त्रिशि रोमणि ॥ एकराशौ षडग्रहयोगे ॥ यथा । षड्ग्रहा मेकस्मिन् यदि भव ति यत्रा निवसति सदा गोलयोगे ग प्रलयपद मिन्द्रोपि लभते भ वे लोको रक्त परिहरति पुत्रञ्च जननी नृपाश्चा न श. स्त्राज्ज्वल ति वसुधा शुष्यतिनदीति ॥ एकरा शौसप्तग्रहयोगे ॥ यथा । सप्तग्रहा यदैकस्था गोलयोग सदाभवेत् । दुर्भिक्ष राष्ट्रपीडाच तस्मिन् काले नृपक्षय इति ॥ न । मण्डले ॥ गुडे च । डलयोरभेद' ॥

गोलक' । पु । जारतोविधवासुते ॥ म णिके । अलिञ्जरे । गोल इतिमाट इ तिचभाषा ॥ गुडे ॥ पिण्डे ॥ यथा । ते जसा गोलक सूर्याग्रहर्च्चाण्यम्बुगो लका. । प्रभावन्तो हि दृश्यन्ते सूर्य रश्मिविदीपिता ॥ इतिसूर्यसिद्धान्त ॥ गन्धरसे । बोले ॥ न । गोलोके ॥ गुड्यते । गुडरक्षायाम् । घञ् । स्वा र्थेकन् । डलयोरैक्यम् ॥

गोलचयम् । न । गवा प्रशस्ताप्रशस्त स्वरूपे ॥ यथा । परापर' प्राङ वृ- त्तद्रयाग्र गोलचय तत् क्रियते ततो ऽयम् । गवा समास' शुभलक्षणा- स्ता सर्वा स्तथा ष्यागमतो ऽभिधा

स्ये ॥ अशुभलक्षणा गावश्चाह । सा
स्राविलरूक्षाक्ष्यो मूषिकनयनाश्च
न शुभा गावः । प्रचला स्थिपिटवि-
षाणा करटा खरसदृशवर्णा श्च ॥
दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना
विनतपृष्ठा । ह्रस्वस्थूलग्रीवायवम-
ध्या दारित खुराश्च ॥ श्यावातिदी
र्घजिह्वा गुल्फै रतितनुभि रति
दृहद्भिर्वा । अतिककुदा' कृशदेहा
नेष्टा हीनाधिकाङ्ग्यश्च ॥ ४ ॥ अथ
वृषलक्षणम् । वृषभोऽप्येवंस्थूलातिल
म्बवृषण' सिराततक्रोड । स्थूलसि
राचितगण्ड स्त्रिस्थूलां मेहतेयश्च ॥
मार्जाराक्ष कपिलः करटो वा न
शुभदो द्विजस्येव । कृष्णोष्ठताल्वजि
ह्व श्वसनो यूथस्य घातकरः ॥ ६ ॥
स्थूलशकृन्मणिशृङ्ग सितोदरः कृष्ण
सारवर्णश्च । गृहजातोऽपि त्याज्यो
यूथविनाशावहो वृषभ' ॥ ७ ॥ श्या
मक पुष्पचिताङ्गो भस्मारुणसन्निभो
विडालाक्षः । विप्राणा मपि न शु
भंकरोति वृषभ' परिगृहीतः ॥ ये
चोद्धरन्ति पादान् पङ्कादिव योजि
ता. कृशग्रीवाः । कातरनयना हीन
नाश्च पृष्ठतस्ते न भारसहाः ॥ ९ ॥ अ
थशुभलक्षणसहितानाह । मृदुसंह
तताम्रौष्ठा तनुस्फिच ताम्रताल्वजि



ह्वाश्च । ह्रस्वतनूच्चश्रवणाः सुकुक्षयः
स्पृष्टजङ्घाश्च ॥ आताम्रसंहतखुरा व्यू
ढोरस्का वृहत्ककुद्युक्ता । स्निग्धश्ल
क्ष्णतनुत्वग्रोमाण स्ताम्रतनुशृङ्गाः ॥
तनुभूस्पृग्वालधयो रक्तान्तविलोच
ना महोच्छ्वासाः । सिंहस्कन्धा स्त
न्वल्पकम्बला' पूजिता' सुगताः ॥
११ ॥ वामावर्त्तैर्वामे दक्षिणपार्श्वे
च दक्षिणावर्त्तैः । शुभदा भवन्त्यन
डुहो जङ्घाभिश्चैणकनिभाभि' ॥ वै
दूर्यमल्लिकाबुद्बुदेक्षणाः स्थूलनेत्र
वर्त्मान' । पार्ष्णिभि रस्फुटिताभिः श
स्ता. सर्वे च भारसहा' ॥ घ्राणोद्दे
शे सवलि मार्जारमुख' सितश्च द
क्षिणतः । कमलोत्पललाक्षाभ' सु
वालधि र्वाजितुल्यजव' ॥ लम्बै र्वृष
णै र्मेषोदरैश्च सङ्क्षिप्तवङ्क्षणक्रोडः
। ज्ञेयो भाराध्वसहो जवेऽश्वतुल्य
श्च शस्तफलः ॥ १५ ॥ सितवर्णः पिङ्ग
ल स्ताम्रविषाणेक्षणो महावक्त्रः । हं
सो नामशुभफलो यूथस्य विवर्द्धन
प्रोक्त ॥ १६ ॥ भूस्पृग्वालधि राता
म्रविषाणो रक्तदृक् ककुद्मांश्च । क
ल्माष स्वस्वामिन मचिरात् कुरु
ते पतिं लक्ष्म्या' ॥ १७ ॥ योवा सि
तैकचरणै र्यथेष्टवर्णश्च सोपि शु
भफलकृत् । मिश्रफलोऽपि ग्राह्यो

यदिनैकान्तप्रसक्तोऽपि ॥ १८ ॥

इतिवाराहीसंहितायां गोलक्षणनामाष्टपञ्चाशोऽध्याय ॥ ५८॥

गोला । स्त्री । गोदावर्य्याम् ॥ सख्याम् ॥ कुनट्याम् ॥ दुर्गायाम् ॥ पत्राञ्जने ॥ मण्डले ॥ अलिञ्जरे ॥ बालखेलने । बालक्रीडनकाष्ठे ॥ गां दीप्तिं लाति । ला० । आतइति क ॥ गुड्यते वा । गुडवेष्टने । घञ् । डलयोरैक्यम् ॥

गोलाङ्गूल । पु । असितमुखे कपिविशेषे । कपित्थाख्ये । दधिभोजे ॥ कृष्णवानरे ॥

गोलास' । पु । शिलीन्ध्रे ॥

गोलिह । पु । घण्टापाटलौ ॥

गोलीढ । पु । लोध्रविशेषे । घण्टापाटलौ ॥ गोभिर्लिह्यतेस्म । लिह० । क्त' ॥

गोलोक । पु । न । श्रीकृष्णस्य निजधामनि ॥ श्रीकृष्णस्थाने ॥ यथा । वैकुण्ठस्य दक्षभागेगोलोक सर्वमोहनम् । तत्रैव राधिका देवी द्विभुजो मुरलीधर' ॥ यद्रूपगोलकं धाम तद्रूपं नास्ति भामके । श्रुतेर्वा चक्षुषो' किं वा ध्यानयोगे न विद्यते ॥ अद्भुतत्त्वमयं देवि नानादेवेन शोभितम् । मध्यदेशे गोलकाख्य श्रीविष्णो र्वोभमन्दिरम् ॥ श्रीविष्णोःस्वरूपस्य यत्स्थलं चित्तमोहनम् । तत्स्थानस्य माहात्म्यं किमया कथ्यतेऽधुनेत्यादि माहात्म्यादिकं तन्त्रशास्त्रे ब्रह्मवैवर्त्तपुराणेच द्रष्टव्यम् ॥

गोलोमिका । स्त्री । गोधुमा इति पार्वती इतिच गौडभाषाप्रसिद्धे क्षुद्रक्षुपविशेषे । क्रोष्टुकपुच्छिकायाम् । प्रश्नरिकायाम् ॥

गोलोमी । स्त्री । श्वेतदूर्वायाम् ॥ गोलोमसु जाता । तत्रजातइत्यण् ॥ वचायाम् ॥ भूतकेशे ॥ गोलोमानि यस्य । तस्येदमित्यण् । सञ्ज्ञापूर्वकत्वान्नवृद्धिः ॥ वेश्यायाम् ॥ गोलोमा-स्या । गोशब्दोगोलोमसदृशेलाक्षणिक' । अनउपधालोपिन इति ङीप् ॥ गोलोमिकायाम् ॥

गोवत्साद्नी । पु । वृके ॥

गोवन्दनी । स्त्री । प्रियङ्गौ । फलिन्याम् ॥ गविभूमौवन्द्यते । वदि० । कर्मणिल्युट ॥ पीतदण्डोत्पले ॥

गोवरम् । न । गोमयविशेषे ॥ गोष्ठान्त गोक्षुरक्षुण्ण शुष्कचूर्णितगोमयम् । गोवर तत् समाख्यातं वरिष्ठं रससाधने ॥

गोवर्द्धन. । पु । स्वनाम्ना प्रसिद्धे पर्वतविशेषे । गिरिराजे ॥ कनाद्रि दौरि

शाखोऽयं भूधरो नाम संशय । शुक्लप्रतिपद्दिप्रात कार्त्तिके ऽर्घ्यो ऽत्रवै-ष्णवे ॥ पूजामन्त्रस्तु । गोवर्द्धनधराधारगोकुलत्राणकारक । विष्णुबाहुकृतोच्छ्रायोगवा कोटिप्रदोभवेति ॥ त्रि । गोवर्द्धके ॥ गवा वर्द्धन ॥

गोवर्द्धनधर । पु । श्रीकृष्णे । नन्दनन्दने ॥ गोवर्द्धनस्य गिरे धरो धारक ॥

गोवर्द्धनधारी । पु । श्रीकृष्णे । यशोदानन्दने ॥

गोवशा । स्त्री । वन्ध्यायाङ्गवि ॥

गोविन्द । पुं । वासुदेवे ॥ तद्ध्यानयथा । फुल्लेन्दीवरकान्त मिन्दुवदन वर्हावतंसप्रिय श्रीवत्साङ्कमुदारकौस्तुभधर पीताम्बर सुन्दरम् । गोपीनानयनोत्पलार्चिततनु गोगोपसङ्घावृतंगोविन्द कलवेणुवादनपर दिव्याङ्गभूष भजेदिति ॥ गोशब्दवाच्यानि द्रष्टियाणि निष्पत्तं प्राप्ते ॥ गांवेदलक्षणां वाणीं विन्दति इति व्युत्पत्त्या सर्ववेदोपादानत्वेन सर्वज्ञे ॥ गां भुवं धेनुं स्वर्गं वेद वा अविदत् विन्दति वा । विद॰ विद्लृ॰ । गवादिषु विन्देः संज्ञायामितिश' । वाराहरूपेणोद्धरणात् कामधेनोरैश्वर्यप्राप्ते । इन्द्रेभ्यस्वर्गस्य निवेदनात् मत्स्यादिरूपेण वेदोद्धरणाद्वा ॥ गोभिर्वाणीभिर्वेदान्तवाक्यैर्विन्दते वा । गोभिरेव यतो वेद्यो गोविन्द समुदाहृत इति विष्णुतिलकम् ॥ वह्निपुराणेयमानुशासनेतन्नाममाहात्म्य यथा । येतिष्ठन्त स्वपन्तश्च गच्छन्त स्खलिते क्षुते । सङ्कीर्त्तयन्ति गोविन्द ते वस्याज्या सुदूरतइति ॥ गवाध्यक्षे ॥ वृहस्पतौ ॥

गोविन्दद्वादशी । स्त्री । फाल्गुनशुक्लद्वादश्याम् ॥

गोविट् । पु । गोमये ॥ गोर्विट् ॥

गोविष्ठा । स्त्री । गोमये ॥ वनोपले ॥ गोर्विष्ठा ॥

गोवीथी । स्त्री । मध्यममार्गे नक्षत्रविशेषाणां सज्ञाविशेषे ॥ यथा । ऊ भश्विन्याश्वास्वातीगोवीथीतितुश्रद्धितेति ॥

गोवृन्दम् । न । गोसमूहे ॥

गोशकृत् । न । गोमये ॥

गोशरण्य । पु । ब्राह्मादितो दुर्गाश्रगो परित्राणकारके ॥ गो गैर्ना वा शरण्य' ॥

गोशालम् । न । गोगृहे ॥ गवांशाला । विभाषासेनेति पाक्षिक क्लीवत्वम् ॥ त्रि । गोशाले जाते ॥ स्थानान्तगोशालेतिजातार्थप्रत्ययस्य लुक् ॥

गोशाला । स्त्री । गोशाले । गोसाला

इतिभाषा ॥ गवां शाला ॥

गोशीर्षम् । न । चन्दने ॥ चन्दनविशेषे । हरिचन्दने ॥ गोशीर्षाकारेमलये कदेशेजाते कालताम्रयाभिश्र वर्णो उत्पलगन्धिनि अतिसुरभिशीतलतया सदैव सर्पैर्वेष्टिते इति व्याख्यातार ॥ गो शीर्षमिवगोशीर्षोगिरिस्तत्राकर इति स्वामी ॥ गवांमस्तके ॥

गोशीर्षक । पु । द्रोणपुष्पीवृक्षे ॥ कपिलाभाह्निसमुद्भवे गोरोचनासदृशवर्णे चन्दनजातिविशेषे ॥ गोमस्तके ॥

गोशृङ्ग । पु । वर्वुरवृक्षे ॥ न । गोर्विषाणे ॥

गोश्रुति । पु । वैयाघ्रपद्येऋषिविशेषे ॥

गोष्ठम् । न । गवांस्थाने ॥ गावस्तिष्ठन्त्यत्र । ष्ठा० । घञर्थे इति सुपिस्थ इति वा क । अम्बाम्बेतिषत्वम् ॥ चिद्धिष्ठिताहङ्कारे ॥ गाव ओचादीनीन्द्रियाणि तिष्ठन्त्यत्रेति पूर्ववत् प्रक्रिया ॥ गोष्ठीश्राद्धे ॥

गोष्ठपति । पु गवांस्थानाध्यक्षे ॥

गोष्ठश्व । पु । परच्छिसके । य स्वगृहात्रनेश्वित परान्वेष्टितस्मिन् ॥ गोष्ठेश्वा इति सप्तमीतत्पुरुषे अचतुरेत्यादिनाऽच् । मत्सद्वितइतिटिलोप ॥ षष्ठीतत्पुरुषेतु गोष्ठश्वाइत्त्येव ॥

गोष्टाष्टमी । स्त्री । गोपाष्टम्याम् ॥

गोष्ठी । स्त्री । सभायाम् । परिषदि ॥ संलापे ॥ पोष्यवर्गे ॥ विप्र गोष्ठी दरिद्रस्य ॥ गावोऽनेकावाच तिष्ठन्त्यस्याम् । घञर्थेक । अम्बाम्बगोभूमीतिषत्वम् । गौरादित्वान् ङीष ॥

गोष्ठीपति । पु । पोष्यवर्गाभिपालके ॥ सभापतौ ॥

गोष्ठीभेद । पु । क्रीडाविशेषे ॥

गोष्पदम् । न । गोखुरश्वभ्रे ॥ त्रि । गवां गतिगोचरे ॥ गोपद प्रमाणे ॥ गो पदम् । गाव पद्यन्ते यस्मिन् देशे स गोभि सेवितो गोष्पद । गोष्पदसेवितासेवितप्रमाणेष्वितिसुट् सस्यषत्वञ्चनिपात्यते । असेविते अगोष्पदान्यरण्यानि । प्रमाणे गोष्पदमात्रंक्षेत्रम् ॥

गोस । पु । बोले ॥ उष काले । विभाते ॥ गां जल स्यति । षोऽन्तकर्मणि । आत इतिक ॥

गोसङ्ख्य । पु । गोपे ॥ गाव सङ्ख्यत । चक्षिङ् । चक्षिङ ख्याञ । सम्ख्य इतिक: ॥

गोसदृक्ष' । पु । गवये ॥

गोसन्दाय । पु । गोदानकर्त्तरि ॥

गोसम्भवा । स्त्री । श्वेतदूर्वायाम् ॥ त्रि ।

गोर्जाते ॥

गोसर्गः । पु । प्रभाते ॥

गोसव । पु । गोमेधयज्ञे ॥

गोस्तन । पु । चतुर्यष्टिकहारे ॥ गो कुचे ॥

गोस्तनी । स्त्री । कपिलद्राक्षायाम् । द्राक्षायाम् । मनक्कादाख इतिभाषा ॥ गौ स्तनोऽस्या । गोस्तनसदृशे गाशब्दो गौण । स्वाङ्गाच्चोपसर्जनादिति ङीष् ॥

गोस्थानम् । न । गोष्ठे ॥ गवास्थानम् ॥

गास्थानकम् । न । गोष्ठे ॥ स्वार्थेकः ॥

गोस्वामी । त्रि । गोपतौ ॥

गोहनम् । न । गोमये ॥

गोहरीतकी । स्त्री । विल्वे ॥

गोहालिया । स्त्री । गोवालिया इति ख्याते लताविशेषे ॥

गोहित । पु । घोषलतायाम् ॥ विल्वे ॥ श्रीकृष्णे ॥ गवा विरक्षार्थे गोवर्द्धनगिरिं धृतवान् इतिगोभ्योहित. । चतुर्थीतदर्थे त्यादिना चतुर्थी तत्पुरुष । गोभूमे भीरावतरोच्छया शरीर ग्रहणंकुर्वन् वा हित. ॥ त्रि । गवा हितकारके । गोग्रासादसैरि ॥

गोहिरम् । न । पादमूले ॥

गौच्यः । पु । मेनासुते । मैनाके ॥ गो

च्या हिमालयपत्न्या. अपत्यम् । स्त्रीभ्योढगिति ढकिप्राप्ते छन्दसि व्यत्ययो बहुलमिति व्यत्ययेन गर्गादिभ्योयञिति यञ् ॥

गौञ्जिक । पु । स्वर्णकारे ॥ गुञ्जाव्यवहर्त्तरि ॥

गौड. । पु । देशविशेषे ॥ तद्देशसीमा यथा । वङ्गदेशं समारभ्य भुवनेशान्तग शिवे । गौडदेश समाख्यात. सर्वविद्याविशारद. ॥ तद्देशस्थे पुभूम्नि गौडा ॥ तेच पञ्चोक्ता स्कान्दपुराणे । सारस्वता कान्यकुब्जाः गौड मैथिलकौत्कला । पञ्चगौडा इति ख्याता विन्ध्यस्योत्तरवासिन. इति ॥

गौडवास्तुक. । पु । न । वास्तुक प्रभेदे ॥ तदेवतुहस्त यच रक्तं स्याद्गौडवास्तुकम् ॥

गौडिक । पु । इक्षुकुट्टके ॥ इक्षौ ॥ गुडेसाधु । गुडादिभ्यष्ठञ् ॥ न । मद्यविशेषे ॥

गौडी । स्त्री । सुराप्रभेदे । वाक्कल्याम् ॥ रागिणीविशेषे । मेघरागस्य योषिति ॥ काव्यरीतिप्रभेदे ॥ यथा । ओज प्रसादमाधुर्य गुणाश्रितयभेदत । गौडवैदर्भपाञ्चालरीतय. परिकीर्त्तिता इति ॥

गौण. । त्रि । गुणयोगात्प्रवृत्ते ॥ अमु

ख्ये ॥ छलोपपादितेर्थे ॥ गुणाद्दागत । अण् ॥

गौणधातु । पु । उपधातौ ॥

गौणसन्न्यासी । स्त्री । अन्याग्निनि । कर्मफलत्यागिन्येपि कर्म्मानुष्ठायिनि । अन्ये ॥

गौणी । स्त्री । वृत्तिविशेषे ॥ अशीति प्रकारलक्षणान्तर्गतलक्षणाविशेषे ॥ पश्यन्तु साहित्यदर्पणम् ॥

गौतम । पु । नचिकेतस, पितरि मुनिविशेषे । उद्दालके अयतो गौतम इति प्रसिद्धे ॥ मुनिविशेषे । शतानन्दे ॥ शाक्यवंशावतीर्णे बुद्धमुनिविशेषे । शाक्यसिंहे । शौद्धोदनौ ॥ कृपे ॥ गौतमस्यायं शिष्य । तस्येदमित्यण् । तद्वाचावतारात्वा ॥ गौतमस्यापत्ये । ऋष्यण् । बहुत्वे गोतमा ॥

गौतमसम्भवा । स्त्री । गोदावर्यां नद्याम् ॥

गौतमी । स्त्री । उमायाम । दुर्गायाम् ॥ गोरोचनायाम् ॥ गोदावर्याम् ॥ कृप्याम् ॥ शाक्यलक्ष्यगौतमप्रणीतायां विद्यायाम् ॥ षोडशपदार्थप्रतिपादिकायामहल्यापतिगोतमप्रोक्ताक्षार्थविद्यायाम् ॥ शार्ङ्गरवादञो ङीन् ॥ राक्षसीविशेषे ॥

गौत्तम । पुं । स्थावरविषस्य प्रभेदे ॥

गौधार । पु । गोधिकासुते । अहेर्गोधायाजाते चन्दनगोहेतिख्याते ॥ गोधाया अपत्यम् । आरगुदीचामि-त्यारक् ॥

गौधूम । पुं । गोधूमविकारे ॥ गोधूमस्यावयवो विकारो वा । बिल्वाद्यण् ॥

गौधूमीनम् । न । गोधूमक्षेत्रे ॥ गोधूमानां भवनं क्षेत्रम् । धान्यानांभवने क्षेत्रे खञ् ॥

गौधेय । पु । गोधिकात्मजे । गौधेरे ॥ गोधाया अपत्यम् । शुभ्रादित्वाड्ढक् ॥

गौधेर । पु । गौधारे ॥ गोधाया अपत्यम् । गोधाया ढ्रक् ॥

गौर । पुं । श्वेतसर्षपे ॥ चन्द्रे ॥ धववृक्षे ॥ अरुणवर्णे ॥ गौरा इति ख्याते पीतवर्णे ॥ श्वेतवर्णे ॥ त्रि । तद्वर्णवति ॥ विशुद्धे ॥ न । पद्मकेसरे ॥ कुङ्कुमे ॥ स्वर्णे ॥ गुरति गच्छति मनोऽत्र वा । गुरी उद्यमने गुङ् गतौ वा । ऋज्रेन्द्रेतिसाधु ॥ गूर्यतेऽनेन वा । गुरी० । हलश्चेति घञ् । गौर एव । प्रज्ञाद्यण् ॥

गौरक्ष्यम् । न । पाशुपाल्ये ॥

गौरजीरकः । पु । कणाज्याम् । श्वेतजीरके ॥

गौरतित्तिर । पुं । कपिञ्जले ॥
गौरत्वक । पु । इङ्गुदीवृक्षे ॥
गौरवम् । न । अभ्युत्थाने ॥ गुरुत्वे । लाघवाभावे ॥ गुरोर्भाव । इगन्ता ञ्चलघुपूर्वादित्यण् ॥
गौरवित । त्रि । आर्यमिश्रे ॥ गौरव सञ्जातोऽस्य । तारकादित्वादि तच् ॥
गौरशाक । पु । गिरजमधूके । अल्प पत्रे ॥
गौरसर्षप । पु । श्वेतसर्षपे । सिद्धार्थे ॥ गौरश्चासौसर्षपश्च ॥ त्रिभी राज सर्षपै परिमिते ॥
गौरसुवर्णम् । न । चित्रकूटप्रसिद्धे प त्रशाकप्रभेदे । वारिजे । गन्धशाके॥
गौरा । स्त्री । गौर्याम् । शिवायाम् ॥ इतिद्विरूप ॥
गौराद्रक । पु । स्थावरविषविशेषे॥
गौरास्य । पु । कृष्णवानरे ॥
गौरिका । स्त्री । अष्टवर्षीयाकन्याया-म् ॥ गौर्येव । क. ॥
गौरिल । पु । सिद्धार्थे ॥ लौहचूर्णे ॥
गौरी । स्त्री । पार्वत्याम ॥ योगाग्नि दग्धदेहा या पुनर्जाता हिमालये । शङ्खेन्दुकुन्दधवला ततो गौरीतु सा स्मृता ॥ असञ्जातरज कन्यायाम् ॥ हरिद्रायाम् ॥ दारुहरिद्रायाम् ॥ गोरोचनायाम् ॥ प्रियङ्गुवृक्षे ॥ व-सुधायाम् ॥ नदीविशेषे ॥ वरुणभा र्यायाम् ॥ बुद्धशक्तिविशेषे । माया देव्याम् ॥ मञ्जिष्ठायाम् ॥ श्वेतदूर्वा याम ॥ मल्लिकायाम् ॥ तुलस्याम् ॥ सुवर्णकदल्याम् ॥ आकाशमांस्याम् ॥ रागिणी विशेषे । मालवरागभार्या याम् ॥ गौरवर्णान्वितायाम् ॥ गूयते । गुङ्शब्दे । ऋज्रेन्द्रेतिरन्नन्तोगौ रोनिपातित । गौरोवर्णोऽस्यास्या । गौरादित्वान् ङीष् ॥
गौरीगुरु । पुं । हिमवति ॥ गौर्या गुरु ॥
गौरीजम् । न । अभ्रके ॥
गौरीतक्रम् । न । तक्रविशेषे ॥ यथा । लवणं मरिचं विश्वं जीरं नार ङ्गजम्बुकम् । एलाचूर्णान्वित तक्रं धूपयेद् घृतहिङ्गुना ॥ पार्वत्या वि हितं तक्रं सर्वदोषनिबर्हणम् । सुव र्णं पावनं दिव्य महेशस्य अहतप्रि यमिति ॥
गौरीपुत्र । पु । कार्त्तिकेये ॥ गणेशे ॥
गौरीपुष्प । पु । प्रियङ्गुवृक्षे ॥
गौरीललितम् । न । हरिताले ॥
गौरीशिखरम् । न । तीर्थविशेषे ॥
गौरीसुत । त्रि । दशवर्षोढात्मजे ॥
गौरुतल्पिक । पु । गुरुस्त्रीगामिनि ॥ गुरुतल्प गच्छति । गच्छतौ परदा

गादिभ्यः इति ठक् ॥

गौल्मिक । पु । मुष्ककवृक्षे ॥

गौल्यम् । न । मधुरे ॥

गौश्रतिक । त्रि । गोशतस्वामिनि ॥

गौष्ठीनम् । न । भूतपूर्वगोष्ठे ॥ पूर्वंभूत गोष्ठम् । गोष्ठात् खञ्भूतपूर्वे इतिखञ ॥ तीर्थविशेषे ॥

ग्रथित । त्रि । गुम्फिते । दृब्धे । कृत ग्रन्थने । गाँथा इतिगूथा इतिचभाषा ॥आक्रान्ते ॥ हते । हिंसिते॥ ग्रथ्यतेस्म । ग्रन्थसन्दर्भे । क्त

ग्रथितमाल । पु । वद्धपङ्क्तौ ॥

ग्रन्थ । पु । गुम्फे । ग्रन्थनायाम् ॥ धने ॥ शास्त्रे ॥ अक्षरसङ्ख्यायाम् । द्वात्रिंशद्वर्णनिर्मितौ । अनुष्टुप्श्लोके ॥ प्रबन्धे । विवक्षितार्थप्रतिपत्त्यनुकूलत्वे सति निबद्धमानवाक्यसमुदाये । सन्दर्भे ॥ ग्रन्थनम् । ग्रन्थ०। घञ् ॥

ग्रन्थक । पु । द्वात्रिंशदक्षरान्विते अनुष्टुप्छन्द श्लोके ॥ सञ्ज्ञायांकन् ॥

ग्रन्थकर्त्ता । पु । ग्रन्थकारे ॥

ग्रन्थकुटी । स्त्री । लेखभूमौ । लेख्यस्थाने । दफतरखाना इति आपिस् इतिच ऊपरान्तजनभाषा ॥

ग्रन्थनम् । न । गुम्फने । ग्रन्थने । सन्दर्भे ॥

ग्रन्थना । स्त्री । ग्रन्थने ॥

ग्रन्थसन्धि । पु । काण्डे ॥ पटले ॥ स्थाने ॥ प्रकरणे ॥ पर्वणि ॥ अध्याये ॥ आह्निके ॥ उल्लासे ॥

ग्रन्थि । पु । ग्रन्थिपर्णे ॥ गाँठ इति भाषा प्रसिद्धे वस्त्रादिबन्धे ॥ वस्त्रादिसन्धौ । पर्वणि । पोरी इति भाषा ॥ भद्रमुस्तायाम् ॥ हितावल्याम् ॥ पिण्डालौ ॥ कौटिल्ये ॥ अन्योन्याध्यासे ॥ मायाख्यपाशे ॥ रुग्भेदे ॥ ॥ तस्य निदानसम्प्राप्ती यथा । वातादयो मांसमसृक्प्रदुष्टा सन्दूष्य मेदश्च तथा शिराश्च वृत्तोन्नतं विग्रथितन्तु शोथ कुर्वन्त्यतो ग्रन्थिरितिप्रदिष्ट इति ॥ ग्रन्थ्यते । ग्रथि० । सर्वधातुभ्यइन् ॥ खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्चेतिइर्वा । स्वरभेद ॥

ग्रन्थिक । पु । करीरे ॥ दैवज्ञे ॥ सहदेवपाण्डवे ॥ न । पिप्पलीमूले॥

ग्रन्थिपर्णे ॥ पु । न । गुग्गुलौ ॥ ग्रन्थिप्रतिकृति । इवेप्रतिकृताविति कन् ॥

ग्रन्थिका । स्त्री । पिप्पलीमूले ॥

ग्रन्थित । त्रि । ग्रथिते । गुम्फिते ॥ ॥ ग्रथ्यतेस्म । ग्रथि० । क्त ॥

ग्रन्थिदला । स्त्री । मालाकन्दे ॥

ग्रन्थिदूर्वा । स्त्री । मालादूर्वायाम् ॥

ग्रन्थिपर्ण । पु । चोरनामगन्धद्रव्ये ॥ न । बर्हिपुष्पे । कुक्कुरे । कुकुरौंदा इति ख्याते ॥ ग्रन्थिपर्णं तिक्ततीक्ष्णं कटूष्णं दीपनलघु । कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम् ॥ अस्यले पनगुण । रूक्षता ऽ लक्ष्मीराक्षसज्वरनाशित्वमिति ॥ ग्रन्थीपर्णोन्यस्य । ग्रन्थयइवपर्णान्यस्येतिवा ॥

ग्रन्थिपर्णा । स्त्री । जतुकालतायाम् ॥

ग्रन्थिपर्णी । स्त्री । गण्डदूर्वायाम् ॥

ग्रन्थिपाश । पु । ग्रन्थ्यात्मनिमायाख्यपाशे ॥

ग्रन्थिफल । पु । शाकुरुण्डवृक्षे ॥ मदनवृक्षे ॥ कपित्थवृक्षे ॥

ग्रन्थिभेद । पु । गँठकटा इति भाषा प्रसिद्धे तस्करविशेषे । य पटप्रान्तस्थित सुवर्णादिकं ग्रन्थिमोचनेन चोरयतिसइत्यर्थः ॥

ग्रन्थिमान् । पु । अस्थिसंहारिणि । हाडजोडा इति भाषा ॥ त्रि । ग्रन्थियुक्ते ॥ ग्रन्थिरस्यास्मिन्वा । मतुप् ॥

ग्रन्थिमत्फल । पु । लकुचे ॥

ग्रन्थिमूलम् । न । गृञ्जने । शिखिमूले ॥

ग्रन्थिमूला । स्त्री । मालादूर्वायाम् ॥

ग्रन्थिल । पु । करीरद्रुमे ॥ विकङ्कततरौ ॥ तण्डुलीयशाके ॥ चिताव ल्याम् ॥ पिण्डालौ ॥ चोरकनामगन्धद्रव्ये ॥ न । पिप्पलीमूले ॥ आर्द्रके ॥ त्रि । ग्रन्थियुक्ते ॥ ग्रन्थिरस्यास्ति । सिध्मादित्वाल्लच् ॥ ग्रन्थिं लाति वा । ला० । क ॥

ग्रन्थिला । स्त्री । भद्रमुस्तायाम् ॥ गण्डदूर्वायाम् ॥ मालादूर्वायाम् ॥

ग्रन्थिवर्णी । पु । ग्रन्थिपर्णे ॥

ग्रन्थिहर । पु । अमात्ये । मन्त्रिणि ॥

ग्रन्थीकम् । न । पिप्पलीमूले ॥

ग्रसनम् । न । ग्रासे ॥ ग्रसुअदने । ल्युट् ॥

ग्रसित । त्रि । कृतग्रासे । कवलिते ॥

ग्रसिष्णु । त्रि । ग्रसनशीले ॥ न । प्रलयकाले ॥

ग्रस्त । त्रि । लुप्तवर्णपदे । असम्पूर्णोच्चारिते । अपूर्णवयसि ॥ लुप्ता वर्णाः पदं वा यत्रवाक्ये पदेवा ॥ ग्रस्यते । ग्रसु० । क्त । यस्यविभाषेति प्राप्तिक इडभाव ॥ भक्षिते । भुक्ते ॥

ग्रह । पु । अनुग्रहे ॥ निर्बन्धे । आग्रहे । अभिनिवेशे ॥ ग्रहणे ॥ रणोद्यमे ॥ पूतनादिबालग्रहे ॥ सैंहिकेये ॥ उपरागे । राहुकर्त्तृकचन्द्रादिकर्मकग्रहणरूपक्रियायाम् ॥ सोमादिपात्रे ॥ यथा । सोमामयर्षां सुराग्रहान् गृह्णाति ॥ सूर्यादिनवसु

॥ सेचयथा । सूर्यश्चन्द्रो मङ्गलश्च बुधश्चापि वृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति नव ग्रहाः ॥ एषामष्टधा गतिर्यथा । वक्रा ऽतिवक्रा कुटिला मन्दा मन्दतरा समा । शीघ्रा शीघ्रतरा चैव ग्रहाणां गतिरष्टधा ॥ ग्रहणम् गृह्णातिवा । ग्रह उपादाने । ग्रहवृहनिश्चिगमश्चेत्यप् । विभाषाग्रहइत्यच्वा ॥ बन्धने ॥ गृह्यते बध्यते चेषत्तो येन ग्रहस्तं चक्रेन बन्धनेनेतिभाष्यम् ॥

**ग्रहकल्लोलः** । पु । राहौ ॥

**ग्रहणम्** । न । स्वीकारे ॥ हस्तयोर्व्यापारे । आदाने ॥ आदरे ॥ करे । हस्ते ॥ उपलब्धौ ॥ वन्द्याम् ॥ धीगुणे ॥ प्रत्याये ॥ इन्द्रिये ॥ बन्धने ॥ उपरागे । पर्वप्रतिपत्सन्धौ राहुणा सूर्यचन्द्रमसोर्ग्रसने ॥ अथ सूर्यचन्द्रयोर्ग्रहणकारणम् । यथा । भत्रिपादान्तरे राहोः केतोर्वा सस्थितो रविः । चतुष्पादन्तरे चन्द्रस्तदासम्भाव्यतेग्रहः ॥ यस्मिन्नृक्षे रविस्तस्मा च्चतुर्दशगतः शशी । पूर्णिमाप्रतिपत्सन्धौ राहुणाग्रस्यते शशी ॥ कृष्णपक्षे तृतीयाया मासर्क्षे यदि जायते । तत स्वयोदशे सूर्यो राहुणा ग्रस्यते रविः ॥ ग्रहणकालिकरविचन्द्रयोर्मेघेनाच्छादनानाच्छादनकारणं यथा । रविर्भौमनवांशे तु निरभ्रं ग्रासमादिशेत् । बुधशौरिनवांशे तु मलिनं धूम्रवर्णकम् ॥ गुरोरंशक मासाद्य दृश्यते सवलाहक । शशिशुक्रनवांशे तु प्रावृट्काले मसृणम् ॥ अन्यत्राव्यक्तभूतौ तौ दृश्येते छादिताम्बरा विति ॥ चन्द्रग्रहश्चन्द्रवारे सूर्ये सूर्यग्रहस्तथा । चूडामणिरयं योगस्तत्रानन्तफलं स्मृतम ॥ अन्यस्माद्ग्रहणात् कोटिगुणमत्रफलं लभेत् ॥ द्युतिविशेष ॥ गृह्यते ऽनेन । ग्रह० । करणेल्युट् । सामान्येनपुंसकम् ॥

**ग्रहणिः** । स्त्री । ग्रहणीरोगे ॥ गृह्णाति । ग्रह० । ग्रहेरनिः ॥

**ग्रहणी** । स्त्री । पुरीषपूर्णायामग्न्यधिष्ठाननाड्याम् ॥ रोगविशेषे । प्रवाहिकायाम् । संग्रहण्याम् ॥ तस्य निदानसम्प्राप्ती यथा । अतीसारे निवृत्ते ऽपि मन्दाग्ने रहिताशिनः । भूय सन्दूषितो वह्नि र्ग्रहणीमपि दूषयेत् ॥ एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितै । सा दुष्टा बहुशो भुक्त माम मेव विमुञ्चति ॥ पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम । ग्रहणीरोगमाहुस्तमायुर्वेदविदोज

ना इति । अतीसारेद्रवधातुप्रवृत्ति ग्रहण्यान्तुबद्धस्यापिमलस्य प्रवृत्तिरितितयोर्भेद ॥ गृह्णाति आठ रादिम् गृह्यते वा । ग्रह० । कृत्यल्युटोबहुलमितिल्युट् । ङीप् ॥ यद्वा । ग्रहेरनि । कृदिकारादितिङीष् ॥

ग्रहणीरुक् । स्त्री । ग्रहण्याम् । प्रवाहिकायाम् ॥

ग्रहणीहरम् । न । लवङ्गे ॥ चि । ग्रहणीहारिणि ॥

ग्रहदेवता । स्त्री । ग्रहाणांदैवते ॥ यथा । शिवाधिदैवतं सूर्यं वह्निप्रत्यधिदैवतम् । १ । उमाधिदैवतसोम जलप्रत्यधिदैवतम् । २ । स्कन्दाधिदैवतभौम क्षितिप्रत्यधिदैवतम ३ ॥ नारायणाधिदैवञ्च विष्णु प्रत्यधिदैवतम् । बुधम् । ४ । ब्रह्माधिदैव सूर्यास्य मिन्द्रप्रत्यधिदैवतम् । ५ । शक्राधिदैवतं शुक्रं शचीप्रत्यधिदैवतम् ६ ॥ यमाधिदैवतं प्रजापति प्रत्यधिदैवतम् ७ ॥ कालाधिदैवं सूर्यास्यं सर्पप्रत्यधिदैवतम् । ८ ॥ चित्रगुप्ताधिदैवञ्च ब्रह्मप्रत्यधिदैवतम् ९ ॥ ऽग्न्यादिषु च । अग्निरापो धरा विष्णुरिन्द्रेन्द्राण्यौ प्रजापतिः । सार्पराज्ञी तथाब्रह्मा ग्रहाणा देवता. स्मृता. । इतिलघुशौनकीमतम । शृङ्गशौनकयोस्तु शिवादीनामेव ग्रहदेवतात्वमुक्तम् ॥

ग्रहद्रुम । पु । शाकवृक्षे ॥

ग्रहनायक. । पु । सूर्ये ॥ शनैश्चरे ॥

ग्रहनाश. । पुं । छातियान इतिगौड भाषाप्रसिद्धे वृक्षे ॥

ग्रहनाशन । पु । ग्रहनाशे ॥

ग्रहनेमि । पु । चन्द्रे ॥

ग्रहपति । पु । सूर्ये ॥ ग्रहाणापति. ॥ अर्कद्रुमे ॥

ग्रहपुष । पु । भानौ । सूर्ये ॥

ग्रहभक्ति । स्त्री । केषां जनपदानां को ग्रहोऽधिपतिरित्येतत् यत्र निरूप्यते तत्र ग्रन्थे ॥ ग्रहाणां भक्तिर्विभाग' ॥ विशेषपश्यशरान्त्यां १६ अध्याये ॥

ग्रहभिन्नम् । न । भौमादिग्रहैर्भिन्ने ॥ ग्रहेण ग्रहैर्वाभिन्नम् ॥

ग्रहभिन्नभम् । न । भौमादिग्रहैर्भिन्ने नक्षत्रे ॥ ग्रहभिन्नन्तत् भञ्च ॥

ग्रहभीतिजित् । पु । गन्धद्रव्यविशेषे । चीडायाम् । दारुगन्धायाम् ॥

ग्रहमैत्रम् । न । ग्रहाणामित्रामित्रादिविचारे ॥ यथा । सूर्यस्य मित्राणि कुजेन्दुजीवा समो बुधोऽरी शनिभार्गवौ च । चन्द्रस्य मित्रेतु दिवाकरज्ञौ समा स्मृतामन्दसितेज्य

भौमा ॥ कुजस्य मित्राणि रवीन्दुजीवा समौ तथा मन्दभृगू बुधोरिः । बुधस्यमित्रे सितभास्करौ समा कुजेज्यमन्दा रिपुरिन्दुरेव ॥ मित्राणि जीवस्यकुजेन्दुसूर्या शनि सम शुक्रबुधौतुशत्रू । शुक्रस्य मित्रेशनिसौम्यौ। समौ कुजेज्यौतु रिपरवीन्दू ॥ शनेस्तुमित्रे भृगुचन्द्रपुत्रौ जीव समोऽन्येप्यरयस्तुशेषा ॥

ग्रहयाग । पु । ग्रहाणायज्ञे ॥ अस्यप्रयोजनन्तु । शान्तौपुष्टौ महेशानि तथा क्रूरेऽपिकर्मणि । ग्रहयागं प्रकुर्वाणो वाञ्छितार्थ मवाप्नुयादिति महानिर्वाणतन्त्रम् । तस्यशान्तिकत्वेमलमासादावपि कर्त्तव्यत्वम् । पौष्टिकत्वेतु शुद्धकाले ॥ अपिच । गोचरे वा विलग्ने वा ये ग्रहारिष्टसूचका । पूजयेत् तान् प्रयत्नेन पूजिता स्यु' शुभावहा ॥ श्रीकाम' शान्तिकामो वा ग्रहयज्ञंसमाचरेत् । हष्टग्रायु पुष्टिकामो वा तथै वाऽभिचरन्नपीति ग्रहयागतत्त्वम् ॥ अस्य प्रयोगो महानिर्वाणे द्रष्टव्यः ॥

ग्रहयुद्धम् । न । ग्रहयोराये धने ॥ वियति चरतां ग्रहाणा मुपर्य्युपर्य्यात्ममार्गसंस्थान म् । अतिदूराद्दृग्विषये समतामिव सम्प्रयातानाम् ॥ आसन्नक्रमयोगाद्भेदोल्लेखांऽशुमर्द्दनासव्यै । युद्ध चतुष्प्रकारं पराशरोमुनिभि रुक्तम् ॥ भेदे वृष्टिविनाशो भेद. सुहृदां महाकुलानाञ्च । उल्लेखे शस्त्रभय मन्त्रिविरोध प्रियान्नत्वम् ॥ अंशुविरोधे युद्धानि भूभृतां शस्त्ररुक्क्षुदवमर्द्दा । युद्धे चाप्यपसव्ये भवन्ति युद्धानि भूपानाम् ॥ विशेषोवाराह्यां १७ अध्याये॥

ग्रहयुद्धभम् । न । ग्रहयुद्धर्क्षे । यस्मिन्नक्षे ग्रहयोर्युद्धजात तस्मिन् ॥

ग्रहराज । पु । रवौ ॥ चन्द्रे ॥ ग्रहाणां राजा । टच् ॥ गुरौ ॥

ग्रहवर्षफलाध्याय । पु । कस्य ग्रहस्यकस्मिन्वर्षे कीदृशानि शुभफलानि भवन्ति तन्निरूपणपरे ग्रन्थसन्धौ ॥ यतोवराहमिहिरेण पूर्वमेवप्रतिज्ञातमासीत् । वर्षेयग्रस्यफलमासेचमुनिप्रणीतमालोक्य । तद्वक्तैर्वक्ष्येहं होरातन्त्रोक्तविधानइति ॥ विशेषं पश्यवाराह्यां १९ अध्याये ॥

ग्रहवह्नि' । पु । ग्रहाणां होमाधिकरणे ॥ तेच नव सङ्ख्यका । यथा । कपिल पिङ्गलो धूम्र केतुस्तु जठराग्निक. । शिखीच हाटकश्चैव महातेजा हुताशन. । हुताशनस्तु विज्ञेयो नवैतेग्रहवह्नयइति ॥

ग्रहशृङ्गाटक । पु । वाराह्या २० अध्याये ॥

ग्रहसमागम । पु । वाराह्या १८अध्याये निरूपित ॥

ग्रहाधार । पु । ध्रुवर्क्षे ॥

ग्रहामय । पु । भूतादिभ्राजाते रोगे । आवेशे ॥

ग्रहाशी । पु । ग्रहनाशवृक्षे ॥

ग्रहाह्वय । पु । भूताङ्कुशद्रुमे ॥

ग्रहीता । त्रि । गृहयालौ । ग्रहणकर्त्तरि ॥ गृह्णाति । ग्रह० । तृन् ॥

ग्राम । पु । सवसथे । विप्रादिवर्णमाये प्राकारपरिखादिरहिते हट्टादिशून्ये बहुजनवासस्थाने ॥ विप्राश्च विप्रभृत्याश्च यत्रचैव वसन्तिहि । स तु ग्राम इति प्रोक्त. शूद्राणां वास एव वा ॥ तथा शूद्रजनप्राया सुसमृद्ध-कृषीवला । क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसञ्ज्ञिका ॥ शब्दादिपूर्वको ग्राम: समूहार्थे । यथा । शब्दग्राम भूतग्राम. । इत्यादि. ॥ सपूर्व सयुगेस्मृत' ॥ स्वरविशेषे ॥ सप्त स्वरा स्त्रयो ग्रामा मूर्च्छना एकविंशति ॥ तेच षड्जग्रामो मध्यमग्राम पञ्चमग्रामश्चेति त्रय । ग्रामलक्षणा । यथा कुटुम्बिन सर्वेप्येकी भूता भवन्तिहि । तथा स्वराणां सन्दोहो ग्रामइत्यभिधीयते ॥ षड्ज ग्रामा भवेदादौ मध्यमग्राम एवच । गा-न्धारग्राम इत्येतन् ग्रामत्रयमुदाहृतम् ॥ तथा । नन्द्यावर्त्तो थजनंमत सुभद्रो ग्रामवा त्रय । षड्जमध्यमगान्धारास्त्रयाणांजन्महेतव ॥ ग्रसते ग्रसतेवा । ग्रसुअदने । ग्रसेरान्तेतिमन् आत्वञ्च ॥

ग्रामकूट । पु । शूद्रविशेषे । मकरस्के । महता इतिभाषा ॥

ग्रामगृह्या । स्त्री । ग्र मगृहेभ्भ्रतसेनाय.म् ॥ पदाम्वै.रग्राह्यापक्षेषु,चेति क्यप् ॥

ग्रामज.मध्य.र्वी । स्त्री । मखनिष्याव्याम् ॥

ग्रामणी । पु । नापिते ॥ पत्यौ ॥ त्रि । प्रधाने ॥ ग्रामाधिपतौ ॥ भोगिके ॥ स्त्री । वेश्यायाम् ॥ ग्रामेयायाम् ॥ नीलिकायाम् ॥ ग्रामनयति । णी ञ् ० । सत्सूद्विषद्रुह्यादिनाक्विप् । अग्रग्रामाभ्यामितिणत्वम् ॥

ग्रामतक्ष । पु । बहूनां साधारणो काष्ठतक्षि ग्रामाधीने वर्द्धकौ ॥ ग्रामस्यतक्षा । ग्रामकौट.भ्यातक्ष्णइति टच् ॥

ग्रामता । स्त्री । ग्रामसमूहे ॥ ग्रामाणांसमूह. । ग्रामजनबन्धुभ्यस्तल् ॥

ग्रामधर्म्म । पु । व्यवाये॥ ग्रामेभव । युवादित्वादण् । मदाखौ धर्मश्च॥

ग्रामभृत । पु । ग्रामप्रेष्ये ॥ विप्रश्चेत् सपञ्चमा । ह्रणा ॥

ग्राममद्गुरिका । स्त्री । ग्रामयुद्धे ॥ मृ द्वीभाषे ॥

ग्राममुख । पु । हट्टे ॥

ग्राममृग । पु । कुक्कुरे ॥

ग्रामयाजक । पु । अब्राह्मणविशेषे । ग्रामस्थनानावर्णानां पुरोहिते ॥ ग्रामार्थं यज्वनि॥ इतिश्रीधरस्वामी ॥

ग्रामयाजी । पु । बहूनांयाजके ॥

ग्रामहासक । पु । भगिनीपतौ ॥

ग्रामाधानम् । न । मृगयायाम् ॥

ग्रामाधीन । त्रि। ग्रामवशवर्त्तिनि नापितवर्द्धक्यादौ ॥ ग्रामेऽधि । सप्तमीतिसमास । अद्वयमेतिख ॥

ग्रामान्तम् । न । उपशल्ये । ग्रामसन्निकटे ॥ ग्रामस्यान्तम् समीपम् ॥

ग्रामिणी । स्त्री । नीलीवृक्षे ॥

ग्रामी । त्रि । ग्रामविशिष्टे । ग्रासन इति भाषा ॥ यथा । अडीश्ववाल हरीलवाल इत्यादि ॥

ग्रामीण । पु । ग्राम्यशूकरे॥ कुक्कुरे ॥ काके ॥ त्रि । ग्रामोद्भूते ॥ ग्रामेभव, । खञ् ॥

ग्रामीणा । स्त्री । नीलिकौषधौ ॥ पा लङ्कशाके ॥ ग्रामेभवा । ग्रामाद्यख आवितिखञ् । टाप् ॥

ग्रामेयक । पु । ग्राम्ये ॥ ग्रामेभव । कत्र्यादित्वात्ढकञ् ॥

ग्रामेया । स्त्री । ग्राम्यनार्याम् ॥

ग्रामेश । पु । ग्रामस्याधीशे । ग्रामेश्वरे॥

ग्राम्यम् । न । स्त्रीकरणे । रतबन्धे ॥ त्रि । प्राकृते । मूढे । ग्रामभवे । ग्रामीणे ॥ इन्द्रालिकन्याघटतौलिचापा ग्राम्या निशायां वृषमेषकौच ॥ अश्लीले । भण्डादिवचने ॥ छागादिषु ॥ छागमेषवृषाश्वाद्या ग्राम्या प्रोक्ता महर्षिभि । ग्राम्या वातहरा सर्वं दीपना कफपित्तलाः॥ मधुरा रसपाकाभ्या वृष्या बलवर्द्धना ॥ ग्रामेभव । ग्रामाद्यखञा वितिशैषिकोय ॥

ग्राम्यकन्द । पु । स्थलकन्दे । वनकोल इति भाषा ॥ ग्राम्यकन्दसुदोषल ॥

ग्राम्यकर्क्कटी । स्त्री । कुष्माण्डे ॥

ग्राम्यकुङ्कुमम् । न । कुसुम्भे ॥

ग्राम्यधर्म्म । पुं । ग्रामधर्मे । मैथुने ॥ ग्रामेभवा ग्राम्या छालिकशाकटिकप्रभृतय । तेषाधर्म ॥

ग्राम्यपशु । पु । ग्रामजातजन्तौ॥ सत सप्तविधो यथा । गौ मेषो ऽजो

मनुष्यस्य अश्वाश्वतरगर्द्दभाः। इति॥

ग्राम्यमद्गुरिका । स्त्री । मृङ्गीमत्स्ये ॥

ग्राम्यमृग । पु । कुक्कुरे ॥

ग्राम्यराशि. । पु । मिथुनकन्यातुलावृश्चिक धनुष्कुम्भेषु ॥ रात्रौ मेषवृषयो' ॥

ग्राम्यवल्लभा । स्त्री । पालङ्क्यशाके ॥

ग्राम्यशूकर. । पु । ग्रामोत्पन्नवराहे । विड्वराहे ॥

ग्राम्या । स्त्री । तुलस्याम्॥ नखनिष्पाविकायाम्॥ नील्याम्॥ वृत्त्यनुप्रासघटकवृत्तिभेदेषु कोमलापर्याये॥

ग्राम्याश्व । पु गर्द्दभे ॥

ग्रावा । पु । प्रस्तरे ॥ पृथ्वीधरे । पर्वते ॥ ग्रसते । ग्रसुअदने । अन्येभ्योपीति ड । आवनति । वनसम्भक्तौ शब्दे वा । विच् । ग्रस्यासावावाच ॥ ग्रसते । अन्ये॰ वनिप् । पृ॰ वा ॥ यद्वा । गिरति गृणाति वा । गृनिगरणेशब्दे वा । अन्येभ्योपीति वनिप् । पृ॰ ॥ यद्वा । गरति । गृसेके । मू॰ क' । अवति । अवरक्षणादौ । बाहुलका त्कनि । ग्रश्चासावावाच ॥ मेघ ॥ इतिविश्व ॥ त्रि । दृढे ॥ इति शब्दरत्नावली ॥

ग्रावस्तुत् । पु । ऋत्विग्विशेषे ॥ आज भासे.तक्किप् ॥

ग्रासः । पु । कवले । पिण्ड । मुखपूरणमात्रादौ ॥ यथा । कुक्कटाण्डप्रमाणस्ययावान्वा प्रविशेन्मुखम् । एतं ग्रास विजानीयात् शुद्ध्यर्थं कायशोधनम् ॥ इति प्रायश्चित्तेपराशर. ॥ ग्रस्यते । ग्रसु॰। अकर्त्तरीतिघञ् ॥

ग्राह । पु । गाह इति भाषा प्रसिद्धे जलजन्तुविशेषे । अवहारे ॥ ग्रहणे ॥ गृह्णाति । ग्रह॰। विभाषाग्रहइति व्यवस्थितविभाषया जलचरे नित्यमेव णः प्रत्यय । स्वार्थग्रहणादच् घञ्वा ॥ शिशुके ॥

ग्राहक' । पु । व्याधानांघातिपक्षिणि । श्येने ॥ सितावरशाके ॥ विषवैद्ये ॥ त्रि । गाहक इति भाषाप्रसिद्धे ग्रहीतरि ॥ धान्यानांग्रहीतरि ॥ गृह्णाति । ग्रहउपादाने । ण्वुल् ॥

ग्राहयिता । त्रि। ग्रहणकारयितरि ॥

ग्राहिणी । स्त्री । क्षुद्रदुरालभायाम्॥ क्षिरइति इतिगौडभाषाप्रसिद्धे तास्रमूलावृक्षे ॥

ग्राहित । त्रि । ग्रहणं प्रापिते । ग्रहणा कराया इतिभाषा ॥

ग्राही । पु । कपित्थे ॥ त्रि । ग्रहणकर्त्तरि । ग्राहके ॥ मलवद्धके । धारके ॥ गृह्णाति । ग्रह॰। ग्रह्यादिभ्या णिनिः ॥

ग्रीष्मफलः । पुं । कपित्थागमे ॥

ग्राह्यः । त्रि । उपादेये । ग्रहीतुमुचिते ॥

ग्रीवा । स्त्री । कन्धरायाम् । शिरोधराधाम् ॥ तच्छिरायाम् ॥ गिरन्त्यनया गीर्यते ऽनयावा । ग्रेरयश्चजिह्वाग्रीवेतिसाधु ॥

ग्रीवी । पु । स्त्री । उष्ट्रे ॥ त्रि । प्रशस्तग्रीवायुक्ते ॥ अतिशयिता प्रशस्तावा ग्रीवा अस्यास्य । ग्रीवादिस्त्वादिनि ॥

ग्रीष्मः । पु । निदाघर्त्तौ । ज्येष्ठाषाढयो । उष्मागमे ॥ अचलातस्य फलं यथा । ग्रीष्मोद्भवो भोगभवानुरक्तो वक्ता सुशीलो जलकेलिशील । विशाधनैश्वर्ययशोमनोज्ञो धन्वी सुवेशः परदारचित्तइति ॥ त्रि । तद्वति ॥ ग्रसतेरसाम् । ग्रसु० । ग्रीष्मइत्युणादिरूपेचनिपातित' ॥

ग्रीष्मजा । स्त्री । नवल्याम् । नेवाली इति गौडप्रसिद्धे फलरूपे ॥ ग्रीष्मे जायते । जनी० । ड ॥ नवमाल्याम् ॥

ग्रीष्मपुष्पी । स्त्री । करुणीपुष्पवृक्षे ॥

ग्रीष्मभवा । स्त्री । नवमल्लिकायाम् ॥ ग्रीष्मेभवोऽस्या. ॥

ग्रीष्मसुन्दरः । पु । } गीमाइति
ग्रीष्मसुन्दरक । पु । } गौडप्रसिद्धे शाकविशेषे ॥

ग्रीष्महासम् । न । वृक्षतूले । वृद्धवृक्षके । बुढियाकाढल इति भाषा ॥

ग्रीष्मी । स्त्री । } नवमल्लिकायाम् ॥
ग्रीष्मोद्भवा । स्त्री । }

ग्रैवम् । न । ग्रीवाभरणे ॥ ग्रीवायांभवम् ॥ त्रि । तत्स्थे ॥

ग्रैवेयम् । न । कण्ठभूषणे ॥ ग्रीवायांभवम् । ग्रीवाभ्योण्चेतिढञ् ॥

ग्रैवेयकम् । न । कण्ठभूषायाम् ॥ ग्रीवायांभवम् । कुलकुक्षिग्रीवाभ्यःश्वास्यलङ्कारेष्वितिढकञ् ॥

ग्रैष्मिक. । पुं । ग्रीष्मसहचरितोग्रन्थो ग्रीष्म' । तमधीतेवेदवा । वसन्तादिभ्यष्ठक् ॥

ग्रैष्मी । स्त्री । नवमल्लिकायाम् ॥ ग्रीष्मजायाम् ॥ ग्रीष्मेजातादिः । सन्धिवेलाद्यृतुनक्षत्रेभ्योण् । ङीप् ॥

ग्लपित । त्रि । कर्शिते ॥

ग्लस्त । त्रि । भक्षिते ॥ ग्लस्यतेस्म । ग्लसुअदने । क्त ॥

ग्लह । पु । पणे । द्यूते लाभस्थाने । द्यूतादौजय्यत्वेनस्थापिते ॥ ग्लह्यते ऽनेन वा । ग्लहआदाने । पुसीतिघ. । हलश्चेतिघञ्वा । सज्ञापूर्वकत्वान्नवृद्धि ॥ गृह्यते इतिवा ग्लह । अक्षेषुग्लहइति देवनविषये-पणरूपेऽर्थेग्रहोवलत्वं निपातनंवा ॥

ग्लाता । चि । ग्लानियुक्ते ॥

ग्लान । त्रि । रोगात्क्षीणकाये । ग्लाक्ते ॥ रोगिणि ॥ ग्लायतिस्म । ग्लैहर्षक्षये । गत्यर्थेति क्तः । संयोगादेरितिनत्वम् ॥

ग्लानि । स्त्री । अस्वाच्छन्द्ये । बलहीनतायाम् ॥ रोगे ॥ हानौ ॥ अनुत्साहे ॥ ग्लानम् । ग्लै० । ग्लाज्याहाभ्योनि' ॥

ग्लानिच्छेदी । चि । खेदहारिणि ॥

ग्लावः । पुं । मैथेये । वकाख्यषौ । चैकितायने ॥

ग्लास्नु । त्रि । ग्लाने । रोगक्षीणदेहे ॥ ग्लानशील । ग्लाजिस्थश्चग्स्नु. ॥

ग्लेपनम् । न । दैन्ये ॥ ग्लेपृदैन्ये । ल्युट् ॥

ग्लौ' । पु । मृगाङ्के । चन्द्रमसि ॥ कर्पूरे ॥ ग्लायति । ग्लै० । ग्लानुदिभ्यांडौ ॥

---

## घ

घ' । पुं । घकारे ॥ घण्टायाम् ॥ घर्घरशब्दे ॥ इतिमेदिनिकर ॥

घट' । पुं । समाधिभेदे । कुम्भके ॥ इभशिरः कूटे ॥ कुटे । पृथुबुध्नोदराकारे । कम्बुग्रीवादिमदाकारादिरूपे । कलसे ॥ कुम्भराशौ ॥ द्रोणपरिमाणे ॥ घटते । घटचेष्टायाम् । पचाद्यच् ॥

घटक. । पु । वनस्पतौ ॥ योजके । व्यवहारे ॥ तल्लक्षणं यथा । धावको भावक श्चैव योजक श्चांशक स्तथा । दूषक स्तावक श्चैव षडेते घटका. स्मृताः ॥ अन्यच्च' । के नो विदन्ति पुरुषा. पुरुषानुपूर्वीमुर्वीतले कुलभृतांपरिवर्त्तनं वा । अत्यन्तसूक्ष्ममपि येकुलतारतम्यं जानन्तितेपि घटका नतु योजकाद्या. ॥ इत्याधुनिकैर्गौडदेशोद्भवै कल्पिता कुलदीपिका ॥ ह्रस्वघटे ॥ घटयति । ण्यन्तात् घटेर्ण्वुल् ॥

घटजन्मा । पु । अगस्त्यमुनौ ॥

घटदासी । स्त्री । कुट्टन्याम् । रततास्याम् ॥

घटनम । न । निर्माणे । घडना इति भाषा ॥ घटेर्ल्युट् ॥

घटना । स्त्री । हस्तिसङ्घे ॥ करिणांघटना घटा ॥ मेलने । योजनायाम् ॥ यथा । अघटनघटनापटीयसी मायेति ॥ घटनम् । घटसङ्घाते । चु० । ण्यासश्रन्थोयुच् । टाप् ॥

घटयोनि. । पुं । अगस्त्यमुनौ ॥

घटराज । पुं । कुम्भे ॥

घटा । स्त्री । घटने ॥ गजसंहतौ । घटनायाम् ॥ गोष्ठयाम् ॥ समूहे ॥ घटनम् । घट० । घटादय षित इतिषित्त्वादङ् ॥

घटाबाबु । स्त्री । कुम्भतुम्ब्याम् ॥

घटिक' । पु । चक्रिके । घटिकावादके ॥ घटीकायति । कै० । आतइतिक । क्याप्येरितिह्रस्व ॥ न । नितम्बे ॥ षि । घटेनतरणशीले ॥ घटेनतरति । नौद्व्यचष्ठन् ॥

घटिका । स्त्री । घटी इति भाषाप्रसिद्धे दण्डे । नाडिकायाम् ॥ घटिकाज्ञानोपायो यथा । निमेषो मानुषो योयं मात्रामात्रप्रमाणक । तैः पञ्चदशभि काष्ठा त्रिंशत्काष्ठास्तथाकला ॥ नाडिकातु प्रमाणेनकला दशचपञ्चच । उन्मानेनाम्भस सा तु पलान्यर्द्धत्रयोदश ॥ हेममाषै कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलै । मागधेन प्रमाणेन जलप्रस्थस्तुसम्भृत ॥ इतिविष्णुपुराणम् ॥ नैमित्तिकलयप्रपञ्चयिष्यन् निमेषादिक्रमेण प्रथमांशोक्तमेवकल्पप्रमाण मनुस्मारयति निमेषइति सप्तभि । मात्रैव मात्रं प्रमाणं यस्य । एकमात्रलघ्वक्षरोच्चारणकालसम्मितोहि निमेष । निमेषकालतुल्याहि मात्रा लघ्वक्षरञ्च यत इतिब्रह्माण्डोक्तेः ॥ नाडिकाज्ञानोपायमाह । उन्मानेनेति सार्द्धेन । अम्भस उन्मानेन उन्मीयते ऽनेनेत्युन्मान पात्रम् । अर्द्धेनयोगे त्रयोदश सार्द्धद्वादशेत्यर्थ । उन्मानरूपेण घटितानि सार्द्धद्वादशपलानि सानाडिका । सार्द्धद्वादशपलताम्रनिर्मितपात्रेण सानाडिकाज्ञातव्येत्यर्थ. । किंप्रमाणंतत्पात्रं कार्यं तदाह । मागधेन प्रमाणेन जलप्रस्थस्तुसम्भृत इति । सार्द्धद्वादशपलजलेनहि मागधदेशप्रस्थः पूर्यते । तत् प्रमाणपात्रं कार्यमित्यर्थात् सिद्धम् । ननु तथापि पात्रेण कथ नाडिकाज्ञानं क्रियापरिच्छेद्यत्वात् कालस्य तत्राह च क्रियासिद्धये प्रस्थादि विशिनष्टि । हेमेति । माष पञ्चगुञ्ज । हेम्नो माषै चतुर्भि श्चतुरङ्गुलेन शलाकारूपेण रचितै कृतच्छिद्रा । एतदुक्तं भवति । सार्द्धद्वादशपलताम्रमयं मागधप्रस्थसम्मित मूलायत पात्र चतुर्माषपरिमितचतुरङ्गुलहेमशलाकया कृताधश्छिद्र जलेस्थापितं तेन छिद्रेण यावता कालेन पूर्यते तावान् कालोनाडिकेति । तथाचमुक्त । द्वादशार्द्धप

लोन्मानं चतुर्भिश्चतुरङ्गुलैः । स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलप्लुतमिति । इतिसट्टीकायांश्रीधरस्वामिनः ॥ गुर्वक्षराणां षष्ट्या पलानां घटिका किलैकेति कालिदासः ॥ मुहूर्त्ते ॥ अल्पे घटे ॥ घट्येव । स्वार्थे क ॥

घटितः । त्रि । निर्म्मिते ॥

घटी । स्त्री । घटिकायाम् । दण्डे । घडी इतिभाषा ॥ यथा । अलभ्यं यदायुःपलं स्वर्णभारै रहो यस्य दण्डो वृथा याति याकः । इदानीमपि श्रीश्वरे भक्त चेतो विलम्बस्य खं घोषयन्तीघटीयमिति ॥ स्वल्पे कुम्भे । घडिया इतिभाषा ॥ घटते । घट० । अच् । जातित्वात् ङीष् ॥

घटीकारः । पुं । कुलाले ॥ घटीं करोति । कृञ्‌कर्मण्यण् ॥

घटीयन्त्रम् । न । अरघट्टे । कूपादेर्जलोद्धारयन्त्रे । उद्घाटने ॥ घटीनांयन्त्रम् ॥ ग्रहणीरोगभेदे ॥ यथा । प्रसुप्तिः पार्श्वयोः शूलं तथा जलघटीध्वनिः । तवदन्ति घटीयन्त्रमसाध्यं ग्राहणीगदमिति ॥

घटोत्कचः । पुं । हिडम्बायां भीमसेनाज्जाते राक्षसविशेषे ॥



घटोत्कचान्तक । पुं । कर्णे । राधेये । युधिष्ठिराग्रजे ॥

घटोद्भवः । पुं । अगस्त्यमुनौ ।

घट्ट । पुं । नद्यादौ स्नानार्थं अवतरणस्थाने । घाट इति भाषा । तीर्थावतारे ॥ शुल्कग्रहस्थाने । जगात इति भाषा ॥ घट्यतेऽत्र । घट्टचलने । हलश्चेतिघञ् ॥

घट्टगा । स्त्री । नदीविशेषे ॥ यथा । मलापहा भीमरथीच घट्टगा यथा च कृष्णा जलसाम्यता गुणौ । मलापहाघट्टपयस्तथापि पथ्य लघु स्वादुतर सुकान्तिदम् ॥ इति राजनिघण्टः ॥

घट्टजीवा । पुं । पाटुनि इतिगौडभाषाप्रसिद्धे वैश्यायां रजका ज्जाते वर्णसङ्करजातिविशेषे ॥

घट्टनम् । न । अभिघाते ॥

घट्टना । स्त्री । चलनायाम् ॥ वृत्तौ ॥

घट्टितः । त्रि । निर्मिते । घष्टागमा इति भाषा ॥ चित्रपटार्थं रञ्जनायाश्रेन घृष्टे वस्त्रादौ ॥

घण्टः । पुं । व्यञ्जनविशेषे ॥

घण्टकः । पुं । } घेंटकोल इति
घण्टकर्णः । पुं । } गौडभाषाप्रसिद्धे क्षुपविशेषे ॥

घण्टा । स्त्री । कांस्यनिर्मिते वाद्यवि

शेषे। यथा। सर्ववाद्यर्थी घण्टां वा द्याभावे नियोजयेदिति॥ अतिबला याम्॥ नागबलायाम्॥ घण्टापाट लौ॥ अहानि। वाहुलकाद्दन्तेष्टौ घश्चान्त्य। टाप्॥

घण्टाकर्ण। पु। शिवस्यातिवल्लभे ग णविशेषे॥

घण्टाताड। पु। घडियावली घण्टा पाँडे इतिच भाषाप्रसिद्धे घण्टावा- दिनि॥

घण्टानाद। पु। कुवेरमन्त्रिणि॥

घण्टापथ। पु। पुरप्रधानमार्गे। मह तिराजमार्गे। संसरणे॥ यथा। दश धन्वन्तरो राजमार्गो घण्टापथ स्मृत॥ घण्टोपलक्षित पन्थाः। शाकपा र्थिवादि॥ यद्वा। घण्टानां पन्थाः। घण्टाशब्दा वादित्राणां तद्वतां ह- स्त्यादीनां वोपलक्षणम्। ऋक्पू- रित्यः॥

घण्टापाटलि। पु। गोलीढे। मुष्क कद्रुमे॥ अहानि इति घण्टा। प टनम्। पटगतौ। घञ्। पाटं लाति। ला०। वाहुलकाट्डि। घण्टाचा सौ पाटलिश्च॥

घाण्टारवा। स्त्री। दृश्यविशेषे। शणपु ष्पिकायाम्। वनसण इति भाषाभा नियां इतिच भाषा॥ घण्टेव आरौ ति। रुशब्दे। अच्॥

घण्टाली। स्त्री। कोशातक्याम्॥

घण्टाबीजम्। न। जयपाले॥

घण्टाशब्दम्। न। कांस्ये॥ इतिहेम चन्द्रः॥

घण्टिक। पु। घरियाराख्ये यादोवि शेषे॥

घण्टिका। स्त्री। तालूर्ध्वहस्वजिह्वा याम्। लम्बिकायाम्॥

घण्टिनीबीजम्। न। जयपाले॥

घण्टु। पुं। गजघण्टायाम्॥ प्रतापे॥

घण्टेश्वर। पु। मङ्गलपुत्रे अष्टादशरि देवताविशेषे॥

घतन। पु। मारके॥ हन्ति। हन०। हन्तेर्घुआद्यन्तयोर्घश्चतश्च॥

घन। पु। मुस्तायाम्॥ अब्दे। मेघे॥ ओघे॥ दार्ढ्ये। काठिन्ये॥ मूर्त्ति गुणः काठिन्यम्। असर्वगतद्रव्यपरि माणं मूर्त्तिः। सैवगुण॥ विस्तारे॥ लोहमुद्गरे॥ हन्यते ऽनेनवा॥ शरीरे॥ कफे॥ अभ्रके॥ सजाती याङ्कत्रयस्यपूरणे॥ समत्रिघातश्च घन प्रदिष्टइति भास्कराचार्योक्ते॥ न। कांस्यतालादिवाद्ये॥ मध्यमनृत्ये॥ त्वच्यद्वृत्त्युपलक्षणगातवाद्ययो.॥ त्व चे॥ लोहे॥ वि। निविडे। सान्द्रे॥ नि रन्तरे। पूर्णे॥ दृढे॥ हननम्। हन्य

तेवायुभावा । घन० ॥ मूर्त्तौ घन इति घनेरप्घनादेशश्च ॥

घनकफ'। पु । वर्षोपले। करकायाम् ॥ घनस्य कफइव ॥

घनकाल । पु । वर्षाकाले ॥ घनस्य मेघस्य काल ॥

घनगोलक'। पु । संश्लिष्टरजतसुवर्णे ।सोनारूपामिला इतिभाषा । इति हेमचन्द्र' ॥

घनच्छद: । पु । शिग्रौ ॥

घनजम्बाल: । पुं । चुलुके ॥

घनज्वाला।स्त्री। मेघदीप्तौ।वज्राग्नौ॥

घनताल'। पुं । सारङ्गविहगे ॥

घनतोल । पु । चातकपक्षिणि ॥

घनत्वम् । न । सान्द्रतायाम् ॥

घनत्वक् । पु । लोध्रे ॥

घनद्रुम । पुं । विकण्टकवृक्षे ॥

घननाभि: । पु । धूमे ॥

घनपत्र: । पुं । पुनर्नवायाम् ॥

घनपदवी । स्त्री । आकाशे ॥

घनपल्लव: । पुं । शोभाञ्जने ॥

घनपाषण्ड. । पु । मयूरे ॥

घनप्रज्ञ' । पु । प्राज्ञे । विशेष विज्ञान विरञ्चिनि ॥ घनीभूताप्रज्ञायस्य ॥

घनफल: । पुं । विकण्टकवृक्षे ॥

घनमूल: । पुं । मोरटे ॥ न । पूरित सजातीयाङ्कत्रयस्याद्यङ्के ॥

घनरस: । पु । न । मेघपुष्पे । जले ॥ पु । सान्द्रे ॥ निर्यासे ॥ मोरटे ॥ कर्पूरे ॥ पीलुपर्ण्याम् ॥ सम्यक्सिद्ध रसे ॥

घनवर्त्म । न । आकाशे ॥

घनवल्लिका । स्त्री । विद्युति ॥

घनवल्ली । स्त्री । अमृतस्रवालतायाम्॥

घनवात' । पु । नरकविशेषे ॥

घनवास' । पुं । कुष्माण्डे ॥

घनवाहन. । पु । शिवे ॥ मेघवाहने । इन्द्रे ॥ घनो वाहन मस्य ॥

घनवीथि: । स्त्री । अन्तरीक्षे ॥

घनश्याम. । पु । श्रीरामे ॥ श्रीकृष्णे ॥ त्रि । निविडकृष्णवर्णे ॥

घनसार' । पु । कर्पूरे ॥ दक्षिणावर्त्त पारदे ॥ वृक्षविशेषे ॥ जले ॥ वर वारिदे ॥ घनो दृढ: सारो ऽस्य ॥ घनस्य सारइव वा शीतत्वात् ॥

घनसूची । स्त्री । सूच्याकारमेघे ॥

घनस्कन्ध: । पु । कोशाम्रवृक्षे ॥

घनस्वन. । पुं । तण्डुलीयशाके ॥ मेघध्वनौ ॥

घना । स्त्री । माषपर्ण्याम् ॥ रुद्रजटायाम् ॥ इतिराजनिर्घण्ट ॥

घनाकर । पु,। वर्षाकाले ॥ घनानामाकर इव ॥

घनाघन. । पु । वर्षुकाब्दे ॥ मत्तघा

तुकङ्कुञ्जरे ॥ चक्रे ॥ वासवे । इन्द्रे ॥ अन्योन्यघट्टने ॥ त्रि । निरन्तरे ॥ घातुके ॥ हन्ति । हन० । हन्तेर्घत्व च्चेति पचाद्यचिद्वित्वम् आकृत्वा-भ्यासस्य ॥

घनाघना । स्त्री । काकमाच्याम् ॥

घनात्यय' । पु । शरत्काले ॥

घनामय: । पुं । खर्जूरागमे ॥

घनामल: । पु । शाकवीरे ॥ पुनर्नवायाम् ॥

घनाश्रय । पु । आकाशे ॥

घनोदधि: । पुं । नरकविशेषे ॥

घनोपल: । पु । करकायाम् ॥

घर । पु । गृहे । गेहे ॥ हन्तिहन्यते गम्यते ऽतिथिभिर्वा । हन० । हन्ते रन्घचेतिरन् घादेशो नलोपश्चेति दशपादीवृत्तिकृत् ॥

घरट्ट, । पु । घराट इतिपर्वतीयजन प्रसिद्धायां पेषण्याम् । जाँता चक्की इतिचदेशभाषा ॥

घर्घट' । पु । चिकटमत्स्ये । च्याङ्गरा इतिगौड भाषाप्रसिद्धे ॥

घर्घर. । पु । चञ्चद्वारिध्वनौ ॥ घाघरा इतिप्रसिद्धे नदविशेषे ॥ घूके ॥ द्वारे ॥ स्वरविशेषे ॥

घर्घरक, । पु । घर्घरेनदे ॥ यथा । शोश घर्घरके शैवलु क्वचिद सम्नाय-शोषापहं पथ्यं द.क्षकारं तथाचवलद् चीणाङ्गवृद्धिप्रदमितिराजनिर्घण्ट ॥

घर्घरा । स्त्री । क्षुद्रघण्टिकायाम् ॥ वीणाप्रभेदे ॥ स्वरविशेषे ॥

घर्घरिका । स्त्री । क्षुद्रघण्टायाम् ॥ वादित्रदण्डे ॥ भृष्टधान्ये ॥ नदीविशेषे ॥ वाद्यप्रभेदे ॥

घर्घरी । स्त्री । क्षुद्रघण्टिकायाम् ॥

घर्घुर्घा । स्त्री । घुर्घुरे । घुरघुरिया इतिगौड प्रसिद्धे कीटे ॥

घर्म्म । पु । निदाघे । स्वेदे । अमवारिणि । पसीना इति भाषा ॥ आतपे ॥ ग्रीष्मे ॥ उष्मणि ॥ जिघर्त्त्यं-ङ्गमनेन । घृचरणदीप्त्यो । घरन्त्य ङ्ग मनेनवा । घसेके । घर्मइति घ धातोर्मग्गुणश्चनिपात्यते ॥

घर्म्मवारयाम् । न । क्वचे ॥

घर्म्मचर्चिका । स्त्री । घर्मचर्च्याम् । घमाची अमौरी घमौरी अलाई इत्यादि भाषा ॥ स्वेदवाहीनिदुष्य न्ति क्रोधशोकभये स्तथा । तत स्वेद प्रवर्त्तेत दौर्गन्ध्य घर्मचर्चिका ॥ राजिकाकृति कण्डोत्था यतोघर्मचिचर्चिका ॥

घर्म्मान्त । पु । वर्षाकाले ॥

घर्म्मान्तकामुकी । स्त्री । वकाकायाम् ॥

घर्म्मित । त्रि । सञ्जातघर्म्मो ॥ तारका

ङिस्वादित्वच् ॥

घर्ष । पु । विमर्द्दे । घसना इतिभाषा ॥

घर्षणम् । न । घर्षे । निघर्षे । घस्रना इतिभाषा ॥ घृषुसङ्घर्षे । ल्युट् ॥

घर्षणाल । पु । पेषणाश्मनि । शिलापुत्रे । लोढा वट्टा रगणा इत्यादि भाषा ॥

घर्षणी । स्त्री । हरिद्रायाम् ॥

घसि । पु । आहारे ॥

घस्मर । पु । अस्मरे । भक्षके ॥ घसति तच्छील । घस्लृअदने । सृघस्यद क्मरच् ॥

घस्र. । पु । अहनि । दिवसे ॥ घसत्यन्धकारम् । घस्लृ० । स्फायितञ्चीति रक् ॥ न । कुङ्कुमे ॥ त्रि । हिंस्रे ॥

घा । स्त्री । काञ्च्याम् ॥ घाते ॥

घाट । पुं । अवटौ । ग्रीवापश्चाद्भागे । घाटायाम् ॥ घाटेरच् घञ्वा ॥ घाटाऽस्त्यऽस्ति वा । अर्शआद्यच् ॥

घाटा । स्त्री । घाटे । कृकाटिकायाम् । शिरस पश्चात् सन्धौ ॥ घाटयति । घाट्यते वा । घटसङ्घाते । चु० । अच् घञ्वा ॥

घाटिका । स्त्री । घाटायाम् ॥ घाटैव ॥

घाण्टिक । पु । चाक्रिके । मिलितानां राजस्तावकानां संघेयम् । बहुभिर्मिलित्वास्तुतिपाठके ॥ घण्टया चरति । चरतीतिठक ॥ अन्यन्नतु । राज्ञ. प्रबोधसमये घण्टाशिल्पास्तु घाण्टिका. ॥ धुस्तूरवृक्षे ॥ त्रि । घण्टावादिनि ॥

घात' । पु । काण्डे । वाणे ॥ प्रहारे ॥ मारणे ॥ अङ्कपूरणे ॥ यथा । स मन्निघातस्त्वघन प्रदिष्ट ॥ हननम् । हन० । घञ् । हनस्तोऽचिण्णलो । होहन्तेरितिकुत्वम् ॥

घातक । त्रि । वधकृति । हननकर्त्तरि ॥ वहूना मेककार्याणां सर्वेषां शस्त्रधारिणाम् । यद्येको घातकस्तत्र सर्वेते घातका. स्मृता ॥ हन्ति । हन० । ण्वुल् । हनस्तोऽचिण्णलो । होहन्तेरितिकुत्वम् ॥

घातनम् । न । हनने ॥ वधे ॥ यज्ञार्थंपशुवधे ॥ त्रि । वधकर्त्तरि ॥

घातवार । पु । राशिविशेषे विशेषवारे ॥ यथा । नक्रे भौमो गोहरिणी शुमन्द श्चन्द्रोद्वन्द्वेऽर्कोऽजभे च श्चकर्के । शुक्र कोदण्डाखिमीने पुकुम्भयूकेजीवो घातवारानशस्ता इति ॥

घाति. । स्त्री । पक्षिवन्धने ॥

घाती । त्रि । हननशीले ॥ घातयति हन्ति तच्छील' । णिनि. ॥

घातिपक्षी । पुं । श्येने ॥

घातुकः । त्रि । क्रूरे ॥ हिंस्रे ॥ हन्ति । हन० । लषपतपदेत्युकञ् ॥
घात्य । त्रि । हननयोग्ये ॥ यथा । तस्य भाव न विन्ति ब्यपनुदति य त कर्मनाश्यो घटादि मिथ्याभूत त्व कर्म क्षपयति न तथा विन्तिघात्स्य यत स्तत् । इत्य सिद्धे विभागे श्रुति शिखरगिरा विन्तिघात्यप्रतीतो बन्धो मिथ्येतिसिद्धे न तदपहतये कर्म जात समर्थ मिति ॥
घार. । पु । सेचने ॥ इतिहेमचन्द्र ॥
घारि । न । छन्दोविशेषे ॥ र विधाय खं निधाय । घारिनाम वृत्तमेषि ॥ यथा । रामराम रामराम । सारमे तदेव नाम ॥
घार्त्तिकः । पु । घृतपूरे ॥
घासः । पुं । यवसे । स्वनामाख्याते तृणे ॥ अद्यते गवादिभि । अद० । घञ् । घञपोश्चेति अदेर्घस्लृ ॥
घासि । पु । अग्नौ ॥ भक्ष्ये ॥ घसति । घस्लृ अदने । अनिघसिभ्यामिण् ॥
घु. । पु । ध्वनौ ॥ इतिजटाधर ॥
घुट । पु ।
घुटि । स्त्री । } पादग्रन्थौ । गुल्फे । टकुना इतिभाषा ॥
घुटिक । पु ।
घुटिका । स्त्री । गुल्फे । पादग्रन्थौ ॥ घोटतेऽनया । घुटिपरिवर्त्तने । कुन् । टाप् । इत्वम् ॥
घुटी । स्त्री । गुल्फे ॥ इतिद्विरूप ॥
घुण । पु । काष्ठकृमौ । काष्ठवेधके ॥ घोणते । घुणभ्रमणे । इगुपधेतिक ॥
घुणप्रिया । स्त्री । इन्त्याम् । उदुम्बरपर्ण्याम् ॥
घुणवल्लभा । स्त्री । अतिविषायाम् ॥ इतिभावप्रकाशः ॥
घुण्ट । पु ।
घुण्टक । पु । } गुल्फे । पादग्रन्थौ ॥
घुण्ड । पु । भृङ्गे ॥ घोणते । घुण । कादिभ्य कित्तिड. ॥
घुर्घुर. । पु । यमकीटे । घुर्घुरिया इतिगौडभाषा ॥ घूकारशब्दे ॥
घुर्घुरी । स्त्री । जलजन्तुविशेषे । स्त्रिकारायाम् ॥
घुलञ्च । पुं । गवेधुकायाम् ॥
घुलघुलारव । पु । पारावतप्रभेदे ॥
घुषित । त्रि । शब्दिते ॥ शब्देन प्रकटीकृताभिप्राये वाक्ये ॥ घुषिर्‌वि शब्दने । क्त ॥
घुष्ट. । त्रि । शब्दिते ॥ घुष्यतेस्म । घुषिर्० । क्त ॥
घुष्टान्नम् । न । कोभोक्तेत्युद्घुष्य स्वादौ दीयमानेऽन्ने ॥
घुसृणम् । न । कुङ्कुमे ॥
घूक. । पु । कौशिके । उलूके ॥

घूकारि । पु । वायसे । काके ॥
घूकावास । पु । शाखोटद्रुमे ॥
घूर्ण । पु । शीषसुन्दरके । गुमा इति प्रसिद्धे ॥
घूर्णनम् । न । चक्रावर्त्ते । भ्रमणे ॥
घूर्णायमान । त्रि । भ्राम्यमाणे ॥ घूर्णायमानेचक्षेतियथा ॥
घूर्णि । स्त्री । घूर्णने ॥
घूर्णित । त्रि । प्रचलायिते । भ्रमिते । य उपविष्टो निद्रया घूर्णते तस्मिन् ॥ घूर्णतेस्म । घूर्णभ्रमणे । गत्यर्थेति क्त ॥ घूर्णासञ्जातास्यवा । तारकादित्वादितच् ॥ कम्पिते ॥
घूर्णमान । त्रि । भ्राम्यमाणे ॥ वायुनाघूर्णमानोवृक्ष ॥
घृणा । स्त्री । जुगुप्सायाम् । जुगुप्सायाम् ॥ करुणायाम् । कृपायाम् ॥ घ्रियन्तेऽनया । घृसेचने । बाहुलकान नक् । टाप् ॥ घर्षणम् । घृणुदीप्तौ । भिदादयङ्वा ॥
घृणावास । पु । कुष्माण्डे ॥ त्रि । घृणायुते ॥
घृणि । पु । किरणे । अंशौ ॥ ज्वालायाम् ॥ तरङ्गे ॥ सूर्ये ॥ घरति । घृ० । जिघर्त्तिवा । घृत्तरणदीप्त्योः । घृणिपृश्नीतिनिप्रत्ययो गुणाभावश्चनिपातित ॥

घृतम् । त्रि । प्रदीप्ते ॥ न । जले ॥ आज्ये । पक्वनवनीते । सर्पिषि ॥ अस्यगुणा ॥ घृत रसायन स्वादु चक्षुष्यंवह्निदीपनम् । शीतवीर्यं विषालक्ष्मीपापपित्तानिलापहम् ॥ अल्पाभिष्यन्दि कान्त्योजस्तेजोलावण्यवृद्धिकृत् । स्वरस्मृतिकरं मेध्यमायुष्यं बलकृद्गुरु ॥ उदावर्त्तज्वरोन्मादशूलानाहव्रणान् हरेत् । स्निग्धं कफकरं रक्षःक्षयवीसर्परक्तनुत् ॥ * ॥ गव्य घृत विशेषेण चक्षुष्य वृष्य मग्निकृत् । स्वादुपाकरस शीत वातपित्तकफापहम ॥ मेधालावण्यकान्त्योजस्तेजोवृद्धिकरं परम् । अलक्ष्मीपापरक्षोघ्न वयस स्थापक गुरु ॥ बल्य पवित्र मायुष्य सुमङ्गल्य रसायनम् । सुगन्ध रोचन चारु सर्वाज्येषु गुणाधिकम् ॥ * ॥ माहिषन्तु घृतं स्वादु पित्तरक्तानिलापहम् । शीतल श्लेष्मल वृष्य गुरु स्वादुविपच्यते ॥ * ॥ आज माज्य करोत्यग्नि चक्षुष्य बलवर्द्धनम् । कासे श्वासे क्षये चापि हितं पाके भवेत् कटु ॥ * ॥ घृत दुग्धभव ग्राहि शीतल नेत्ररोगहृत् । निहन्ति पित्तदाहास्रमदमूर्च्छाभ्रमानिलान् ॥ * ॥ हयङ्गवीनं ... ह्यस्तनदुग्धोत्थं तत् स्याद्धैयङ्गवी

नकम्। हैयङ्गवीन चक्षुष्य दीपनं रुचिकृत् परम्। बलकृद्बृंहणं वृष्य विशेषाज्ज्वरनाशनम् ॥ * ॥ वर्षादूर्द्ध्वं भवेदाज्य पुराणं तत् त्रिदोषनुत्। मूर्च्छाकुष्ठविषोन्मादापस्मारतिमिरापहम् ॥ यथायथाऽखिलं सर्पि पुराणमधिकं भवेत्। तथा तथागुणै स्वै स्वै रधिकंतदुदाहृतम् ॥ * ॥ योजयेन्नव मेवाज्य भोजने तर्पणे श्रमे। बलक्षये पाण्डुरोगे कामलानेत्ररोगयो ॥ * ॥ राजयक्ष्मणि बाले च वृद्धे श्लेष्मकृते मदे। रोगे सामे विषूच्याञ्च विबन्धे च मदात्यये ॥ ज्वरे च दहने मन्दे नसर्पिर्बहुमन्यते ॥ * ॥ घृत मब्दात् पर पक्व हीनवीर्यत्व माप्नुयात्। तैलं पक्व मपक्वं वा चिरस्थायि गुणाधिकमिति ॥ * ॥ औषधघटित पक्वघृतस्य पूर्णवीर्यत्वं षण्मासपर्यन्त तिष्ठति ॥ घियते जिघर्त्तिवा। घृ०। अञ्जिघृसिभ्य क्त ॥

घृतकरञ्ज। पु। करञ्जभेदे। प्रकीर्य्ये। घृतपर्णके। घियाकरञ्ज इति भाषा ॥

घृतकुमारिका। स्त्री। घृतकुमार्याम् ॥

घृतकुमारी। स्त्री। कुमार्याम्। सहायाम्। तरुण्याम् ॥



घृतदीधिति। पु। अग्नौ ॥

घृतपर्णक। पु। घृतकरञ्जे ॥

घृतपूर। पु। घेवर इति प्रसिद्धे पक्वान्नविशेषे। घृतवरे। पिष्टपूरे॥ यथा। मर्द्दिता समिता क्षीरनालिकेरघृतादिभि.। अवगाह्य घृते पक्त्वा घृतपूरोऽयमुच्यते ॥ घृतपूरो गुरु र्वृष्य. कफकृद्रक्तमांसद। रक्तपित्तहरो-हृद्य स्वादु पित्तहरोऽनिलः ॥ अपि च। क्षीरेण मर्द्दित चूर्णं गोधूमानां सुगालितम्। विस्तार्य सर्पिषा पाच्यं कटाहेऽथ सितान्वितम्॥ घृतपूरोऽयमुद्दिष्ट कर्पूरमरिचान्वित ॥ नालिकेरजस्तु। समिता मर्द्दिता क्षीरे नालिकेरसितार्द्रकै। अवगाह्य घृते पाच्या घृतपूरोऽपर स्मृत ॥ दुग्धजोपि। पाकपिण्डीकृत क्षीरशर्कराचूर्णमिश्रितम्। घृतपूरविनिर्माण कारयेत् स्वल्पसर्पिषि ॥ शालिभवोपि। सुशालिपिष्ट दुग्धन्तु क्वाथित वस्त्रगालितम्। खण्डयुक्त घृते पक्व घृतपूरो भवेदयम्-॥ कशेरुजोपि। कशेरुचूर्णं निक्षिप्य पाकपिण्डीकृतं पय। निर्माण घृतपूराणा शकरासहितं भवेत् ॥ आम्ररसभवोपि। पक्वाम्रस्य घृते तस्य रसस्तवनलपिण्डित। शुद्धशकराया

योऽन्यो घृतपूरो यदृच्छया ॥ चीर माद्य स्वरूपन्दि खण्ड चूर्णं तत स्मृ तम् । योजिते योविशेषो ऽत्र नदा ख्यात्स्वर्गसञ्चित' ॥ घृतपूरो गुरुर्हृ- द्यो हृद्य. पित्तानिलापह । सद्य प्राणप्रदो बल्य सुरुच्योग्निप्रदीपन ॥ शृङ्गाटकमुखाना मध्येवस्वादु घृत पूरक. । विवार्य वस्तुसयोगं तद्गुणा नपिचाहरेदिति ॥

घृतपूग. । पु । } करञ्जवृक्षे ॥
घृतपर्णक । पु । }

घृतमण्डलिका । स्त्री । हंसपदीवृक्षे ॥

घृतमण्डा । स्त्री । वायसुरयी इतिख्या ते वायसोलीवृक्षे ॥

घृतवर. । पु । घृतपूरे । घेवर इति- भाषा ॥

घृता । स्त्री । घृतमण्डायाम् ॥

घृताची । स्त्री । अप्सरोविशेषे ॥

घृताचीगर्भसम्भवा । स्त्री । स्थूलैला याम् ॥

घृताह्व । पु । } सरलद्रवे ॥
घृताह्वय. । पु । }

घृतेली । स्त्री । पिङ्गकपिशायाम् ॥

घृतोद । पु । घृताब्धौ ॥ घृतमुदकय स्य । उत्तरपदस्यचेच्युदकस्योद ॥

घृष्ट । त्रि । घर्षिते । निघृष्टे । घसा इ ति भाषा । पु । गन्धविशेषे ॥ यथा । घृष्टोमलयजो गन्ध सरलश्च नमे रुथा । अगुरुप्रभृतिश्चापि यश्चपङ्क प्रदीयते । घृष्टासघृष्टो गन्धोऽय द्वितीय परिकीर्त्तितइति ॥

घृष्टि । पु । किरौ । वराहे ॥ स्त्री । घर्षणे ॥ स्पर्द्धायाम् ॥ विष्णुक्रान्ताया म् । अपराजितायाम् ॥ वाराह्याम् । चामर आलु इति गौड भाषा ॥ घर्षति । घृषुसङ्घर्षे । क्तिच् ॥

घृष्टिला । स्त्री । चित्रपर्णिकायाम् । पृ श्निपर्ण्याम् ॥

घृष्वि. । पु । वराहे । शूकरे ॥ घर्षति । घृषु० । कृविघृष्विच्छविस्थविकि कीदिविरिति क्रिन्नन्तोनिपातसि द्ध ॥

घेञ्चुलिका । स्त्री । कौञ्चादने । घेंचु इतिगौडभाषा ॥

घोङ्ग । पु । खगान्तरे ॥

घोट' । पु । अश्वे । घोटके ॥ घोटते । घुटपरिवेष्टने । पचाद्यच् ॥

घोटक । पु । घोडा इतिभाषाप्रसिद्धे प शुविशेषे । अश्वे । तुरगे । पीतौ । तुरङ्गमे ॥ अथाऽश्वलक्षणम् । ह । र्षगीवाचिकूटत्रिकहृदयपृथु स्ताम्र तात्वोष्ठजिह्व सूक्ष्मत्वक्केशवाल सुशफगतिमुखो ह्रस्वकर्णौष्ठपुच्छ. । जङ्घाजानूरुवृत्त: समसितदशन श्चा

हसस्थानरूपो वाजी सर्वाङ्गशुद्धो भवति नरपते शत्रुनाशाय नित्यम् ॥ * ॥ अशुभाना रोमावर्त्ता ना लक्षणमाह । अश्रुपातहनुग ण्डहृद्गलप्रोथशङ्खकटिवस्तिजानुषु । मुष्कनाभिककुदे तथागुदे सव्यकुक्षिचरणे तथाऽशुभा ॥ ० ॥ शुभा वर्त्तानाह । ये प्रपाणगलकर्णसंस्थिता पृष्ठमध्यनयनोपरिस्थिता. । ओष्ठसक्थिभुजकुक्षिपार्श्वगा ललाटसहिता' सुशोभना ॥ * ॥ ध्रुवावर्त्तानाह । तेषा प्रपाण एको ललाटकेशेषु च ध्रुवावर्त्ता । रन्ध्रोपरन्ध्र मूर्द्धनि वक्षसि चेति स्मृतौ द्वौ द्वौ ॥ ॥ अश्व.नांवयोज्ञानमाह । षड्भिर्दन्तै सिताभै र्भवति हयशिशुस्तै कषायै र्द्विवर्ष सन्देशै र्मध्यमान्त्यै. पतितसमुचितैस्त्र्यब्दपञ्चाब्दकाश्वा. । सन्देशानुक्रमेण त्रिकपरिगुणिता कालिकापीतशुक्ला काचामक्षीकशङ्खावटचलन मतो दन्तपातञ्चविद्धि ॥ वृत्तिवाराह्याचतुष्षष्ठितमो ध्याय. ॥ ६४ ॥

घोटकारि: । पुं । महिषे ॥

घोटकेङ्गितम् । न । अश्वचेष्टायाम् ॥ सायथा । उत्सर्गो नशुभद मासना परस्य वामेचज्वलन मतोऽपर प्र



शस्तम् । सर्वाङ्गज्वलन मवृद्धिदं हयानां द्ववर्षे दहनकणाश्च धूपन वा ॥ अन्त पुर नाश मुपैति मेढ्रे कोश चयं याम्युदरे प्रदीप्ते । पायौ च पुच्छे च पराजय स्याद्वक्त्रोत्तमाङ्गज्वलने जयश्च ॥ स्कन्धासनांसज्वलनं जयाय वन्धाय पादज्वलन प्रदिष्टम् । ललाटवक्षोक्षिभुजेच धूम पराभवाय ज्वलनजयाय ॥ नासापुटप्रोथशिरोश्रुपातनेत्रे च रात्रौज्वलन जयाय । पलाशताम्रासितकर्बुराणां नित्यं शुकाभस्य सितस्य चेष्टम् ॥ प्रद्वेषो यवसोम्भसां प्रपतनस्वेदोनिमित्त विना कम्पोवा वदनाच्च रक्तपतनं धूमस्यवा सम्भव । अस्वप्नश्च विरोधिनां निशि दिवा निद्रालसध्यानता सादोऽधोमुखता विचेष्टित मिदं नेष्ट स्मृतवाजिनाम् ॥ आरोहण मन्यवाजिनां पर्याणादियुतस्य वाजिन । उपवाह्यतुरङ्गमस्यवा कलुषस्यैव विपन्न शोभना ॥ * ॥ हेषितलक्षणमाह । क्रौञ्चवद्रिपुवधाय हेषित ग्रीवया त्वचलयाच सोन्मुखम् । स्निग्ध मुच्च मनुनादि हृष्टवद्ग्रासरुद्धवदनै श्च वाजिभि' ॥ पूर्णपात्रदधिविप्रदेवतागन्धपुष्पफलकाञ्चनादिकम् । द्रव्य मिष्ट मथवाऽपर भ

बे द्वेषतां यदि समीपतो जय' ॥ भक्ष्यपानखलिनाभिनन्दिन. पथ्यु रौपयिकनन्दिनो ऽथवा । सव्यपार्श्वगतदृष्टयो ऽथवा वाञ्छितार्थफलदास्तुरङ्गमा ॥ वामैश्च पादै रभिताडयन्तो मर्ही प्रवासाय भवन्ति भर्त्तुः । सन्ध्यासु दीप्ता मवलोकयन्तो हेषन्ति चेद्बन्धपराजयाय ॥ अतीव हेषन्ति किरन्ति वालान् निद्रारताश्च प्रवदन्ति यात्राम् । रोमत्यजो दीनखरस्वनाश्च पांशून् ग्रसन्तश्च भयाय दृष्टा ॥ * ॥ समुन्नवद्दक्षिणपार्श्वशायिन पादसमुत्क्षिप्य च दक्षिणस्थिता । जयाय शेषेष्वपि वाहनेष्विदं फलं यथा सम्भवमादिशे द्बुध ॥ आरोहति क्षितिपतौ विनयोपपन्नो यात्रानुगो न्यतुरगं प्रतिहेषितश्च । वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं योऽश्व सभर्त्तु रचिरात् प्रचिनोति लक्ष्मीम् ॥ मुहुर्मुहु र्मूत्रशकृन् करोति न ताड्यमानोप्यऽनुलोमयायी । अकार्यभीतो ऽश्रुविलोचनश्च शिवं न भर्त्तु स्तुरगोऽभिधत्ते ॥ इति वाराह्या ९१ अध्याय. ॥

घोटिका । स्त्री । हस्त्लोवलाम् । बोनी इतिभाषा ॥ घोटिका ऽम्लरसा चोष्णा वातहृत् कफपित्तकृत् । त्वग्दोषशूलगुल्मघ्नी श्वासकासप्रमेहनुत् ॥ शोथे लोचनरोगे च हिता तज्ज्ञै रुदाहृता ॥ हयविशेषे । तुरङ्ग्याम् । चतुरङ्गायाम् ॥

घोणा । स्त्री । नासायाम् ॥ शोथे । अश्वनासिकायाम् ॥ घोणति अनया वा । घुणभ्रमणे । अच् हलश्चेति घञ्वा ॥

घोणी । पु । वराहे । लक्ष्यरोमणि ॥ घोणानासाऽस्त्यस्य । व्री° इनि ॥

घोण्टा । स्त्री । बदर्याम् । गोपघोण्टायाम् । झाडबेरी इति भाषा ॥ पूगवृक्षे ॥ घोणते । घुण° । बाहुलकात् ट ॥ बदरीफलवृक्षयो ॥

घोंकार । पु । नासिकाया शब्दे । घुर्राटा इति भाषा ॥

घोनस । पु । गोनसे । तिलित्ससर्पे ॥

घोर । पु । त्रिपुरान्तके ॥ आङ्गिरसगोत्रोत्पन्ने ऋषिविशेषे ॥ आकाशादिषु स्थूलेषु दु'खप्रकाशका अनवस्थिता रज.प्रधानतया केचिद्विशेषा स्तेच घोरसञ्ज्ञका: ॥ न । विषे ॥ चि । दारुणे । भयानके ॥ हिंसाद्यनेकायासबहुलेक्रूरे ॥ परस्यात्मनश्चपीडाकरे ॥ दुर्गमे ॥ घोरयति । घुरभीमार्थशब्दयो । ण्यन्तादच् ॥ यद्वा । हन्यते । हन° । हन्तेरच् घुरजि

स्यच धातोर्घुरादेश ॥

घोरदर्शन । पु । उलूके ॥ त्रि । भयानकरूपे ॥

घोरपुष्पम् । न । कांस्ये ॥

घोरवासन । पु । } शृगाले । भरि
घोरवासी । पु । } माये ॥

घोरवासितम् । न । भयानकशब्दे ॥

घोरा । स्त्री । रात्रौ ॥ देवदालीलतायाम् ॥ भयानकायाम् ॥ सङ्क्रान्तिविशेषे ॥ रवावुग्रभे सङ्क्रमे भास्करस्यमवेद् घोरनाम्नी सुखी शूद्रवर्गे ॥ राजस्यां मनसोद्दत्तौ ॥

घोलम् । न । मथितेदधनि । दण्डाहते ॥ ससरं निजलं घोलं वातपित्तहरं स्मृतम् ॥ * ॥ मस्तुना रहितं गाल्यं दधिशुभ्रतरे पटे । जीरसैन्धवसम्मिश्रं घोलं घनतरं स्मृतम् ॥ जीरसैन्धवसंयुक्तं घोलं वातप्रनाशनम् । अतीसारे च मन्देग्नौ हितं वच्यं बलप्रदम् ॥

घोलिः । स्त्री । } पत्रशाकविशेषे
घोलिका । स्त्री । } । कुवकालुका
घोली । स्त्री । } याम् ॥

घोष । पु । आभीरपल्ल्याम् ॥ घोषन्तिशब्दो ऽत्र । घुषिर् विशब्दने । हलश्चेतिघञ् ॥ गोपाले ॥ ध्वनौ ॥ अम्बुदनादे ॥ अपामार्गे ॥ घोषके ॥ वाह्यप्रयत्नविशेषे ॥ पु । कांस्ये ॥

घोषणम् । घुषघुष्टौ । घञ् ॥

घोषक । पु । महाकोशातक्याम् । श्वेतघोषके ॥ घोषति । घुषिर्० । पचाद्यच् । स्वार्थे कन् ॥

घोषकाकृति । पु । घोषके ॥

घोषणा । स्त्री । उच्चैर्घुष्टे । लोकविज्ञापनायोच्चैः शब्दिते ॥ यथा । न कर्मणा कनीयस्ता हविर्भि नान्तरात्मन. । इति बाहुमिवोद्धृत्य वेदान्ते घोषणा कृतेति ॥ घुषिर्० । ण्यासश्रन्थो युच् ॥

घोषयित्नु । पु । विप्रे ॥ कोकिले ॥ घोषयति । घुषिर्० । बाहुलकात् इत्नुच् ॥ वन्दिनि ॥

घोषवती । स्त्री । वीणायाम् ॥

घोषा । स्त्री । मधुरिकायाम् ॥ शतपुष्पायाम् ॥ कर्कटशृङ्ग्याम् ॥ कोशातक्याम् । तुरयी तोरजी इति प्रसिद्धे फलशाके ॥

घ्नन् । त्रि । नुदति ॥

घ्राणम् । न । नासिकायाम् । गन्धग्रहणलिङ्गेन्द्रिये ॥ न्यायमते घ्राणेन्द्रियग्राह्योगन्धत्वादौ ॥ त्रि । घ्राते ॥ घ्रायतेऽनेन । घ्रागन्धोपादाने । करणेल्युट ॥ घ्रातेस्मवा । घ्रा० । क्त. नुदविदेति वा नत्वम् ॥

घ्रात

घ्राणतर्पण । पुं । सुगन्धौ ॥

घ्राणदु:खदा । स्त्री । छिक्कन्याम् ॥

घ्रात । त्रि । घ्राणविषयीकृते पुष्पादौ । आत्तगन्धे । आघ्राते । घ्राणे ॥ घ्रायते स्म । घ्रा० । क्त । नुदविदेति पाक्षिकोनत्वाभाव ॥

घ्राति । स्त्री । घ्राणे । नासिकायाम् ॥ घ्राते ॥ घ्राणम् । घ्रा० । क्तिन् ॥

ङ

ङ । पु । विषये ॥ विषयस्पृहायाम ॥ भैरवे ॥ ङ कारे ॥ * ॥ * ॥

इत्यादिगौडकुलोत्पन्नाग्रौचवाणप्रधानोपनामतुलारामभिश्रात्मज श्रीधनपतिमिश्रापरनाम्ना तथा श्रीसद्गुरुकुलावधूतश्रीपरमहंसपरिव्राजका चार्यश्रीमद्धरिश्वरानन्दनाथभारतिमिश्रेण ब्राह्मावधूतश्रीसुखानन्दनाथपर नामधेयेन विरचिते शब्दार्थचिन्तामणौ कवर्गः समाप्तिङ्गत ॥ * ॥ * ॥

सर्वार्थसिद्धौ सर्वेषां सुखानन्देन निर्म्मित ॥
श्रीघासीराममिश्रैस्तु मुद्राशिप्या प्रकाशित. ॥

वैक्रमे १९२१ शरदि । शालिवाहनीये १७८६ शके मार्गशीर्षासितैका दश्यां सुराचार्यवारे लुप्तपुरे श्रीघासीरामकनङ्ग्याखालयो स्वकीयसंस्कृतयन्त्रे वर्णयोजकाध्यक्षकायस्थवंशोद्भव श्रीरामप्रसाददासदृष्ट्या मुद्राङ्कितः ॥